Sri Ravi Varma Sanskrit Series No. 3

# RAGHUVAMSA

*by*

**MAHAKAVI KALIDASA.**

WITH

Prakasika Commentary of

**ARUNAGIRINATHA**

&

Padarthadeepika Commentary of

**NARAYANA PANDITHA**

**Cantos XIII to XIX**

*Editor:*

**SRI K. ACHYUTHA PODUVAL**

RETIRED PROFESSOR OF NYAYA

WARIYAM ROAD, ERNAKULAM

*Sub Editor:*

**SRI C. K. RAMAN NAMBIAR**

RETIRED PRINCIPAL,

SANSKRIT COLLEGE, TRIPUNITHURA.

*Publishers:*

**THE SANSKRIT COLLEGE COMMITTEE**

**TRIPUNITHURA.**

Price Rs. 5·00



श्रीरविवर्मसंस्कृतग्रन्थावली ३

# रघुवंशः

महाकविश्रीकाळिदासप्रणीतः

श्रीमदरुणगिरिनाथविरचितया

प्रकाशिकया

श्रीनारायणपण्डितकृतया

पदार्थदीपिकया च

समन्वितः

सर्गाः १३–१९

सम्पादकः

पण्डितराजः श्री. के. अच्युतप्पोतुवाळ्

उपसम्पादकः

पण्डितराजः श्री. सी. के. रामन् नम्प्यार्

१९५९

पूर्णत्रयीपुरस्थसंस्कृतकलाशालानिर्वाहकसमित्या प्रकाशितः

मूल्यम् रु. ५·००

श्रीपूर्णत्रयीपुरस्थ'राज'मुद्रणालये मुद्रिता ।

# त्रयोदशः सर्गः ।

अथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच ॥ १ ॥

प्रका—इत्थं प्रकृतं भगवदवतारस्य प्रधानं प्रयोजनमुपसंहृत्य "धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" इति नयेन लवणादिकण्टकोद्धारपुरस्सरं धर्मसंस्थापनं त्रिभिः सर्गैर्वर्णयिष्यन्नस्मिन् सर्गे तदुपोद्घातभूतमयोध्यागमनं सीताप्राप्तिफलभूतप्रवासानन्तरसम्भोगवर्णनपुरस्सरं वर्णयति—अथेति । शब्दगुणमात्मनः पदमित्याकाशपदार्थे वाक्यवचनमिति प्रौढिरियम् । गुणज्ञो रत्नाकरादिगुणाभिज्ञः । रत्नाकरशब्देन विस्मयविभावभूतपदार्थजातसमुदितत्वं द्योत्यते । मिथ इति । कपिराक्षससङ्कुलेऽपि विमानोत्सङ्गे क्वचिद्विविक्तावस्थानमुक्तम् । हरिरित्यनेन कृतसुरकार्यतया स्वमायातिरस्करिणीव्यपनयनेनास्य स्वरूपोन्मज्जनमासीदिति द्योतयति । अत एव दिव्यत्वाद् गगनयानौचित्यञ्च ॥

पदा—जागर्ति[1] वाङ्मयीतीरे देवता कापि वाङ्मयी ।
तथाचार्थमयी कापि स्यातां ते मे विभूतये ॥

अथ प्रवासानन्तरसम्भोगवर्णनपुरस्सरमयोध्याप्रयाणं वर्णयितुमुपक्रमते—अथेति । अथ रामाभिधानः स हरिः रत्नाकरं वीक्ष्य मिथः जायाम् इति उवाच । अथ प्रस्थानानन्तरम् । राम इत्यभिधानं नाम यस्य । हरिरित्यनेन कृतसुरकार्यत्वाद् मायाजलाशयादुन्मज्य स्वरूपावस्थानं द्योत्यते । तेन च दिव्यत्वाद्विमानयानोपपत्तिः । मिथः रहसि । "मिथोऽन्योन्यं रहस्यपि" इत्यमरः । अनेन कपिराक्षसादिसङ्कुलेऽपि विमाने कुत्रचित् सम्भोगयोग्यं विविक्तावस्थानमुक्तम् । शब्दगुणम् आत्मनः पदं विमानेन विगाहमानः । शब्दो गुणो यस्य । पदत्रयेण त्रैलोक्यं क्रामतो हरेः शब्दगुणं पदमाकाशम्, पुष्पकेण आकाशं गाहमान इत्यर्थः । "वियद्विष्णुपदम्" इत्याद्यमरः । गुणज्ञः वचनविषयाणां समुद्रसरित्पर्वतादीनां गुणान् जानन्नित्यर्थः । तत्तद्गुणाभिज्ञो हि तद्वचनाधिकारीति भावः ॥

**वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम् ।**
**छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारु[2]तारम् ॥ २ ॥**

**प्रका**—तत्र प्रवासानन्तरसम्भोगप्रकारेषु भोजराजनिरूपितेषु प्रियागमनवार्तादिषु प्रियप्रयोज्यान् वृत्तान्तानुस्मरणादीनाह—वैदेहीति । सम्बोधनेन उचितनन्तवेदनक्लेशसहन-

१ क्वचित् पद्यमिदन्न दृश्यते । २ चारु ।

धैर्यमिति द्योतयन् विरहतप्तामाश्वासयति । किञ्च त्वया अहं मिथ्या दूषितेति हृदये न कार्यं, यतो महाभिजनसम्पन्ना त्वमपि जानासि कुलजातानामसिधारं व्रतमिति च द्योत्यते । आ मलयाद् मलयावधि । अनल्पमिदमन्तरालमित्यर्थः । मत्सेतुनेति मच्छब्देनैतद् द्योत्यते न केवलं भवती मत्कृते महान्तं कृच्छ्रमनुभूतवती, अपित्वहमपि एवंविधमहारम्भव्यापृतः कां कामवस्थामापन्न इति । फेनिलमित्यनेन तदानीमप्यनुपशान्तसेतुबन्धक्षोभत्वमुक्तम् । "फेनादिलच्च" इतीलच् प्रत्ययः । छायापथो नाम ज्योतिश्चक्रवर्ती तिरश्चीनः कुड्याकारः कोऽप्यवकाशः, तञ्च स्वातीपथ इत्याचक्षते । तथा रामायणे—"स नलेन कृतः सेतुः सागरे मकरालये । शुशुभे सुभगः श्रीमान् स्वातीपथ इवाम्बरे" इति । गङ्गाप्रवाह इति वल्लभः । आविष्कृततारतारमिति पाठः । तारमुज्ज्वलम् । इतः प्रभृति कैश्चिच्छ्लोकैर्देशसम्पदुपवर्णनञ्च गिर्यादिरमणीयाख्यानरूपं रत्युद्दीपनम् ॥

पदा—वैदेहीति । वैदेहि तम् अम्बुराशिं पश्य समुद्रमवलोकय । मत्सेतुना मलयाद् आ विभक्तं मत्कृतेन सेतुना मलयाचलपर्यन्तं कृतविभागम् । मर्यादायामाङ् । फेनिलं फेनोऽस्यास्तीति फेनिलः । "फेनादिलच्च" इतीलच्प्रत्ययः । छायापथेन विभक्तं शरत्प्रसन्नम् आविष्कृततारतारम् आकाशम् इव । छायापथो नाम ज्योतिश्चक्रमध्यवर्ती कुड्याकारः कोऽप्यवकाशविशेषः, तञ्च स्वतीपथमाचक्षते । तथा च रामायणे—"स नलेन कृतः सेतुः सागरे मकरालये । शुशुभे सुभगः श्रीमान् स्वातीपथ इवाम्बरे" इति । तमेवाकाशगङ्गेति केचिदाचक्षते । शरदा प्रसन्नमत एव आविष्कृताः प्रकाशिताः ताराः उज्ज्वलाश्च तारा नक्षत्राणि यस्मिन् । अत्रोत्प्रेक्षा ॥

**गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं सङ्क्रमिते तुरङ्गे ।**
**तदर्थमुर्वीमवदारयद्भिः पूर्वैः किलायं परिवर्धितो नः ॥ २ ॥**

प्रका—गुरोरिति । सगरस्य । मेध्ये अश्वमेधार्हे । किलैतिह्ये । इन्द्रेण हृतस्य तुरङ्गस्य कपिलेन हरणकथनं सगरबुध्यनुसारेणेत्यवसेयम् । तथा वा अन्यत्र क्वचित् प्रसिद्धिः । अनेन पूर्वसम्बन्ध उक्तः ॥

पदा—गुरोरिति । अयं नः पूर्वैः किल परिवर्धितः अयमम्बुराशिः किलेत्यैतिह्ये । इदानीं ममास्मिन् सेतुबन्धनप्रशस्तिकथनं लज्जावहमेव, तदलं तत्प्रकारकथनेनेति भावः । यियक्षोः गुरोः मेध्ये तुरङ्गे कपिलेन रसातलं सङ्क्रमिते तदर्थम् उर्वीम् अवदारयद्भिः । यियक्षोः यष्टुमिच्छोः । गुरोः सगरस्य । मेध्ये अश्वमेधार्हे । कपिलेन कपिलवासुदेवेन । यद्यपीन्द्र एव तुरगहर्ता, तथापि कपिलेनेति वचनं सगरपुत्रबुद्ध्यनुसारेण । तदर्थमश्वार्थम् । अवदारयद्भिर्विदारयद्भिः ॥

गर्भं दधत्यर्कमरीचयोऽस्माद्विवृद्धिमत्राश्नुवते वसूनि ।
अविन्धनं ज्योतिरसौ बिभर्ति प्रह्लादनं ज्योतिरजन्यनेन ॥ ४ ॥

प्रका—अथास्य विविधं सकललोकोपकारकत्वमाह—गर्भमिति । अर्कमरीचयो वार्षिकाश्चतुश्शतम् । यथाह—"नवमासधृत"मित्यादि । वसूनि मणिमुक्तादीनि । अविन्धनं वाडवम् । बिभर्ति पोषयति । तदभावे विश्वमपि सन्दहेत् । प्रह्लादनं ज्योतिश्चन्द्रः । अजनि, कर्मणि लुङ् । गर्भमित्यादिना सौभाग्यस्य प्रतीतिः । मरीचीनां क्षीरत्वाद् । विवृद्धिमिति महाभाग्यस्य, अविन्धनमिति माहात्म्यस्य, प्रह्लादनमिति सौम्यतायाः ॥

पदा—अस्य विविधलोकोपकारकत्वमाह—गर्भमिति । अर्कमरीचयः अस्माद् गर्भं दधति । वार्षिक्यश्चतुश्शतं सूर्यरश्मयः अस्मात् समुद्रात् गर्भं दधति बिभ्रति । अनेन सौभाग्यप्रतीतिः । मरीचीनां क्षीरत्वात् । अत्र वसूनि विवृद्धिम् अश्नुवते । वसूनि मणिमुक्तादीनि । अश्नुवते प्राप्नुवन्ति । महाभाग्यवानयमित्यनेन प्रतीयते । असौ अविन्धनं वह्निं बिभर्ति । आप एव इन्धनं यस्य । वडवामुखाग्निमित्यर्थः । बिभर्ति पोषयति । "डुभृञ् धारणपोषणयोः" इति धातुः । तदभावे विश्वमपि दहेदिति भावः । अत्र माहात्म्यस्य प्रतीतिः । अनेन प्रह्लादनं ज्योतिः अजनि । प्रह्लादनं ज्योतिश्चन्द्रः । अजनीति कर्मणि लुङ् । जनितमित्यर्थः । अत्र सौम्यताया प्रतीतिः ॥

तां तामवस्थां प्रतिपद्यमानं स्थितं दश व्याप्य दिशो महिम्ना ।
विष्णोरिवास्यानवधारणीयमीदृक्तया रूपमियत्तया वा ॥ ५ ॥

प्रका—तान्तामिति । लोकप्रसिद्धां प्रलयाद्यवस्थां मौक्तिकचन्द्रादिस्वकार्यरूपामवस्थाञ्च । विष्णुपक्षे मत्स्याद्यवस्थाम् प्रतिपद्यमानमितीदृक्तयाऽनवधारणे हेतुः । स्थितमित्यादि त्वियत्तयाऽनवधारणे । ईदृक्ता इत्थम्भावः । इयत्ता इयत्परिमाणता । अनेनाद्भुतत्वं महत्वञ्चोक्तम् ॥

पदा—तान्तामिति । अस्य रूपम् ईदृक्तया इयत्तया वा अनवधारणीयम् । ईदृक्तया इत्थम्भावेन । इयत्तया इदम्परिमाणतया । अवधारयितुं निर्णेतुमशक्यम् । विष्णोरिवेत्युपमा । ईदृक्तयाऽनवधारणीयत्वे हेतुमाह—तां तामवस्थां प्रतिपद्यमानमिति । प्रलयोद्वेलताद्यवस्थां स्वकार्यभूतमणिमुक्ताद्यवस्थाञ्च । विष्णुपक्षे मत्स्यकूर्माद्यवस्थाम् । इयत्तयाऽनवधारणे हेतुमाह—महिम्ना दश दिशः व्याप्य स्थितमिति । अनेनाद्भुतत्वं महत्वञ्चोक्तम् ॥

नाभिप्ररूढाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥ ६ ॥

प्रका—नाभीति । प्रथमेन दक्षादीनामपि विधातृत्वात् । उचिता अभ्यस्ता । संहृत्य स्वोदरे निक्षिप्य । पुरुषः पुरुषोत्तमः । अधिशेत इति प्रवाहनित्यत्वाद्वर्तमानता । अनेनानश्वरत्वं विश्वाश्रयाश्रितत्वञ्चोक्तम् ॥

पदा—नाभीति । पुरुषः लोकान् संहृत्य अमुम् अधिशेते । पुरुषः पुरुषोत्तमः । संहृत्य स्वोदरे निक्षिप्य । अमुमिति । "अधिशीङ्स्थासां कर्म" इति कर्मसंज्ञा । अस्मिन् शेत इत्यर्थः । अधिशेत इति प्रवाहनित्यत्वाद् वर्तमाननिर्देशः । यदा यदा युगावसानकालः, तदा तदा शेत इत्यर्थः । प्रथमेन, धात्रा संस्तूयमानः मरीच्यादिप्रजापतीनामपि विधात्रा स्वयम्भुवा सम्यक् स्तूयमानः । नाभेः प्ररूढमम्बुरुहमेवासनं यस्य । अनेन ब्रह्मोत्पत्तिरपि तदायत्तेति ध्वन्यते । युगान्ते उचिता अभ्यस्ता योगनिद्रा येन । अनेनास्य महत्तरत्वमनश्वरत्वं विश्वाश्रयाश्रितत्वञ्चोक्तम् ॥

पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः परेभ्यो धर्मोत्तरं मध्यममाश्रयन्ते ॥ ७ ॥

प्रका—पक्षेति । गोत्राः पर्वताः तान् भिनत्तीति गोत्रभिदिन्द्रः । "आत्तगन्धोऽभिभूतस्स्याद्" इति सिंहः । उपप्लवो व्यसनम् । धर्मोत्तरं धर्मप्रधानं, धर्मविजयिनमिति यावत् । तदुक्तम् "तमाश्रयेत परेषामपि भयाद्" इति । मध्यममिति । अत्र कौटिल्यः "अरिविजिगीष्वोर्भूम्यनन्तरः संहतासंहतयोरनुग्रहसमर्थो निग्रहे चासंहतयोर्मध्यमः" इति ॥

पदा—पक्षेति । पक्षच्छिदा गोत्रभिदा आत्तगन्धाः शतशः महीध्राः शरण्यम् एनम् आश्रयन्ते । "सुत्रामा गोत्रभिद्वज्री" इत्यमरः । "आत्तगन्धोऽभिभूतस्स्याद्" इति च । शरण्यं शरणार्हम् । परेभ्यः उपप्लविनः नृपाः धर्मोत्तरं मध्यमम् इव । परेभ्यः शत्रुभ्यः उपप्लवो व्यसनम् । धर्मोत्तरं धर्मप्रधानं, धर्मविजयिनमिति यावत् । मध्यमम् अरेर्विजिगीषोश्चमध्यस्थितं भूम्यनन्तरस्थितमित्यर्थः । "अनुग्रहे सङ्गतानां व्यस्तानाञ्च वधे प्रभुः । मण्डलाद् बहिरेतेषामुदासीनो महाबलः" इत्यादिकामन्दकोक्तलक्षणोपेतमित्यर्थः ॥

रसातलादादिभवेन पुंसा भुवः प्रयुक्तोद्वहनक्रियायाः ।
अस्याच्छमम्भः प्रलयप्रवृद्धं मुहूर्तवक्त्रावरणं[1] बभूव ॥ ८ ॥

१ भ ।

प्रका—रसातलादिति । प्रयुक्तं प्रारब्धम् उद्वहनमुद्धरणं परिणयनञ्च । मुहूर्तं क्षणमात्रं वक्त्रावरणं मुखावगुण्ठनवासः । उद्धरणनिवृत्तौ त्वावरणाभावान्मुहूर्तशब्दः । अत्राम्भसो वक्त्रावरणत्वारोपाद्वरवधूत्वारोपोऽर्थात् प्रतीयत इत्येकदेशविवर्तिरूपकम्, उद्वहनशब्दे तु श्लिष्टपरम्परितम् ॥

पदा—रसातलादिति । अस्य प्रलयप्रवृद्धमच्छमम्भः आदिभवेन पुंसा रसातलात् प्रयुक्तोद्वहनक्रियायाः भुवः मुहूर्तवक्त्रावरणं बभूव । अच्छं निर्मलम् । आदिभवेन पुंसा विष्णुना । प्रयुक्ता प्रारब्धा उद्वहनक्रिया उद्धरणक्रिया विवाहक्रियेति च यस्याः । मुहूर्तं क्षणमात्रं वक्त्रावरणं मुखावगुण्ठनवासः । उद्धरणक्रियानिवृत्तौ तु आवरणाभावान्मुहूर्तपदप्रयोगः । अत्राम्भसो वक्त्रावरणत्वमारोप्यते । तेन च भगवतो भुवश्च वरवधूत्वारोपोऽर्थात् प्रतीयत इत्येकदेशविवर्तिरूपकम्, उद्वहनशब्दे तु श्लिष्टपरम्परितम् ॥

मुखार्पणेषु प्रकृतिप्रगल्भाः स्वयं तरङ्गाधरदानदक्षः ।
अनन्यसामान्यकलत्रवृत्तिः पिबत्यसौ पाययते च सिन्धूः ॥ ९ ॥

प्रका—मुखेति । मुखस्यार्पणेषु स्वभावतो निस्साध्वसाः । अनन्यसामान्या कलत्रेषु वृत्तिर्यस्य । अन्यत्रायुगपद्भाविनोर्मुखपानपायनयोर्बह्वीषु च वृत्तेरत्र यौगपद्येन भावात् । अत्र तरङ्गस्याधररूपणान्मुखशब्देन च श्लिष्टरूपणात् प्रागल्भ्यस्य च आरोपितधर्मत्वाद् अनन्येत्यादिविशेषणाच्च नायकमिथुनारोपः प्रतीयते ॥

पदा—मुखेति । असौ सिन्धूः पिबति पाययते च । सिन्धूः नदीः । मुखार्पणेषु प्रकृतिप्रगल्भाः मुखस्यार्पणेषु प्रकृत्या स्वभावतः प्रगल्भाः धृष्टाः, निस्साध्वसा इत्यर्थः । सखीवचनादिनिरपेक्षा इति यावत् । स्वयं तरङ्गाधरदानदक्षः तरङ्गस्यैवाधरस्य दाने स्वयमेव दक्षः अनन्यसामान्या अनन्यसाधारणी कलत्रेषु वृत्तिर्यस्य । अन्यत्र बह्वीनां मुखपानपायनयोर्यौगपद्याभावादनन्यसाधारणत्वम् । तरङ्गस्याधरत्वरूपणान्मुखस्य श्लिष्टरूपणात् प्रागल्भ्यस्यारोपितधर्मत्वादनन्येत्यादिविशेषणाच्च नायकमिथुनत्वारोपः प्रतीयते ॥

ससत्त्वमादाय नदीमुखाम्भः सम्मीलयन्तो विवृताननत्वात् ।
अमी शिरोभिस्तिमयः सरन्ध्रैरूर्ध्वं वितन्वन्ति जलप्रवाहान् ॥ १० ॥

प्रका—ससत्त्वमिति । तिमयो महामत्स्याः । अमीतिमयः विवृतैराननैः सग्राहादिजन्तुकं नदीमुखेभ्यो जलमादाय पश्चादाननानि संवृतानि कुर्वाणास्तद्वशात् स्वजातिनियतोर्ध्वनाड्या जलस्रोतांस्युत्क्षिपन्तीत्यर्थः । सांयात्रिकाणामस्मिन्नर्थे संवादोऽस्ति ॥

पदा—ससत्त्वमिति । अमी तिमयः विवृताननत्वात् ससत्त्वं नदीमुखाम्भः आदाय सम्मीलयन्तः सरन्ध्रैः शिरोभिः जलप्रवाहान् ऊर्ध्वं वितन्वन्ति । तिमयः महामत्स्याः । "अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः" इति पुराणवचनम् । विवृताननत्वात् विवृताननत्वेन हेतुना । यद्वा ल्यब्लोपे पञ्चमी । विवृताननत्वमवलम्ब्येत्यर्थः । ससत्त्वं नक्रमत्स्यादिजन्तुसहितम् । सम्मीलयन्तः आस्यपिधानं कुर्वन्त इत्यर्थः । सरन्ध्रैः रन्ध्रसहितैः स्वजातिनियतोर्ध्वनाडीकैरित्यर्थः । अमी तिमयो विवृतैराननैर्नदीमुखेभ्यो नक्रादिजन्तुमिश्रं जलमादाय तदाननपिधानं कुर्वाणास्तद्वशात् स्वजातिनियतोर्ध्वनाड्या जलस्रोतांस्युत्क्षिपन्ति, तान् पश्येत्यर्थः । अत्र स्वभावोक्तिः ॥

मातङ्गनक्रैः सहसोत्पतद्भिर्भिन्नान् द्विधा पश्य समुद्रफेनान् ।
कपोलसंसर्पितया य एषां व्रजन्ति कर्णक्षणचामरत्वम् ॥ ११ ॥

प्रका—मातङ्गेति । मातरूपा नक्रा मातङ्गनकाः । शाकपार्थिवादित्वात् समासः । समुद्रशब्दः फेनधावल्यादिप्रतीत्यर्थः । उत्पन्नदशायामेव तथाभवनात् क्षणशब्द उपात्तः ॥

पदा—मातङ्गेति । त्वं समुद्रफेनान् पश्य । सहसा उत्पतद्भिः मातङ्गनक्रैः द्विधा भिन्नान् । मातङ्गरूपैः नक्रैः शाकपार्थिवादित्वात् समासः । ये एषां कपोलसंसर्पितया कर्णक्षणचामरत्वं व्रजन्ति । उत्पतनसमय एव कपोलसंसर्पित्वात् क्षणशब्दः ॥

वेलानिलाय प्रसृता भुजङ्गा महोर्मिविस्फूर्जथुनिर्विशेषाः ।
सूर्यांशुसम्पर्कसमिद्धरागैर्व्यज्यन्त एते मणिभिः फणस्थैः ॥ १२ ॥

प्रका—वेलेति । प्रसृताः उन्मग्नाः । विस्फूर्जथुर्वृद्ध्यतिशयः ॥

पदा—वेलेति । वेलानिलाय प्रसृताः भुजङ्गाः एते फणस्थैः मणिभिः व्यज्यन्ते । वेलानिलं पातुं प्रसृता उन्मग्नाः व्यज्यन्ते अभिव्यज्यन्ते । फणामणिसद्भाव एवैतेषां महोर्मिभ्यो भेद इत्यर्थः । अत एवाह—महोर्मिविस्फूर्जथुनिर्विशेषा इति । विस्फूर्जथुर्वृद्ध्यतिशयः । वक्ष्यति च "ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः" इति । सूर्यांशूनां सम्पर्केण समिद्धः प्रवृद्धो रागो येषाम् ॥

तवाधरस्पर्धिषु विद्रुमेषु पर्यस्तमेतत् सहसोर्मिवेगात् ।
ऊर्ध्वाङ्कुरप्रोतमुखं कथञ्चित् क्लेशादपक्रामति शङ्खयूथम् ॥ १३ ॥

१ तरङ्ग । २ मृ ।

प्रका—तवेति । विद्रुमेषु विद्रुमवनेषु । सहसा अशङ्कितमेव । अत्र विद्रुमवनस्याधरसाम्याच्छङ्खयूथस्य स्मितसाम्यं प्रतीयते ॥

पदा—तवेति । तव अधरस्पर्धिषु विद्रुमेषु ऊर्मिवेगात् सहसा पर्यस्तं शङ्खयूथम् एतत् क्लेशात् कथञ्चिद् अपक्रामति । विद्रुमेषु विद्रुमवनेषु क्लेशात् क्लेशमवलम्ब्य । अपक्रामति अपगच्छति । अत्र हेतुः— ऊर्ध्वाङ्कुरप्रोतमुखमिति । ऊर्ध्वेष्वङ्कुरेषु प्रोतानि मुखानि यस्य । अत्र विद्रुमवनस्याधरसाम्याच्छङ्खयूथस्य मन्दस्मितसाम्यमनुक्तमपि प्रतीयते ॥

प्रवृत्तमात्रेण पयांसि पातुमावर्तवेगाद्भ्रमता घनेन ।
आभाति भूयिष्ठतरं[1] समुद्रः प्रमथ्यमानो गिरिणेव भूयः ॥ १४ ॥

प्रका—प्रवृत्तेति । पयसि पीते तु गुरुत्वान्न तथा भ्रमणमिति मात्रशब्दः प्रयुक्तः । भूयिष्ठतरम् अतिशयेन आभाति ॥

पदा—प्रवृत्तेति । पयांसि पातुं प्रवृत्तमात्रेण आवर्तवेगाद् भ्रमता घनेन समुद्रः गिरिणा भूयः प्रमथ्यमान इव भूयिष्ठतरम् आभाति । पयसि पीते तु तथा भ्रमणं न सम्भवतीति पयांसि पातुं प्रवृत्तमात्रेणेत्युक्तम् । गिरिणा मन्दरेण भूयिष्ठतरम् अतिशयेन आभातीत्यर्थः ॥

दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला ।
आभाति वेला लवणाम्बुराशेः कलङ्करेखामलिनेव[2] धारा ॥ १५ ॥

प्रका—दूरादिति । दूरत्वादयश्चक्रनिभस्येत्यर्थः । तन्वीति धाराकलङ्कसाम्यार्थम् । तदपि दूरत्वकृतम् । कलङ्कश्शस्त्रदोषः । तथा च दण्डी "बिन्दुस्तिलं काकपदं कलङ्क" इत्युपक्रम्य "मालिन्यरेखां तु कलङ्कमाहु"रिति । दक्षिणसमुद्रतीरस्य वक्रसन्निवेशत्वादिदमुक्तम् । अत्र वल्लभपाठः—"निस्त्रिंशकल्पस्य निधेर्जलानामेषा तमालद्रुमराजिनीला । आराद्रालभ्रु विभाति वेला कलङ्करेखामलिनेव धारा" इति ॥

पदा—दूरादिति । लवणाम्बुराशेः वेला आभाति अतीव शोभते । दूराद् अयश्चक्रनिभस्य दूराद्धेतोरयोमयचक्राकारेण प्रतिभासमानस्येत्यर्थः । तन्वी दूरत्वादेव हेतोरतिकृशाकारा । तमालैस्तालीवनराजिभिश्च नीला । कलङ्करेखामलिना धारा इव । कलङ्करेखया रेखाकारेण कलङ्केन शस्त्रदोषेण मलिना । "बिन्दुस्तिलं काकपदं कलङ्कः बिन्दो-

[1] मयम् । [2] धारानिबद्धेव कलङ्करेखा ।

स्तिलो नाम समा निरुक्तिः, तत्काकपादाकृति तत्पदाख्यं कुलिन्यरेखान्तु कलङ्कमाहुः" इति दण्डी। दक्षिणाम्बुनिधेर्हि स्वभावतो वक्ररेखा वेला तमालतालवननिबिडतया कृष्णाकारा च। अत एव चक्रवत् प्रतिभासमानस्य समुद्रस्य शस्त्रदोषदूषिता धारेव भातीत्यर्थः। "निस्त्रिंशकल्पस्य निधेर्जलानामेषा तमालद्रुमराजिनीला। आरादरालभ्रु विभाति वेला कलङ्करेखामलिनेव धारा"— इति वल्लभपाठः॥

वेलानिलः केतकरेणुभिस्ते सम्भावयन्नाननमायताक्षि।
मामक्षमं मण्डनकालहानेर्वेत्तीव बिम्बाधरबद्धतृष्णम् ॥ १६ ॥

प्रका—वेलेति। सम्भावयन्नलङ्कुर्वन् अलकचूर्णस्य मण्डनाङ्गत्वात्। बिम्बाधरबद्धतृष्णत्वात् तत्पानस्य मण्डनेन कालक्षेपमसहमानं वेत्तीवेत्युत्प्रेक्षया नर्मसचिवानुरूपमन्यदप्यनिलोऽनुकूलमाचरतीति द्योत्यते॥

पदा—वेलेति। केतकरेणुभिः ते आननं सम्भावयन् वेलानिलः मां मण्डनकालहानेः अक्षमं वेत्ति इव। सम्भावयन्नलङ्कुर्वन्। आयते अक्षिणी यस्याः। बिम्बाधरे बद्धा तृष्णा यस्य। केतकरेणुभिरलकचूर्णं सम्पादयन्नयं वेलानिलो मामधरपाने मण्डननिमित्तं कालक्षेपमसहमानं वेत्तीवेत्युत्प्रेक्षा। तथा च वेलानिलस्य नर्मसचिवसाम्यं प्रतीयते॥

एते वयं सैकतभिन्नशुक्तिपर्यस्तमुक्तापटलं पयोधेः।
प्राप्ता मुहूर्तेन विमानवेगात् कूलं फलावर्जितपूगमालम् ॥ १७ ॥

प्रका—एत इति। सैकतेति। सिकताकूटाभिघातविदीर्णाभिः शुक्तिभिः पर्यस्तो मौक्तिकप्रकरो यत्रेत्यर्थः। अत्र प्रकरणे गमनक्रमेण वर्णनमित्यवसेयम्॥

पदा—एत इति। एते वयं विमानवेगान्मुहूर्तेन पयोधेः कूलं प्राप्ताः। सुवेलाचलाच्छतयोजनविस्तीर्णं समुद्रं क्षणमिव तीर्त्वा वेलां प्राप्ता इत्यर्थः। सैकतेषु सिकताकूटेषु भिन्नाभिः शुक्तिभिः पर्यस्तानि क्षिप्तानि मुक्तापटलानि मौक्तिकप्रकरा यत्र। वीचीनिचयवेगात्सिकताकूटाभिघातेन विदीर्णाभिः शुक्तिभिः क्षिप्तं मुक्तापटलमित्यर्थः। फलैरावर्जिता पूगमाला क्रमुकनिकरो यत्र॥

कुरुष्व तावत् करभोरु पश्चान्मार्गे मृगप्रेक्षिणि दृष्टिपातम्।
एषा विदूरीभवतः समुद्रात् सकानना निष्पततीव भूमि[1] ॥ १८ ॥

१ त्या।

प्रका—कुरुष्वेति । पश्चान्मार्ग इत्येकं पदम् । गमनवशाद्विदूरीभवतः समुद्राद् भूमिनिष्पतनस्य वर्तमानस्योत्प्रेक्षायामुत्तरोत्तरप्राकट्यं हेतुः । फलन्तु झटितिप्रत्ययः ॥

पदा—कुरुष्वेति । करभोरु मृगप्रेक्षिणि त्वं तावत् पश्चान्मार्गे दृष्टिपातं कुरुष्व । तावत् प्रथमम् । पश्चान्मार्ग इत्येकं पदम् । पृष्ठभाग इत्यर्थः । एषा भूमिः विदूरीभवतः समुद्रात् सकानना निष्पतति इव । विमानवेगाज्झटिति विदूरीभवतः समुद्रात् सकाशाद् भूमिः काननैः सह निष्पततीवेत्युत्प्रेक्षायामुत्तरोत्तरं भुवः प्रकाशमानत्वं हेतुः । फलन्तुः वेगातिशयप्रतीतिः । सूक्ष्मदर्शिनान्त्वयमर्थः स्वानुभवसिद्धः ॥

क्वचित् पथा सञ्चरते सुराणां क्वचिद्घनानां पततां क्वचिच्च ।
यथाविधो मे मनसोऽभिलाषः प्रवर्तते पश्य तथा विमानम् ॥ १९ ॥

प्रका—क्वचिदिति । सञ्चरते, "समस्तृतीयायुक्ताद्" इति तङ् । अभिलाषस्तत्तद्रमणीयदर्शनकुतूहलम् । विमानप्रवृत्तिं पश्येत्येकवाक्यतामिच्छन्ति केचित् । अन्ये तु पश्येत्यद्भुतद्योतकं निपातं मन्यन्ते ॥

पदा—क्वचिदिति । मे मनसः अभिलाषः यथाविधः, विमानं तथा प्रवर्तते । पश्य । तत्तद्रमणीयदेशदर्शनकुतूहलिनो मम अभिलाषं विदित्वा विमानं तत्र तत्र प्रवर्तते । विचित्रतरमेतदिति पश्येत्यनेन द्योत्यते । क्वचित् सुराणां पथा स्वर्गमार्गेण । सञ्चरत इत्यत्र "समस्तृतीयायुक्ताद्" इत्यात्मनेपदम् । क्वचिद् घनानां पथा, सञ्चरत इत्यनुषज्यते । क्वचित् पततां पक्षिणाञ्च ॥

असौ महेन्द्रद्विपदानगन्धिस्त्रिमार्गगावीचिविमर्दशीतः ।
आकाशवायुर्दिनयौवनोत्थानाचामति स्वेदलवान् मुखे ते ॥ २० ॥

प्रका—अत्र सुरपथसञ्चारं वर्णयति—असाविति । दिनयौवनं मध्याह्नः । आचमनारोपेण धन्यता वायोर्ध्वन्यते ॥

पदा—अथ प्रथमोक्तं सुरपथसञ्चारं वर्णयति—असाविति । असावाकाशवायुः ते मुखे दिनयौवनोत्थान् स्वेदलवान् आचामति । दिनयौवनं मध्याह्नः । आचमनोपचारेण धन्योऽयं वायुरिति ध्वन्यते । महेन्द्रद्विपस्य दानगन्धो मदजलगन्धोऽस्यास्तीति तथा । त्रिमार्गगाया गङ्गाया वीचीनां विमर्देन सम्मर्देन शीतः ॥

करेण वातायनलम्बितेन स्पृष्टस्त्वया चण्डि कुतूहलिन्या ।
आमुञ्चतीवाभरणं द्वितीयमुद्भिन्नविद्युद्वलयो घनस्ते ॥ २१ ॥

प्रका—घनपथसञ्चारं वर्णयति—करेणेति । लम्बितेन प्रसारितेन । वलयो मण्डलम् । ततश्चाभरणशब्देन वलय उक्तः । सविद्युतं मेघं दृष्ट्वा रामः स्त्र्यन्तरसंयुक्त इति कुपिता सीता परीक्षार्थं कुतूहलेन करं प्रसारितवतीति रामेण चण्डीत्यभिहितम् ॥

पदा—घनपदसञ्चारमाह—करेणेति । चण्डि त्वया वातायनलम्बितेन करेण स्पृष्टः उद्भिन्नविद्युद्वलयः घनः ते द्वितीयम् आभरणम् आमुञ्चतीव । चण्डि अत्यन्तकोपने । असिताकारं घनं विद्युत्सहितमवलोक्य सीताया मनसि रामः काञ्चन काञ्चनाभां कान्तामालिङ्ग्यावस्थित इति वर्णसाम्याद् भ्रमो जातः । अत एव कोपवशात् सहसा विमानवातायनद्वारेण करप्रसारणम् । रामेण तु तद्विदित्वा सस्मितं चण्डीति सम्बोधनं कृतमित्यवसेयम् । लम्बितेन प्रसारितेन । उद्भिन्ना उद्भूता वलयाकारा विद्युद्यस्मात् । अनेनाभरणस्यापि वलयत्वं सूचितम् । कुतूहलिन्या परीक्षायां कृतकवत्या ॥

अमी जनस्थानमपोढविघ्नं मत्वा समारब्धनवोटजानि ।
अध्यासते चीरभृतो यथास्वं चिरोज्झितान्याश्रममण्डलानि ॥ २२ ॥

प्रका—अथ पक्षिपथवर्ती भूलोकगतान् विशेषाननुसन्धत्ते—अमी इति । जनस्थानं प्राङ्मुनीनामावासः । तच्च पश्चात् खरादिभिरुत्सादितम्[१] । समारब्धानि, न तु निर्वृत्तानि । अत्र हेतुः—नवान्यचिरप्रवृत्तानि उटजानि येष्विति । चीरभृतो मुनयः । यथास्वं, वीप्सायां यथाशब्दः । स्वं स्वमित्यर्थः । अतस्तेषां स्नेहो ध्वन्यते । चिरोज्झितानीत्युत्कण्ठा ॥

पदा—अथ पतगपथवर्ती भूलोकगतान् विशेषानाह—अमी इति । अमी चीरभृतः जनस्थानम् अपोढविघ्नं मत्वा चिरोज्झितानि आश्रममण्डलानि यथास्वम् अध्यासते । चीरभृतो मुनयः । जनस्थानं प्राङ्मुनीनामाश्रमः, पुनश्च खरदूषणादिभिरुत्सादितत्वात्तेषामावासो जातः । यथास्वमिति । वीप्सायां यथाशब्दः । स्वं स्वमित्यर्थः । नवानि अचिरप्रवृत्तानि उटजानि येषु ॥

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥ २३ ॥

प्रका—इतः परमतीतवियोगदुःखानुसन्धानपुरस्सरं प्रदेशान् दर्शयति—सैषेति । विचिन्वता अन्विष्यता । भ्रष्टं पतितम् । एकमसहायम् । अनेनापि शोच्यता ध्वन्यते । विश्लेषदुःखादिति । विरहदुःखे हि भूमिपातमौनादयो भवन्ति । उत्प्रेक्षया तु हतशोभत्वं ध्वन्यते ॥

---

१ खरादीनामित्यर्थः ।

पदा—अथ कतिपयैः श्लोकैरतीतवियोगदुःखानुसन्धानपुरस्सरं तदनुगुणानि प्रदेशान्तराणि दर्शयन्नाह—सैषेति। एषा सा स्थली। एषेति सहस्तनिर्देशं वचनम्। यत्र त्वां विचिन्वता मया उर्व्यां भ्रष्टं पतितम् एकमसहायं, चिरपरिचितेन नूपुरान्तरेणापि वियुक्तमित्यर्थः। अनेन शोच्यता ध्वन्यते। बद्धमङ्गीकृतं मौनं येन। त्वच्चरणारविन्दविश्लेषदुःखाद् इव, विरहदुःखे हि भूमिपतनमौनादयो भवन्ति। उत्प्रेक्षया शोभाराहित्यं ध्वन्यते॥

त्वं रक्षसा भीरु यतोऽपनीता तं मार्गमेताः कृपया लता मे।
अदर्शयन् वक्तुमशक्नुवत्यः शाखाभिरावर्जितपल्लवाभिः ॥ २४ ॥

प्रका—त्वमिति। भीर्विति "संज्ञापूर्वको विधिरनित्य" इति ह्रस्वगुणाभावः। अनेन रक्षोनामग्रहणमपि भयस्वभावत्वाद्या न सहसे सा कथं तद्दर्शनादि सोढवतीति सीतादुःखानुसन्धानादि द्योत्यते। यतो येन। लतानामेवम्भाव उत्प्रेक्षित इति वल्लभः। सत्य इति दक्षिणावर्तः। सन्ति हि रामायणेऽपि तथा प्रयोगाः। प्रागप्युक्तम् "अकरोत् पृथिवीरुहानपि" इत्यादि॥

पदा—त्वमिति। हे भीरु त्वं रक्षसा यतः अपनीता, एता लता आवर्जितपल्लवाभिः शाखाभिः कृपया मे तं मार्गम् अदर्शयन्। तादृशोऽभिभवः कथं त्वया सोढ इति सम्बुद्ध्या ध्वन्यते। "संज्ञापूर्वको विधिरनित्यः" इति ह्रस्वस्य गुणाभावः। यतः येन मार्गेण। सार्वविभक्तिकस्तसिः। उत्पतनसमये रक्षोरथसम्बन्धेन दक्षिणस्यां दिशि प्रणतत्वाद्दक्षिणां दिशमेव तेन नीतेति मया ज्ञातमिति भावः। अथवा लता एव कृपया दर्शयामासुरित्यर्थः। उक्तञ्च पूर्वम् "अकरोत् पृथिवीरुहानपि" इति। अत्र लतानां शरीरत्वं शाखानां हस्तत्वं पल्लवानामङ्गुलीत्वञ्च प्रतीयते॥

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम्।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥ २५ ॥

प्रका—मृग्यश्चेति। दर्भेत्यादिना शोकानुभावकथनम्। अगतिज्ञं गत्यनभिज्ञम्। उत्पक्ष्मराजित्वेन गगनावलोकित्वमुक्तम्॥

पदा—मृग्यश्चेति। मृग्यः च तव अगतिज्ञं मां समबोधयन्। न केवलं लता इत्यर्थः। गतिं न जानातीत्यगतिज्ञः, तम्। दर्भाणामङ्कुरेषु निर्व्यपेक्षा इति शोकानुभावः। उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां दिशि व्यापारयन्त्यः। उद्गतपक्ष्मराजित्वेनोर्ध्वगमनं, दक्षिणस्यान्दिशीत्यनेन तद्दिग्गमनञ्च बोधयामासुरित्यर्थः॥

एतद्गिरेर्माल्यवतः पुरस्तादाविर्भवत्यम्बरलेहि[1] शृङ्गम् ।
नवं पयो यत्र घनैर्मया च त्वद्विप्रयोगाश्रु समं प्रवृष्टम्[2] ॥ २६ ॥

प्रका—एतदिति । सममिति कालतः प्रमाणतश्च ॥

पदा—एतदिति । माल्यवतः गिरेः शृङ्गमेतत् पुरस्ताद् आविर्भवति । गमनवशात् क्रमेण प्रकाशीभवति । अम्बरलेहि । अतीवोन्नतमित्यर्थः । यत्र घनैः नवं पयः मया त्वद्विप्रयोगाश्रु च समं प्रवृष्टं विसृष्टम् । सममिति क्रियाविशेषणम् । कालतः प्रमाणतश्च तुल्यमित्यर्थः ॥

गन्धश्च धाराहतपल्वलानां कादम्बमर्धोद्गतकेसरञ्च ।
स्निग्धाश्च केकाः शिखिनामभूवन्[3] यस्मिन्नसह्यानि विना त्वया मे ॥ २७ ॥

प्रका—गन्ध इति । पल्वलसौरभं प्रागुपपादितम् । असह्यानि । "नपुंसकमनपुंसकेन" इत्यादिना नपुंसकैकशेषः । विरहे प्रकृतेऽपि विनाशब्दोपादानं त्वत्सन्निधौ यान्यत्यन्तानुकूलानि तान्येव तदा तथेति द्योतयितुम् ॥

पदा—गन्ध इति । यस्मिन् त्वया विना मे धाराहतपल्वलानां गन्धः अर्धोद्गतकेसरं कादम्बञ्च शिखिनां स्निग्धाः केकाश्च असह्यानि अभूवन् । त्वया विना, वर्तमानस्येति शेषः । धाराभिः वर्षधाराभिः आहतानां सिक्तानामित्यर्थः । पल्वलानां गन्धश्च । तस्य मनोहरत्वं "करीव सिक्त"मित्यत्रोक्तम् । असह्यानीत्यत्र "नपुंसकमनपुंसकेन" इत्यादिना नपुंसकैकशेषत्वान्नपुंसकत्वम् । यानि त्वया सह वर्तमानस्य मे मनोहराण्यासन्, तानि सर्वाणि त्वद्विरहे विपरीतानि जातानीति द्योतयितुं प्रकृतस्यापि विरहस्य पुनरुपादानम् ॥

पूर्वानुभूतं स्मरता च रात्रौ कम्पोत्तरं भीरु तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि मया कथञ्चिद्घनगर्जितानि ॥ २८ ॥

प्रका—पूर्वेति । स्मरता च यत्रेति पाठः । यत्रेत्यध्याहारो वा कर्तव्यः । कम्पो भयस्यानुभावः । भीरित्याश्रयप्रकृतिरुक्ता । कथञ्चिदिति । सङ्कल्पसमागमादिभिरित्यर्थः ॥

पदा—पूर्वेति । भीरु रात्रौ तव कम्पोत्तरं पूर्वानुभूतम् उपगूढं स्मरता च मया गुहाविसारीणि घनगर्जितानि कथञ्चिदतिवाहितानि नीतानि । सङ्कल्पसमागमादिभिरपि कथञ्चिदेवातिवाहितानि । यत्रेत्यर्थादायाति ॥

१ खि । २ विसृ । ३ नां बभूवुर्य ।

आसारसिक्तक्षितिबाष्पयोगान्मामक्षिणोद्यत्र विभिन्नकोशैः ।
विडम्ब्यमाना नवकन्दलैस्ते विवाहधूमारुणलोचनश्रीः ॥ २९ ॥

प्रका—आसारेति । बाष्पहेतुत्वादासारस्य प्राथमिकत्वं गम्यते । बाष्पश्च धूमाभासं किञ्चिद्वस्तु । अक्षिणोद्बाधत । विभिन्नकोशैर्विगळितकोशावस्थैः । विडम्ब्यमानाऽनुक्रियमाणा । पञ्चम्या विडम्बनायां हेतुत्वमुक्तम् ॥

पदा—आसारेति । यत्र नवकन्दळैः आसारसिक्तक्षितिबाष्पयोगाद् विडम्ब्यमाना ते विवाहधूमारुणलोचनश्रीः माम् अक्षिणोत् । कन्दळैः वर्षोद्भवैरीषदरुणैः पुष्पविशेषैः असारशब्देन प्राथमिकं वर्षं विवक्षितम् । अन्यस्य बाष्पोद्गमहेतुत्वाभावात् । बाष्पस्तु धूमाकारो वस्तुविशेषः । विडम्बनमनुकरणम्, विवाहधूमसम्पर्कादरुणयोः । अक्षिणोद् अबाधत । विभिन्नः कोशः कुड्मळावस्था येषाम्, विकसितैरित्यर्थः । सदृशदर्शनाचादृशलोचनस्मरणं, तेन च वियोगखेदाधिक्यम् ॥

उपान्तवानीरवनोपगूढान्यालक्ष्यपारिप्लवसारसानि ।
दूरावतीर्णा पिबतीव खेदादमूनि पम्पासलिलानि दृष्टिः ॥ ३० ॥

प्रका—उपान्तेति । आलक्ष्याः समन्ताद्दृश्याः पारिप्लवाश्चञ्चलाः सारसा येषु । दूरावतरणखेदात् पिबतीवेति हेतुफलोत्प्रेक्षायां सादरावलोकनं हेतुः, वैतृष्ण्यभावः प्रत्याय्यः ॥

पदा—उपान्तेति । दृष्टिः दूरावतीर्णा खेदाद् अमूनि पम्पासलिलानि पिबति इव । अत्र दूरावतरणं खेदोत्प्रेक्षायां हेतुः खेदस्तु पानोत्प्रेक्षायाम् । उत्प्रेक्षाद्वयेन तु सादरावलोकनं ध्वन्यते । उपान्ते यानि वानीरवनानि तैरुपगूढानि आदरातिशयादालिङ्ग्यमानानीव दृश्यमानानि । आलक्ष्यास्समन्ताद्दृश्याः पारिप्लवाश्चञ्चलाश्च सारसाः पक्षिविशेषा येषु ॥

अत्राऽवियुक्तानि रथाङ्गनाम्नामन्योन्यदत्तोत्पलकेसराणि ।
द्वन्द्वानि दूरान्तरवर्तिना ते मया प्रिये सस्पृहमीक्षितानि ॥ ३१ ॥

प्रका—अत्रेति । अवियुक्तानीति सम्भोगाधिकारः । अन्योन्येत्यादिसम्भोगः । दूरमन्तरं यस्य तस्मिन् देशे वर्तमानेनेति तेभ्यो व्यतिरेक उक्तः । सस्पृहं वयमपि कदाचिदेवं भवामेति ॥

पदा—अत्रेति । प्रिये अत्र ते दूरान्तरवर्तिना मया रथाङ्गनाम्नाम् अवियुक्तानि द्वन्द्वानि सस्पृहम् ईक्षितानि । अत्र पम्पासलिले । दूरमन्तरं यस्य तस्मिन् देशे वर्तमानेन । अनेन चक्रवाकमिथुनेभ्यो व्यतिरेक उक्तः । सस्पृहं वयमपि कदाचिदेवं भवेमेति बुद्धया । अन्योन्यदत्तोत्पलकेसराणि परस्परदत्तसरोजकिञ्जल्कानि । अनेन सम्भोगान्तराण्युपलक्षितानि ॥

इमां तटाशोकलताञ्च तन्वीं स्तनाभिरामस्तबकावनम्राम् ।
त्वत्प्राप्तिबुद्धया परिरब्धुकामः सौमित्रिणा सास्र[1]महं निषिद्धः ॥ ३२ ॥

प्रका—इमामिति । लताविशेषणे भ्रमहेतू । त्वत्प्राप्तिबुद्धया त्वं दैवाल्लब्धेति बुद्धया । अथवा त्वत्परिरम्भणबुद्धया । परिरब्धुकामः प्रसारितभुजद्वय इत्यर्थः । सास्रमिति । मद्दशादर्शनदूनेनेत्यर्थः । निषिद्धः आर्य नेयमार्येति ॥

पदा—इमामिति । इमां तटाशोकलतां त्वत्प्राप्तिबुद्धया परिरब्धुकामः अहं सौमित्रिणा सास्रं निषिद्धः । तत्प्राप्तिबुद्धया दैवात्त्वं लब्धेति बुद्धया । त्वत्सङ्गम एवायमिति बुद्धया वा । तन्वीं कृशां स्तनवदभिरामैः स्तबकैरवनम्राञ्च । आभ्यां विशेषणाभ्यां भ्रमे हेतुरुक्तः ॥

अमूर्विमानान्तविल[2]म्बिनीनां श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम् ।
प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो गोदावरीसारसपङ्क्तयस्त्वाम् ॥ ३३ ॥

प्रका—अमूरिति । त्वां प्रत्युद्व्रजन्तीवेत्युत्प्रेक्षया तत्रत्येषु जङ्गमस्थावरेषु देव्याः प्रीतिविस्रम्भं द्योतयति ॥

पदा—अमूरिति । अमूः गोदावरीसारसपङ्क्तयः त्वां प्रत्युद्व्रजन्ति इव । अत्र प्रत्युद्गमनोत्प्रेक्षया चिरकालपरिचयजातविस्रम्भातिशयो द्योत्यते । विमानान्तविलम्बिनीनां काञ्चनकिङ्किणीनां स्वनं श्रुत्वा खम् उत्पतन्त्यः ॥

एषा त्वया पेल[3]वमध्ययाऽपि घटाम्बुसंवर्धितबालचूता ।
आ[4]क्रेदयत्युन्मुखकृष्णसारा दृष्टा चिरात् पञ्चवटी मनो मे ॥ ३४ ॥

प्रका—एषेति । पेलवमध्ययेति । सर्वाङ्गीणस्यापि सौकुमार्यस्य तनुत्वान्मद्ध्य एव सातिशयत्वादियमुक्तिः । अपिशब्दो वात्सल्यं द्योतयति । आक्रेदयति द्रावयति । कृष्णसारेष्वपि तत्संवर्धितत्वात् प्रीतिः । तेषामुन्मुखत्वञ्च विमानकिङ्किणीकणकृतमवसेयम् ॥

---

१ शुर । २ र । ३ श । ४ नन्द ।

पदा—एषेति । एषा पञ्चवटी मे मनः आक्लेदयति आर्द्रीकरोति । पेलवमध्यया अपि त्वया घटाम्बुसंवर्धितबालचूता । पेलवं कृशं मध्यं यस्याः । "पेलवं विरलं तनु" इत्यमरः । तथात्वेऽपि बालचूतवर्द्धनं वात्सल्यातिशयात् । उन्मुखाः किङ्किणीनिस्वानश्रवणादेवोर्ध्वमुखाः कृष्णसारा यत्र । कृष्णसारेष्वपि तद्वर्धितत्वादौत्सुक्यं द्रष्टव्यम् । चिराद्दृष्टेत्यौत्सुक्यातिशयहेतुः ॥

अत्रानुगोदं मृगयानिवृत्तस्तरङ्गवातेन विनीतखेदः ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्तम् ॥ ३५ ॥

प्रका—अत्रेति । अनुगोदमित्यव्ययीभावः । गोदावरीसमीप इत्यर्थः । मूर्धेतिपर्यन्तमभूवमित्यध्याहृतक्रियमेकं वाक्यम् । सुप्तमितिपर्यन्तमन्यत्[1] । सुप्त इति पाठे स्मरामीति वाक्यमध्ये वाक्यान्तरम् । तां सुप्तिं स्मरामीत्यर्थः ॥

पदा—अत्रेति । अहमत्र मृगयानिवृत्तः अनुगोदं वानीरगृहेषु रहः त्वदुत्सङ्गनिषण्णमूर्धा सुप्तिं स्मरामि । मृगयायास्सकाशान्निवृत्तः । अनुगोदं गोदावरीसमीपे । त्वदुत्सङ्गनिषण्णमूर्धेति तत्कालविशेषणं स्वापक्रियाविशेषणत्वेन च पर्यवस्यति । तथा तरङ्गवातेन विनीतखेदः । तत्कालविशेषणत्रयेण निद्रायाः सौख्यमुक्तम् । इत्थं मद्गुरोरुपदेशः । त्वदुत्सङ्गनिषण्णमूर्द्धा अभूवमित्याद्यं वाक्यम् । वानीरगृहेषु सुप्तिं स्मरामि इत्यादि द्वितीयं वाक्यमिति पूर्वव्याख्यातॄणां मतम् । अत्र पूर्वानुभूतविरहवर्णनेनानुभूयमानस्य सुखाधिक्यं ध्वन्यते । वक्ष्यति च "प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखीभवन्ति" इति ॥

भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार ।
तस्याविलाम्भःपरिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥ ३६ ॥

प्रका—भ्रूभेदेति । नहुषभ्रंशनं महाभारतादवगन्तव्यम् । आविलेत्यादिना लोकानुग्रहपरत्वं ध्वनितम् । दिव्यस्थानापेक्षया भौम इत्युक्तम् ॥

पदा—भ्रूभेदेति । अयं तस्य मुनेः भौमः स्थानपरिग्रहः । दिव्यस्थानापेक्षया भौम इत्युक्तम् । स्थानपरिग्रहः परिगृहीतं स्थानम् । तपोवनमित्यर्थः । विशेषणाभ्यामगस्त्यत्वसिद्धिः । यः नहुषं भ्रूभेदमात्रेण मघोनः पदात् प्रभ्रंशयाञ्चकार । अत्रानुपयोगव्यवधानं चिन्त्यमिति "तं पातयतां प्रथममास" इत्यत्रोक्तम्—

[1] मृगयानिवृत्यादीनां सुप्तिस्मरणसमानकालिकत्वाभावाद्वाक्यभेद आश्रितः ।

नहुषो नाम राजर्षिः पुरा परमधार्मिकः ।
पुरुहूतपदं प्राप्तः पुरुभिः पुण्यसञ्चयैः ॥ १ ॥

स शचीं प्रार्थयामास भव भार्येति सादरम् ।
बहुशः प्रार्थिता सा तु चोदिता नीतिशालिना ॥ २ ॥

सुराचार्येण, तं प्रोचे सस्मिता मधुराक्षरम् ।
यदि त्वमागतो भूया विप्रैः कुम्भोद्भवादिभिः ॥ ३ ॥

उद्धृतं वाहमारुह्य सत्वरं मदुपान्तिकम् ।
तर्हि भार्या भविष्यामि तव, नैवात्र संशयः ॥ ४ ॥

एवमुक्तस्तया साध्व्या नहुषो हृतमानसः ।
तथैव गन्तुमारेभे विह्वलः काममार्गणैः ॥ ५ ॥

वाहनस्य पुरोभागे वामनागस्त्यसम्भृते ।
लम्बमानेऽस्य चरणौ पेततुर्मुनिमूर्धनि ॥ ६ ॥

ततो राजाऽस्य शापेन वाहनात् पतितः क्षणात् ।
वाहसत्वमुपायातो जगाम धरणीतलम् ॥ ७ ॥

इति श्रीमहाभारतप्रसिद्धायाः कथायाः सङ्क्षेपः । आविलस्याम्भसः परिशुद्धौ हेतोः । उक्तञ्च "प्रससादोदयादम्भः कुम्भयोनेः" इति ॥

त्रेताग्निधूमाग्रमुदग्रकीर्तेस्तस्येदमाक्रान्तविमानमार्गम् ।
घ्रात्वा हविर्गन्धि रजोविमुक्तः समश्नुते मे लघिमानमात्मा ॥ ३७ ॥

प्रका—त्रेतेति । "अथ त्रेता गार्हपत्यादित्रये द्वितीये च युग" इति केशवः । त्रेता चासावग्निश्चेति समासः । आक्रान्तेत्याद्यघ्राणसौकर्यार्थम् । उदग्रकीर्तेरिति रजोविमोचने हेतुः । हविर्गन्धीति हृद्यतायाम् । लघिमानमिति सत्त्वोद्रेकात् । "सत्त्वं लघु प्रकाशक"मिति साङ्ख्याः । आत्मा बुद्धिः । अन्तःकरणं प्रसीदतीत्यर्थः ॥

पदा—त्रेताग्नीति । मे आत्मा तस्य इदं त्रेताग्निधूमाग्रं घ्रात्वा रजोविमुक्तः लघिमानं समश्नुते । तस्यागस्त्यस्य । त्रेताग्नेरग्नित्रयस्य । "त्रेता त्वग्नित्रये युग" इत्यमरः । रजसा रजोगुणेन विमुक्तः । अत एव लघिमानं समश्नुते प्राप्नोति । सत्त्वगुणं प्राप्नोतीत्यर्थः । आक्रान्तः प्राप्तो विमानमार्गो येन । अनेनाघ्राणसौकर्यमुक्तम् । हविषो गन्धोऽस्यास्तीति हविर्गन्धि । अनेन तात्कालिकं सुखञ्च ॥

एतन्मुनेर्मानिनि माण्डकर्णेः पञ्चाप्सरो नाम विहारवारि ।
आभाति पर्यन्तवनं विदूरान्मेघान्तरालक्ष्यमिवेन्दुबिम्बम् ॥ ३८ ॥

प्रका—एतदिति । मानिनीति । प्रसङ्गागतस्त्र्यन्तराप्सरस्सङ्कीर्तनेनापि त्वं कुप्यसीत्युपालम्भपरमेतत् । माण्डकर्णिरिति नाम । विहारवारि क्रीडासरः । अत्र रामायणवचनम् "इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम् । निर्मितं तपसा तेन मुनिना माण्डकर्णिना" इति । पर्यन्ते वनं यस्य ॥

पदा—एतदिति । मानिनि एतन्माण्डकर्णेः मुनेः पञ्चाप्सरः नाम विहारवारि दूरादाभाति । प्रसङ्गागतानामप्सरःस्त्रीणां कीर्तनमात्रेण त्वं कुप्यसीति उपालम्भः सम्बुद्ध्या ध्वन्यते । तासामपि स्त्रीत्वात् । माण्डकर्णिरिति नाम । विहारवारि क्रीडासरः । अत्र रामायणवचनम् । "इदं पञ्चाप्सरो नाम तटाकं सार्वकालिकम् निर्मितं तपसा तेन मुनिना माण्डकर्णिना" इति । पर्यन्ते वनं यस्य । अत एव मेघान्तरालक्ष्यमिन्दुबिम्बमिवेत्युत्प्रेक्षा । आलक्ष्यं दृश्यम् ॥

पुरा स दर्भाङ्कुरमात्रवृत्तिश्चरन्मृगैः सार्धमृषिर्मघोना ।
समाधिभीतेन किलोपनीतः पञ्चाप्सरोयौवनकूटबन्धम् ॥ ३९ ॥

प्रका—पुरेति । वृत्तिर्जीविका । समाधिस्तपः । किलेतिह्ये । पञ्चाप्सरो यौवनमेव कूटबन्धं कूटयन्त्रबन्धमित्यर्थः । "उन्माथः कूटयन्त्रं स्याद्" इति सिंहः । अनेनापि मृगव्यवहारप्रतीतिः ॥

पदा—पुरेति । पुरा दर्भाङ्कुरमात्रवृत्तिः मृगैः सार्धं चरन् स ऋषिः समाधिभीतेन मघोना पञ्चाप्सरोयौवनकूटबन्धं नीतः किल । दर्भाङ्कुरमात्रेण वृत्तिर्जीवनम् यस्य । मृगसमाधिसूचकमिदं विशेषणम् । समाधिस्तपस्तस्माद्भीतेन । पञ्चानामप्सरसां यौवनमेव कूटबन्धं कूटयन्त्रमित्यर्थः । अनेन मृगसमाधिः । "उन्माथः कूटयन्त्रं स्याद्" इति सिंहः । कूटयन्त्रेण हि वनचरैर्मृगा गृह्यन्ते । किलेतिह्ये । उक्तञ्च श्रीरामायणे । "प्रधानाप्सरसः पञ्च विद्युच्चलितवर्चसः । रमयन्ति तपोयोगं मुनिं यौवनमास्थिताः" इति । अस्य गतिर्मघोना निषिद्धेत्यर्थः ॥

तस्यायमन्तर्हितसौधभाजः प्रसक्तसङ्गीतमृदङ्गघोषः ।
वियद्गतः पुष्पकचन्द्रशालाः क्षणं प्रतिश्रुन्मुखराः करोति ॥ ४० ॥

१ शात ।

प्रका—तस्येति । अन्तर्हितं प्रभावेन जलेन वा । प्रसक्तमविच्छिन्नं यत्सङ्गीतं तत्सम्बन्धी मृदङ्गघोषः । "चन्द्रशाला शिरोगृहं" "स्त्री प्रतिश्रुत् प्रतिध्वान" इति सिंहः ॥

पदा—तस्येति । अयं तस्य प्रसक्तसङ्गीतमृदङ्गघोषः वियद्गतः क्षणं पुष्पकचन्द्रशालाः प्रतिश्रुन्मुखराः करोति । प्रसक्तस्य अविच्छिन्नस्य सङ्गीतस्य सम्बन्धी मृदङ्गघोषः । "चन्द्रशाला शिरोगृहम्" इति सिंहः । "स्त्री प्रतिश्रुत् प्रतिध्वान" इति च । विमानवेगस्य द्रुततरत्वात् क्षणमित्युक्तम् । अन्तर्हितसौधभाजः जलतिरोहितप्रासादाश्रितस्य । उक्तञ्च रामायणे । "प्रसन्नसलिले रम्ये तस्मिन् सरसि शुश्रुवे । गीतवादित्रनिर्घोषो न तु कश्चन दृश्यते" इति ॥

हविर्भुजामेधवतां चतुर्णां मध्ये ललाटन्तपसप्तसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥ ४१ ॥

प्रका—हविर्भुजामिति एधवतां ज्वलितानामित्यर्थः । ललाटन्तपः सप्तसप्तिर्यस्य "असूर्य" इत्यादिना खश् । "अरुर्द्विषद्" इत्यादिना मुम् । तपस्यति तपश्चरति । "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यङ् । "तपसः परस्मैपदञ्च" । नाम्ना सुतीक्ष्ण इति । शब्दार्थयोरभेदादियमुक्तिः । तीक्ष्णः क्रूरः । दान्तो जितेन्द्रियः । अहिंसक इत्यर्थः ॥

पदा—हविर्भुजामिति । असौ अपरः तपस्वी चतुर्णां हविर्भुजां मध्ये तपस्यति । तपश्चरति । "कर्मणो रोमन्थतपोभ्यां वर्तिचरोः" इति क्यङ् । "तपसः परस्मैपदञ्च" । ललाटं तपतीति ललाटन्तपः सप्तसप्तिः सूर्यो यस्य । "असूर्यललाटयोर्दृशितपोः" इति खश् । "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः । एधवतां ज्वलितानामित्यर्थः । नाम्ना सुतीक्ष्णः सुतीक्ष्ण इति नाम । अतिक्रूर इति च स्फुरति । अत एवाह—चरितेन दान्त इति । शमप्रधानः ॥ ४१ ॥

अमुं सहासप्रहितेक्षणानि व्याजार्धसन्दर्शितमेखलानि ।
नालं विकर्तुं जनितेन्द्रशङ्कं सुराङ्गनाविभ्रमचेष्टितानि ॥ ४२ ॥

प्रका—अमुमिति । विकर्तुं विकारं प्रापयितुम् । शङ्का अनर्थप्रतिभा । विभ्रमो विलासः तस्य चेष्टितानि स्फुरितानि ॥

पदा—अयन्तु पूर्ववन्मघोना न वञ्चित इत्याह—अमुमिति । सुराङ्गनाविभ्रमचेष्टितानि अमुं विकर्तुं न अलम् । विभ्रमेण विलासेन यानि चेष्टितानि व्यापाराः ।

विकर्तुं विकारं प्रापयितुं न पर्याप्तानि । सहासं प्रहितानीक्षणानि यत्र । व्याजेन दर्शित सन्दर्शिता मेखला येषु । जनिता इन्द्रशङ्का येन ॥

एषोऽक्षमालावलयं मृगाणां कण्डूयितारं कुशसूचिलावम् ।
सभाजने मे भुजमूर्ध्वबाहुः सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ ४३ ॥

प्रका—एष इति । अक्षमाला वलयो यस्येति । कुशसूचिः कुशाङ्कुरः तां लुनातीति तथा । सभाजने प्रीणने । "सभाज प्रीतिदर्शनयोः" इति धातुः । "निमित्तात् कर्मयोगे सप्तमी वक्तव्या" इति सप्तमी । ऊर्ध्वबाहुरिति तपोविशेषज्ञापकम् । प्राध्वमव्ययम् । "आनुकूल्यार्थकं प्राध्वम्" इति सिंहः । तच्चानुकूल्यं बन्धनहेतुकमिष्यते । मुष्टिबन्धनेनानुकूलं भुजं कृत्वा प्रयुङ्क्त इत्यर्थः । इत इति । किञ्चिच्चिरश्चीनमित्यर्थः ॥

पदा—एष इति । एषः मे सभाजने सव्येतरं भुजं प्राध्वमितः प्रयुङ्क्ते । सभाजने प्रीणने । "सभाज प्रीतिदर्शनयोः" इति धातुः । "निमित्तात् कर्मयोगे सप्तमी वक्तव्या" इति सप्तमी । मे सभाजनं निमित्तीकृत्येत्यर्थः । सव्येतरं दक्षिणम् । प्राध्वमित्यानुकूल्यवाचकमव्ययम् । "आनुकूल्यार्थकं प्राध्वम्" इत्यमरः । तच्चानुकूल्यं बन्धनहेतुकमिष्यते । मुष्टिबन्धनेनानुकूलं भुजं कृत्वा प्रयुङ्क्त इत्यर्थः । अक्षमालैव वलयो यस्य । मृगाणां कण्डूयितारं कण्डूयनकर्तारम् । कुशसूचिः कुशाङ्कुरः तं लुनाति छिनत्तीति तथा ॥

वाचंयमत्वात् प्रणतिं ममैष कम्पेन किञ्चित् परिगृह्य मूर्ध्नः ।
दृष्टिं विमानव्यवधानमुक्तां पुनः सहस्रार्चिषि सन्निधत्ते ॥ ४४ ॥

प्रका—वाचमिति । वाचंयमो मौनव्रती । "वाचि यमो व्रते" इति खश् । मुमागमः ॥

पदा—वाचंयमत्वादिति । एषः वाचंयमत्वात् मम प्रणतिं मूर्ध्नः किञ्चित् कम्पेन परिगृह्य विमानव्यवधानमुक्तां दृष्टिं पुनः सहस्रार्चिषि सन्निधत्ते । वाचंयमो मौनव्रती । "वाचि यमो व्रते" इति खश् । "वाचंयमपुरन्दरौ च" इति निपातः । विमानव्यवहितां दृष्टिं विमाने गते पुनरपि सूर्य एव सम्बध्नातीत्यर्थः । स्वाभाविकं सन्धानमेव जायत इति भावः ॥

अदः शरण्यं शरभङ्गनाम्नस्तपोवनं पावनमाहिताग्नेः ।
चिराय सन्तर्प्य समिद्भिरग्निं यो मन्त्रपूतां तनुमप्यहौषीत् ॥ ४५ ॥

प्रका—अद इति। शरण्यम् अद्यापि वीतसत्त्वविरोधमित्यर्थः। पावनं दृश्यमानमपीति शेषः। आहिताग्नेः अस्यैवाहिताग्नित्वं लोकोत्तरमिति भावः। मन्त्रपूतां नित्यस्वाध्यायहतकल्मषाम्। अनेन समित्तुल्यत्वमुक्तम्। तनुमपीति समिद्भिरग्नेस्तर्पणेन मुनेरपर्याप्तिर्व्यज्यते॥

पदा—अद इति। अदः शरभङ्गनाम्नः तपोवनम्। अद इति सहस्तनिर्देशं वचनम्। शरण्यं शरणार्हम्, अद्यापि वीतप्रबलसत्त्वबाधमित्यर्थः। पावनं दर्शनमात्रेण शुद्धिकरम्। आहितोऽग्निर्येन। यः चिराय समिद्भिः अग्निं सन्तर्प्य मन्त्रपूतां तनुमपि अहौषीत्। मन्त्रैः पूतां वेदाध्ययनैः प्रतिहतदुरितामित्यर्थः। समिधां मन्त्रपूतत्वं प्रसिद्धम्। तनुमपीत्यपिशब्देन चिरकालं समिद्भिरग्निसन्तर्पणमात्रेण मुनेरपर्याप्तिर्ध्वन्यते। "ततोऽग्निं स समाधाय हुत्वा चाज्येन मन्त्रवत्। शरभङ्गो महातेजाः प्रविवेश हुताशनम्" इति रामायणे॥

छायाविनीताध्वपरिश्रमेषु भूयिष्ठसम्भाव्यफलेष्वमीषु।
अस्यातिथीनामधुना सपर्या स्थिता सुपुत्रेष्विव पादपेषु ॥ ४६ ॥

प्रका—छायेति। भूयिष्ठानि प्रचुराणि सम्भाव्यानि आदरणीयानि च फलानि येषाम्। अस्य शरभङ्गस्य। अधुनापीत्यर्थः। सुपुत्रेषु, सुपुत्रा हि पितर्युपरतेऽपि प्रतिश्रयदानादिकं पितृप्रयुक्तमतिथिसत्कारं न परिहापयन्ति। तत्पक्षे फलशब्दो धनवाची। इत्थं विमानगमनक्रमेणागस्त्यादीनामाश्रमान् धर्मप्रधानो नायकः सबहुमानं निर्वर्णितवान्। न चैतत्सर्वं सम्भोगाङ्गबहिर्भूतम्। नायिकाया अप्यतिसत्त्वोत्तरत्वेन धर्मप्रधानतया तद्वर्णनस्यानुरागसंवर्धनत्वात्॥

पदा—छायेति। अस्य अतिथीनां अधुना अमीषु पादपेषु स्थिता। शरभङ्गे विरते तेन क्रियमाणोऽतिथिसत्कार इदानीं तद्वर्धितेषु वृक्षेषु वर्तत इत्यर्थः। सुपुत्रेषु इव शोभनेषु पुत्रेष्विव। सुपुत्रा हि पितृकल्पितमतिथिसत्कारं न विमुञ्चन्ति। छायया विनीतोऽपनीतोऽध्वपरिश्रमो यैः। सुपुत्रपक्षे प्रसन्नमुखकान्तिदर्शनमात्रेणेत्यर्थः। भूयिष्ठानि प्रचुराणि सम्भाव्यानि आदरणीयानि च फलानि येषु। पुत्रपक्षे फलशब्दो धनवाची। अत्र नायकयोरतिसत्त्वोत्तरत्वान्महामुनीनां तपोविशेषवर्णनमपि सम्भोगाङ्गमेव। अत एव वक्ष्यति "इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि" इति॥

धारास्वनोद्गारिदरीमुखोऽसौ शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः।
बध्नाति मे बन्धुरगात्रि चक्षुर्दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७ ॥

प्रका—क्रमेण प्रदेशान्तराणि वर्णयति—धारेति। दरीणां मारुतपूरितत्वाद्-विच्छिन्नप्रसृतः शब्दो धारास्वनः। शृङ्गाग्रे लग्नेऽम्बुद एव वप्रपङ्को वप्राघातलग्नः पङ्को यस्य। "बन्धुरस्तु द्वयोर्हंसे त्रिषु सुन्दरनम्रयोः" इति केशवः। दृप्त इति विवक्षितध-र्मद्वयसिद्ध्यङ्गम्॥

पदा—धारेति। बन्धुरगात्रि असौ चित्रकूटः मे चक्षुः बध्नाति। बन्धुरं सु-न्दरम्। "बन्धुरस्तु द्वयोर्हंसे त्रिषु सुन्दरनम्रयोः" इति केशवः। मे चक्षुः चित्रकूटं विनाऽन्यत्र न गच्छतीत्यर्थः। दृप्तः ककुद्मान् इव। ककुद्मान् वृषभः। अत्र दृप्त इ-त्यनेन विवक्षितविशेषणद्वयसिद्धिः। दरीणामनवरतं मारुतपूरितत्वाद् धारारूपेण स्वन-मुद्गिरतीति धारास्वनोद्गारि। दर्येव मुखं दरीमुखम्। शृङ्गाग्रे लग्नोऽम्बुद एव वप्रपङ्कः वप्राघातलग्नः पङ्कः यस्य। अत्रोपमा॥

एषा प्रसन्नस्तिमितप्रवाहा सरिद्विदूरान्तर एव तन्वी।
मन्दाकिनी भाति नगोपकण्ठे मुक्तावली कण्ठगतेव भूमेः ॥४८॥

प्रका—एषेति। विदूरान्तर एव तन्वी, न तु प्रत्यासन्न इत्यर्थः। विशेष-णे मुक्तावलीसाम्यार्थे। मन्दाकिनी कापि नदी। नगस्य चित्रकूटस्य। भूमेः कण्ठगता मुक्तावलीवेत्युत्प्रेक्षया प्रदेशस्थिताया अपि तस्याः सकलमहीमण्डलभूषकत्वं द्योत्यते। मु-क्तावली हि कण्ठार्पिता सकलमेव वपुर्भूषयति॥

पदा—एषेति। एषा मन्दाकिनी सरिन्नगोपकण्ठे भाति। मन्दकिनीति चि-त्रकूटपर्यन्तवाहिनी काचिन्नदी। नगस्य चित्रकूटस्योपकण्ठे। प्रसन्नः स्तिमितश्च प्रवाहो यस्याः। विदूरान्तर एव तन्वी विदूरेऽन्तरेऽवकाशे एव तन्वी कृशा। प्रत्यासत्तौ पुनरतिमहतीत्यर्थः। इदं विशेषणद्वयमुत्प्रेक्षासिद्ध्यङ्गम्। भूमेः कण्ठगता मुक्तावली इव। यथा कण्ठार्पिता मुक्तावली सर्वाङ्गशोभावहा भवति तथेयमपि सकलभूमण्डलशोभा-वहेत्युत्प्रेक्षया ध्वन्यते॥

अयं सुजातोऽनुगिरं तमालः प्रवालमादाय सुगन्धि यस्य।
यवाङ्कुरापाण्डुकपोलशोभी मयाऽवतंसः परिकल्पितस्ते ॥४९॥

प्रका—अयमिति। अनुगिरमित्यव्ययीभावः। "गिरेश्च सेनकस्य" इति स-मासान्तोऽच्प्रत्ययः। "यस्येति च" इतीकारलोपः। गिरेः समीप इत्यर्थः। यवाङ्कुर-साम्येन परभागलाभ उक्तः। अनेन तस्य तमालस्य विशेषप्रतिपत्तिविषयत्वमुक्तम्॥

१ भाव।

पदा—अयमिति । अयम् अनुगिरं तमालः । अनुगिरमित्यव्ययीभावः । "गिरेश्च सेनकस्ये"ति समासान्तः । "यस्येति च" इतीकारलोपः । गिरेः समीप इत्यर्थः । सुजातो मनोहरः । यस्य प्रवाळमादाय मया ते अवतंसः परिकल्पितः । अवतंसः कर्णालङ्कारः । शोभनो गन्धोऽस्यास्तीति सुगन्धि । "गन्धस्येद्" इतीकारः । यवाङ्कुरवदापाण्डौ कपोले शोभितुं शीलमस्येति तथा । परभागलाभेन शोभावहत्वमनेन ध्वन्यते । तमालो हि कृष्णवर्णः ॥

अनिग्रहत्रासविनीतसत्त्वमपुष्पलिङ्गात् फलबन्धिवृक्षम् ।
वनं तपःसाधनमेतदत्रेराविष्कृतोदग्रतरप्रभावम् ॥ ५० ॥

प्रका—अनिग्रहेति । अननुभूतनिग्रहत्वात्त्रासशून्यसत्त्वमित्यर्थः । अपुष्पलिङ्गादिति ल्यब्लोपे पञ्चमी । पुष्पलिङ्गमपुरस्कृत्येत्यर्थः । तपःसाधनमिति । भगवतोऽत्रेर्ज्योतिश्चक्रभूषणस्य दिव्यस्यानवर्तित्वादियमुक्तिः । दिव्या हि मुनयो योगैश्वर्यात् केनचिद्देहेन स्वाधिकारं प्रवर्तयन्ति । अन्येन तप आतिष्ठन्ति । आविष्कृतेत्यादिनेहगत्यद्भुतानेकभावास्पदत्वमुक्तम् ॥

पदा—अनिग्रहेति । एतदत्रेः तपःसाधनं वनम् । यद्यपि भगवानत्रिः सप्तर्षिस्थाने वर्तते, तथापि योगप्रभावेन शरीरान्तरमादायास्मिन् वने तपश्चरतीत्यर्थः । निग्रहाद् वधबन्धनादेस्त्रासो येषां नास्ति तान्यनिग्रहत्रासानि विनीतानि परस्पराविरुद्धानि च सत्त्वानि यत्र । अपुष्पलिङ्गादिति ल्यब्लोपे पञ्चमी । पुष्पलिङ्गमपुरस्कृत्येत्यर्थः । लिङ्गं चिह्नम् । फलं बन्धुं शीलमेषामिति फलबन्धिनः । आविष्कृताः प्रकाशिताः उदग्रतरा अत्युग्राः प्रभावा यत्र । एतादृशानेकप्रभावास्पदमेतदित्यर्थः ॥

अत्राभिषेकाय तपोधनानां सप्तर्षिहस्तोद्धृतहेमपद्माम् ।
प्रवर्तयामास किलानसूया त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ५१ ॥

प्रका—अत्रेति । सप्तर्षीत्यादिना चाकाशगङ्गात्वमुक्तम् । प्रवर्तयामास । प्रभावेनेति शेषः । त्र्यम्बकेत्यादिना त्रिलोकमहनीयत्वं ध्वनितम् ॥

पदा—अत्रेति । अनसूया अत्र तपोधनानामभिषेकाय त्रिस्रोतसं प्रवर्तयामास किल । अभिषेकाय स्नानाय । त्रिस्रोतसं गङ्गाम् । प्रवर्तयामास । प्रभावेनेति शेषः । किलेतिह्ये । सप्तर्षिभिर्हस्ते उद्धृतानि हेमपद्मानि सुवर्णपङ्कजानि यस्मात् । आकाशगङ्गात्वसिद्ध्यर्थमिदं विशेषणम् । त्र्यम्बकस्य मौलौ मालाम् । लोकोत्तरानुभावामित्यर्थः ॥

वीरासनैर्ध्यानजुषामृषीणाममी समध्यासितवेदिबन्धाः[1]।
निवातनिष्कम्पतया विभान्ति योगाधिरूढा इव शाखिनोऽपि ॥ ५२ ॥

प्रका—वीरेति। वीरासनेनोपविश्य ध्यायतामृषीणां निवासभूताः शाखिनोऽपि समध्यासितवीरासनसदृशवेदिबन्धत्वेन निवातनिष्कम्पत्वेन च योगाधिरूढा इव भान्तीत्यर्थः। अत्र वसिष्ठः "एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितम्। इतरस्मिंस्तथाचोरुं वीरासनमुदाहृतम्" इति ॥

पदा—वीरासनैरिति। ऋषीणाममी शाखिनः अपि निवातनिष्कम्पतया योगाधिरूढा इव विभान्ति। निवातो वाताभावः अत्रैराश्रमे तपश्चरतामृषीणां निवासभूता एते पादपा अपि तेषां तपोबलेन वातैरप्यकम्पितत्वाद्योगाधिरूढा इव दृश्यन्त इत्यर्थः। वीरासनैर्ध्यानजुषां वीरासनेनोपविश्य ध्यायताम्। अत्र वसिष्ठः। "एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितम्। अपरस्मिंस्तथाचोरुं वीरासनमुदाहृतम्" इति। समाध्यासिताः सम्यगध्यासिताः वेदिबन्धा बद्धा वेदयो यैः। वीरासनसदृशवेदिबन्धाधिष्ठिता इत्यर्थः ॥

त्वया पुरस्तादुपयाचितो यः सोऽयं वटः श्याम इति प्रतीतः।
राशिर्मणीनामिव गारुडानां सपद्मरागः फलितो विभाति ॥ ५३ ॥

प्रका—त्वयेति। उपयाचितः प्रार्थितः। "न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत्। नमस्तेऽस्तु महावृक्ष पारयेन्मे व्रतं पतिः" इति रामायणे। अनेन तु त्वत्प्रार्थनाद्वृष्टिरियमिति द्योत्यते ॥

पदा—त्वयेति। यः त्वया पुरस्ताद् उपयाचितः श्याम इति प्रतीतः स वटः अयं फलितः विभाति। उपयाचितो याचितः। अत्र श्रीरामायणवचनम्। "श्यामं न्यग्रोधमासेदुश्शीतलं हरितच्छदम्। न्यग्रोधन्तमुपस्थाय वैदेही वाक्यमब्रवीत्। नमस्तेऽस्तु महावृक्ष पारयेन्मे व्रतं पतिः" इति। त्वत्प्रार्थनायाः फलमिदमिति भावः। गारुडानां मणीनां राशिः सपद्मराग इव। गारुडो नीलमणिविशेषः। पद्मरागो रक्तमणिविशेषः। रक्तफलपूर्णत्वमुत्प्रेक्षानिमित्तम् ॥

क्वचित् प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा।
अन्यत्र माला सितपङ्कजानामिन्दीवरैरुत्[2]कचितान्तरेव ॥ ५४ ॥

---

१ मध्याः। २ स्व।

क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५ ॥

क्वचित् प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव ।
अन्यत्र शुभ्रा शरदभ्ररेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥ ५६ ॥

क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥ ५७ ॥

प्रक्रा—क्वचिदिति । क्वचिदिति, क्वचिदिति, क्वचिच्चेति । प्रभालेपीति तेजस्विनो रत्नस्य गुणनाम । उत्कचितं ग्रथितम । प्रियमानसानां हंसानाम् । पत्रं विशेषकम् । भक्तिर्भागेन विन्यासः । छाया द्रुमादिसम्बन्धिनी । अत्र कलापके सप्तभिरुपमानैर्गङ्गायमुनामिश्रणप्रकारविशेषा उक्ताः । अत एव क्वचिदन्यत्रेत्यनयोरसकृदुपादानम् ॥

पदा—गङ्गायमुनासङ्गमप्रकारं कलापकेनाह—क्वचिदिति । अनवद्याङ्गि गङ्गा यमुनातरङ्गैः भिन्नप्रवाहा विभाति । पश्य । यमुनातरङ्गैः कर्तृभिः । क्वचिन्मुक्तामयी यष्टिः प्रभालेपिभिरिन्द्रनीलैरनुविद्धा इव । प्रभालेपिभिरिति तेजस्विनो रत्नस्य गुणनाम । तेजस्विभिरित्यर्थः । अनुविद्धा बद्धा । क्वचित् प्रदेशे यष्ट्याकारा मौक्तिकमाला तेजस्विभिरिन्द्रनीलैः सम्मिळितेव विभातीत्यर्थः । अन्यत्र सितपङ्कजानां माला इन्दीवरैरुत्कचितान्तरा इव । उत्कचितं ग्रथितमन्तरं मध्यं यस्याः । क्वचित् प्रियमानसानां खगानां पङ्क्तिः कादम्बसंसर्गवती इव । प्रियं मानसं सरो येषां ते खगा हंसाः । कादम्बः कृष्णहंसः । "कादम्बः कळहंसश्च हंस आधूसरच्छदः" इति हलायुधः । अन्यत्र भुवः चन्दनकल्पिता भक्तिः काळागरुदत्तपत्रा इव । भक्तिर्भागेन विन्यासः । काळागरुभिः दत्तं पत्रं विशेषकं यस्याः । "तमालपत्रतिलकचित्रकाणि विशेषकम्" इत्यमरः । क्वचित् चान्द्रमसी प्रभा छायानिलीनैस्तमोभिः शबळीकृता इव । छायासु द्रुमादिसम्बन्धिनीषु निलीनैः स्थितैः । शबलीकृता नानावर्णतां नीता । अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेषु आलक्ष्यनभःप्रदेशा इव । शुभ्रा धवळा । रन्ध्रेष्वन्तराळेषु आलक्ष्य ईषद्दृश्यो नभःप्रदेशो यस्याः । क्वचिद् भस्माङ्गरागा ईश्वरस्य तनुः कृष्णोरगभूषणा इव च । कृष्णोरगा एव भूषणं यस्याः । अत्र सप्तभिरुपमानैर्गङ्गायमुनामिश्रणप्रकाराः प्रतिपादिता ॥

समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात् ।
तत्त्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥ ५८ ॥

१ वि ।

प्रका— समुद्रेति । किलेतीतिहासप्रसिद्धिरुक्ता । तनुत्यजां, तनुत्यागानन्तरमित्यर्थः । भूयः शरीरबन्ध इत्यन्वयः ॥

पदा— समुद्रेति । समुद्रपत्न्योः अत्र जलसन्निपाते अभिषेकात् पूतात्मनां तनुत्यजां तत्त्वावबोधेन विना अपि भूयः शरीरबन्धः न अस्ति किल । समुद्रपत्न्योः नद्योः । जलानां सन्निपाते संयोगे । अभिषेकात् स्नानात् । पूतः शुद्धः आत्मा अन्तःकरणं येषाम् । तनुं त्यजन्तीति तनुत्यजः । तत्त्वावबोधः परमात्मस्वरूपज्ञानम् । अत्र स्नानमात्रेण परिशुद्धान्तःकरणानां वेदान्तवाक्यात् परमात्मावधारणेन विनापि देहपातानन्तरं पुनः शरीरेण सम्बन्धो नास्ति । किल । श्रुतिप्रसिद्धोयमर्थ इत्यर्थः ॥

पुरं निषादाधिपतेरिदं तद्यस्मिन् मया मौलिमणिं विहाय ।
जटासु बद्धास्वरुदत्सुमन्त्रः कैकेयि कामाः फलितास्तवेति ॥ ५९ ॥

प्रका— पुरमिति । अत्र कैकेयीदोषकीर्तनमौदात्यदूषकमिति केचिन्मन्यन्ते । तन्न । पितृकल्पस्य सुमन्त्रस्य वात्सल्यं ह्यत्र अनुसन्धीयते । अस्मास्वतिवात्सल्याज्जटाबन्धमसहमानेन निर्दोषापि मे मातोपालब्धेत्युक्तेः ॥

पदा— पुरमिति । इदं निषादाधिपतेः तत् पुरम् । निषादाधिपतेर्गुहस्य । पुरं स्थानम् । यस्मिन् मया मौलिमणिं विहाय जटासु बद्धासु सुमन्त्रः कैकेयि तव कामाः फलिताः इति अरुदत् । मौलिमणिः किरीटरत्नम् । कामा मनोरथाः । यत्र वात्सल्यान्मम जटाबन्धमसहमानस्सुमन्त्रो निर्दोषामपि मातरि दोषमारोपितवानिति भावः ॥

पयोधरैः पुण्यजनाङ्गनानां निर्विष्टहेमाम्बुजरेणु यस्याः ।
ब्राह्मं सरः कारणमाप्तवाचो बुद्धेरिवाव्यक्तमुदाहरन्ति ॥ ६० ॥

जलानि या तीरनीखातयूपा वहत्ययोध्यामनु राजधानीम् ।
तुरङ्गमेधावभृथावतीर्णैरिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ ६१ ॥

यां सैकतोत्सङ्गसुखोचितानां प्राज्यैः पयोभिः परिवर्धितानाम् ।
सामान्यधात्रीमिव मानसं मे सम्भावयत्युत्तरकोसलानाम् ॥ ६२ ॥

सेयं मदीया जननीव तेन मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरेपि[1] सन्तं शिशिरानिलैर्मां तरङ्गहस्तैरुपगूहतीव ॥ ६३ ॥

---

१ म ।

प्रका—पयोधरैरित्यादि । "स्यात्तु पुण्यजनो यातुधाने साधुजनेऽपि च" इति केशवः । आप्तवाचः प्रमाणभूतवचसः । अनेन विश्वामित्रप्रवर्तितो रामायणसिद्ध इतिहासो ध्वन्यते । ब्राह्मं ब्रह्मनिर्मितं सरो यस्याः कारणमित्यन्वयः । बुद्धेर्महत्तत्त्वस्य । अव्यक्तं प्रकृतिः । उपमयाऽत्र सरोनद्योर्लोकयात्रार्थत्वं द्योत्यते ॥ जलानीति । तीरेत्यादिना बाह्य उपस्कार उक्तः । तुङ्गेत्यादिना आभ्यन्तरः । वहति स्यन्दते । "अनुर्लक्षणे" तद्योगे च द्वितीया । तया निसर्गपुण्यत्वमुक्तम् ॥ यामिति । प्राज्यैः प्रभूतैः । अत्र सैकतोत्सङ्गेति रूपकम् । पयोभिरिति श्लिष्टरूपकम् । तदुभयमुत्प्रेक्षोत्थापकम् । सामान्यधात्रीमित्यत्र रूपकस्योत्प्रेक्षया विषयोऽपहृतः । तया च स्नेहबहुमानातिशयो ध्वन्यते ॥ सेयमिति । दूरेऽपि सन्तमिति पाठः । शिशिरानिलैरिति विशेषणेन तरङ्गहस्तकरणकोपगूहनोत्प्रेक्षाया निमित्तं ध्वनितम् । तरङ्गानिलस्पर्शो हि तरङ्गस्पर्शतुल्य इति । अत्र पूर्वार्धे रामस्य पितरि स्नेहबहुमानाभ्यां जलक्रीडादिभिस्तदुपभुक्तपूर्वायां सरिति यो भावनामात्रसिद्धो जननीवेति वियुक्तेति च पदाभ्यां व्यज्यमानश्शोकः स सामाजिकेषु करुणाभासतामवगाहते, तथोत्तरार्धे वात्सल्यमपि तस्याः ॥

पदा—पयोधरैरिति । कलापकश्चैतत् । सा इयं सरयूः दूरे सन्तम् अपि मां शिशिरानिलैः तरङ्गहस्तैः उपगूहति इव । शिशिरः शीतळोऽनिलो येषाम् । शीतळतरतरङ्गानिलस्पर्शस्य तरङ्गस्पर्शनतुल्यत्वं तरङ्गहस्तकरणकोपगूहनोत्प्रेक्षाया निमित्तम् । तरङ्गहस्तैरिति रूपकम् । मदीया जननी इव । यथा मम माता मामालिङ्गति तथैवेत्यर्थः । अनेन वात्सल्यातिशयो ध्वन्यते । मान्येन तेन राज्ञा वियुक्ता विरहिता । सा जलक्रीडादिभिस्तेन राज्ञा पूर्वमुपभुक्ता । इयमिदानीं तेन वियुक्ता जाता । यथा मे जननी तथैवेत्यर्थः । अनेन पितृवियोगशोकस्योत्थानं ध्वन्यते । आप्तवाचः यस्याः ब्राह्मं सरः कारणम् उदाहरन्ति । आप्तवाचः प्रमाणभूतवचसः । ब्राह्मं ब्रह्मनिर्मितं, तच्च मानसं सरः । उदाहरन्ति वदन्ति । अनेन विश्वामित्रोक्ता रामायणप्रसिद्धा कथा ध्वनिता । बुद्धेः अव्यक्तमिव । बुद्धिर्महत्तत्त्वम् । अव्यक्तं प्रकृतिः । मूलप्रकृतेर्महदादिप्रपञ्चोद्भव इति साङ्ख्याः । पुण्यजनाङ्गनानां पयोधरैः निर्विष्टहेमाम्बुजरेणु । पुण्यजनास्साधुजनाः । "स्यात्तु पुण्यजनो यातुधाने पुण्यजनेऽपि च" इति केशवः । तेषामङ्गनाभिस्स्त्रीभिर्निर्विष्टा उपभुक्ताः हेमाम्बुजानां सुवर्णपङ्कजानां रेणवो यस्मिन् । जलानीति । या अयोध्यां राजधानीम् अनु जलानि वहति । "अनुर्लक्षणे" । तद्योगे च द्वितीया । अयोध्यां राजधानीं लक्षीकृत्येत्यर्थः । वहति स्यन्दते । तीरेषु निखाताः कृतनिखनना यूपा यज्ञस्तम्भा यस्याः । तुरङ्गमेधावभृथावतीर्णैः इक्ष्वाकुभिः पुण्यतरीकृतानि । अश्वमेधावभृथ

स्नानार्थमवतीर्णैरिक्ष्वाकुवंशजातैरस्या जलानि पूर्वमेव पुण्यान्यपि पुण्यतरतान्नीतानीत्यर्थः। यां मे मानसम् उत्तरकोसलानां सामान्यधात्रीम् इव सम्भावयति। उत्तरकोसलविषयवासिनां सर्वेषामपि साधारणीं धात्रीमिव यामहं कल्पयामीत्यर्थः। तत्र हेतुमाह—विशेषणद्वयेन। सैकत एवोत्सङ्गे सुखमुषितानाम्। प्राज्यैः प्रभूतैः पयोभिर्जलैः स्तन्यरसैश्च। परिवर्धितानां सम्यग्वर्धितानाम्॥

विरक्तसन्ध्यापरुषं पुरस्ताद्यथा रजः पार्थिवमुज्जिहीते।
शङ्के हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥ ६४ ॥

प्रका—विरक्तेति। अतिरक्तसन्ध्यावत् परुषवर्णमित्यर्थः। यथाशब्दो वीप्सायाम्। "यथा सादृश्ययोग्यत्ववीप्सास्वार्थानतिक्रमे" इति यादवः। भूयो भूय इत्यर्थः। अथवा यथाशब्दः प्रकारवाची। तथाशब्दोऽध्याहार्यः। उज्जिहीते उद्गच्छति। हनूमत्कथितप्रवृत्तिरित्यनेन रामायणसिद्धं हनूमत्प्रेषणं सूचितम्॥

पदा—अथ भरतागमनं वर्णयति—विरक्तेति। पार्थिवं रजः यथा उज्जिहीते। पार्थिवं पृथिवीसम्बन्धि। यथाशब्दो वीप्सायाम्। "यथा सादृश्ययोग्यत्ववीप्सास्वार्थानतिक्रमे" इति यादवः। उज्जिहीते उद्गच्छति। भूयो भूय उद्गच्छतीत्यर्थः। विरक्ता विशेषेण रक्ता या सन्ध्या तद्वत् परुषं रूक्षवर्णम्। तत्रोपपत्तिमाशङ्कते—भरतः हनूमत्कथितप्रवृत्तिः ससैन्यः मां प्रत्युद्गतः शङ्के इति। हनूमता कथिता प्रवृत्तिर्वृत्तान्तो यस्मै। "वार्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः। अनेन रामायणप्रसिद्धं पूर्वमेव हनूमत्प्रेषणं सूचितम्। यथाशब्दस्य प्रकारवाचित्वे तु तथाशब्दोऽध्याहार्यः। एकवाक्यतया च योजना यथा पुरस्तात् पार्थिवं रजः उज्जिहीते तथा भरतः हनूमत्कथितप्रवृत्तिः ससैन्यः मां प्रत्युद्गतः शङ्के इति चान्वयः॥

अद्धा श्रियं पालितसङ्गराय प्रत्यर्पयिष्यत्यनघां स साधुः।
हत्वा निवृत्ताय मृधे खरादीन् संरक्षितां त्वामिव लक्ष्मणो मे ॥ ६५ ॥

प्रका—अद्धेति। अद्धा सत्यम्। "सत्ये त्वद्धाऽञ्जसा द्वयम्" इति सिंहः। तूर्णं वा। अद्धा स्यान्निश्चये तूर्णे" इत्यजयः। पालितप्रतिज्ञत्वेन प्रत्याख्यानोपायशून्यत्वमुक्तम्। अत एवाऽद्धेत्युक्तम्। प्रत्यर्पयिष्यतीति न्यासबुद्धेस्तदीयाया अनुसरणम्। अनघां व्यसनेभ्यो रक्षिताम्। साधुरार्यवृत्तः। उपमया च सङ्गरपालने मत्प्रत्यागमननिश्चयोऽस्य तावान्, यावान् युद्धे लक्ष्मणस्येति द्योतयति॥

१ कपिशम्। २ तो।

 7

पदा—अद्धेति । स पालितसङ्गराय मे श्रियम् अद्धा प्रत्यर्पयिष्यति । पालितः सङ्गरः प्रतिज्ञा येन । "आगूस्सङ्गरसन्धाप्रतिश्रवास्संश्रवः प्रतिज्ञा च" इति हलायुधः । श्रियं राजलक्ष्मीम् । अद्धा तूर्णम् । "अद्धा स्यान्निश्चये तूर्णे" इत्यजयः । प्रत्यर्पयिष्यति न्यासवदिति शेषः । अत एवाह—अनघामिति । व्यसनेभ्यो रक्षितां मनसाऽप्यभुक्ताञ्च निर्दोषामित्यर्थः । अत्र हेतुः—साधुरिति । आर्यवृत्तो लक्ष्मणः रणे खरादीन् हत्वा निवृत्ताय मे संरक्षितां सम्यग्रक्षितां स्वामिव । लक्ष्मणस्य तदानीं त्वद्विषया भावना त्वया सम्यगेवावगतेति भावः ॥

असौ पुरस्कृत्य गुरुं पदातिः पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैस्सह चीरवासा मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६ ॥

प्रका—असाविति । गुरुं वसिष्ठम् । पदातिरिति चीरवासा इति च अनुशोचनगर्भम् । पश्चादित्यादि सम्बाधपरिहारार्थं स्वौद्धत्यपरिहारार्थञ्च । अत्र पदे पदे भरतस्य गुरुगौरवातिशयः प्रतीयते ॥

पदा—असाविति । असौ भरतः गुरुं पुरस्कृत्य वृद्धैरमात्यैस्सह अर्घ्यपाणिः माम् अभ्युपैति । गुरुं वसिष्ठम् । पुरस्कृत्य अग्रतः कृत्वा । अर्घः पूजा तदर्थं जलमर्घ्यं तत् पाणौ यस्य । अभ्युपैति प्रत्युद्गच्छति । पदातिः पदाभ्यामेव सञ्चरन् । पश्चात् पृष्ठभागे । अवस्थापिता वाहिनी सेना येन । स्वयमेव निर्गच्छन्तीं सेनां सम्बाधपरिहारार्थम् औद्धत्यपरिहारार्थञ्च पृष्ठतः स्थापयित्वेत्यर्थः । चीरवासाः वल्कलवसनः । अत्र पदे पदे भरतस्य रामविषयो गौरवातिशयः प्रतीयते ॥

पित्रा निसृष्टां मदपेक्षया यः श्रियं युवाऽप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्रमभ्यस्यतीव व्रतमासिधारम् ॥ ६७ ॥

प्रका—पित्रेति । निसृष्टां न्यस्ताम् । मदपेक्षया ममैवाधिकार इति बुद्धया । अङ्कमन्तिकम् । अभोक्तेति तृन्नन्तत्वात् "न लोकाव्यय" इति षष्ठ्यभावः । "युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् । अन्तर्निवृत्तसङ्गस्स्यादासिधारं व्रतं हि तत्" इति यादवः । उत्प्रेक्षया तस्य दुष्करकारित्वं ध्वनितम् ॥

पदा—पित्रेति । यः पित्रा निसृष्टाम् अङ्कगतां श्रियं मदपेक्षया अभोक्ता । निसृष्टां न्यस्ताम् । अङ्कगतां समीपस्थाम् । "अङ्कश्चिह्नेऽन्तिकोरसोः" इति यादवः । अभोक्तेत्यस्य तृन्नन्तत्वाद् "न लोकाव्यय" इत्यादिना षष्ठीप्रतिषेधाच्छ्रियमिति द्वितीया । मदपेक्षया ममैवात्राधिकार इति बुद्धयेत्यर्थः । युवा अपि । अपिशब्देन दुष्करमसौ

करोतीति द्योत्यते। अत एवासिधारव्रतं दृष्टान्तत्वेनाह—इयन्ति वर्षाणि तया सह आसिधारं व्रतमभ्यस्यति इव इति। इयन्ति एतावन्ति। वर्षाणि संवत्सरान्। अत्यन्तसंयोगे द्वितीया। "युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत्। अन्तर्निवृष्टसङ्गस्स्यादासिधारव्रतं हि तत्" इति यादवः। उग्रमतिदुष्करम्॥

एतावदुक्तवति दाशरथौ तदीया-
मिच्छां विमानमधिदेवतया विदित्वा।
ज्योतिष्पथादवततार सविस्मयाभि-
रुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ॥ ६८ ॥

प्रका—एतावदिति। उक्तवति न तु ब्रुवाणे। वसिष्ठादिषु यथोचितां प्रतिपत्तिं कर्तुं विरतवचसीत्यर्थः। अधिदेवतया अधिदेवतात्मना। उभयं हि विमानस्य रूपं जडं देवतात्मकञ्च॥

पदा—एतावदिति। दाशरथौ एतावदुक्तवति विमानं तदीयामिच्छामधिदेवतया विदित्वा ज्योतिष्पथादवततार। उक्तवति न तु ब्रुवाणे। दाशरथावेतावन्मात्रमभिधाय वसिष्ठादिषु यथोचितं व्यापारं कर्तुं विरतवचने सति। विमानमधिदेवतया अधिष्ठात्र्या देवतया करणेन रामाभिलाषमवधार्य ज्योतिषां नक्षत्रादीनां मार्गादाकाशादवततार। विमानस्य हि दृश्यं रूपं विना रूपान्तरमस्ति। यथा हिमवदादीनाम्। भरतानुगाभिः प्रकृतिभिः उद्वीक्षितम्। प्रकृतिभिः प्रजाभिः। उद्वीक्षितमूर्ध्वं वीक्षितम्। सविस्मयाभिः अदृष्टपूर्वविमानदर्शनाद्विस्मयसहिताभिः॥

तस्मात् पुरस्सरविभीषणदर्शितेन
सेवाविचक्षणहरीश्वरदत्तहस्तः।
यानादवातरददूरमहीतलेन
मार्गेण भङ्गिरचितस्फटिकेन रामः ॥ ६९ ॥

प्रका—तस्मादिति। विभीषणस्य पुरस्सरणं मार्गदर्शनञ्च पुष्पकप्रदेशाभिज्ञतया। सेवेति। अवतरणे हि हस्तदानमनुकूलं भवतीति। भङ्गिर्विच्छित्तिः। "भङ्गिर्भङ्गेऽप्याकृतौ च विच्छित्तौ च" इति केशवः। सोपानपर्वविच्छित्त्या रचितस्फटिकेनेत्यर्थः। मेघसन्देशेऽप्युक्तम् "भङ्गीभक्त्या विरचितवपुः" इति॥

पदा—तस्मादिति। रामः तस्माद्यानात् पुरस्सरविभीषणदर्शितेन मार्गेण अवातरत्। यानाद्विमानात् पुरस्सरेण अग्रेसरेण विभीषणेन दर्शितेन इत इतः स्वामिन्निति

वदतेत्यर्थः। सेवायां विचक्षणेन विदग्धेन हरीश्वरेण सुग्रीवेण दत्तो हस्तो यस्मै। अवतरणे हि हस्तालम्बो युक्तः सेवकजनोचितश्च। अत एव सेवाविचक्षणेत्युक्तम्। अदूरं महीतलं भूप्रदेशो यस्मात्। देवा हि भुवं न स्पृशन्ति। भङ्गिर्विच्छित्तिः। "भङ्गिर्भङ्गे ह्याकृतौ च विच्छितौ च" इति केशवः। भङ्ग्या रचितं स्फटिकं यस्मिन्। सोपानपर्वविच्छित्त्या रचितस्फटिकेनेत्यर्थः। अनेनावतरणसौख्यमुक्तम्॥

इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य
सभ्रातरं भरतमर्घ्यपरिग्रहान्ते।
पर्यश्रुरस्वजत मूर्धनि चोपजघ्रौ
तद्भक्त्यपोढपितृराज्यमहाभिषेकम् ॥ ७० ॥

प्रका—इक्ष्वाकुवंशेति। सभ्रातरं सशत्रुघ्नम्। तद्भक्तीत्यादिना लोकोत्तरमौदात्यमुक्तम्॥

पदा—इक्ष्वाकुवंशेति। स प्रयतः इक्ष्वाकुवंशगुरवे प्रणम्य अर्घ्यपरिग्रहान्ते सभ्रातरं भरतं पर्यश्रुः अस्वजत। प्रयतः शुद्धान्तःकरणः भक्तिमानिति यावत्। इक्ष्वाकुवंशगुरुर्वसिष्ठः। अर्घ्यपरिग्रहान्ते तदानीमर्घ्यं परिगृह्येत्यर्थः। भ्रात्रा शत्रुघ्नेन सहितम्। पर्यश्रुः। परिगताश्रुः चिरकालदर्शनेन तद्भक्तिदर्शनेन च जातहर्षाश्रुरित्यर्थः। अस्वजत आलिलिङ्ग। मूर्धनि उपजघ्रौ च शिरस्याघ्रातवांश्च। तस्मिन् ज्येष्ठभ्रातरि भक्त्यैवापोढः परित्यक्तः पितृसम्बन्धिनि राज्ये महाभिषेको येन। परित्यक्तपितृकल्पितराज्याभिषेक इत्यर्थः। अत्राभिषेकस्याऽपि पितृसम्बन्धित्वोक्त्या परिग्रहस्य निर्दोषत्वमुक्तम्। महच्छब्दप्रयोगेण अभिलाषजनकत्वमुक्तम्। तत्परित्यागेन तु रामे भक्त्यतिशयः॥

श्मश्रुप्रवृद्धिजनिताकृतिविक्रियांश्च
प्लक्षान् प्ररोहजटिलानिव मन्त्रिवृद्धान्।
अन्वग्रहीत्प्रणमतः शुभदृष्टिपातै-
र्वार्तानुयोगमधुराक्षरया च वाचा ॥ ७१ ॥

प्रका—श्मश्रुप्रवृद्धीति। स्वामिविपत्तिसमुचितव्रतग्रहणेनाक्लृप्तश्मश्रुत्वाद्दुर्लक्ष्यव्यक्तीनित्यर्थः। वृक्षः पर्कटीसंज्ञको वृक्षः। प्ररोहश्च शाखाजाता शिफा। शुभैः प्रसन्नैः। वार्तं कुशलं तस्यानुयोगः प्रश्नः अपि कुशलं भवतामिति। "वार्तं फल्गुन्यरोगे च" इति सिंहः॥

पदा—श्मश्रुप्रवृद्धीति। स प्रणमतः मन्त्रिवृद्धान् शुभदृष्टिपातैः च वार्तानुयोग-

मधुराक्षरया वाचा च अन्वग्रहीत् । मन्त्रिवृद्धान् वृद्धान् मन्त्रिणः । शुभैरनुरागद्योतकैः । दृष्टिपातैः नयनप्रचारैः । वार्तं कुशलं तस्यानुयोगः प्रश्नः कुशलप्रश्नैरित्यर्थः । "वार्ता फल्गुन्यरोगे च" इति सिंहः । "प्रश्नेऽनुयोगः पृच्छा च" इति च । तेन मधुराण्यक्षराणि यस्याः । अन्वग्रहीद् अनुजग्राह । श्मश्रूणां प्रवृद्ध्या वर्धनेन जनिता सम्पादिता आकृतेर्विक्रिया विकारो येषाम् । स्वामिविपत्तिसमुचितेन व्रतेनाऽकृतवपनत्वाद्दुरवगमस्वरूपानित्यर्थः । अत एवोत्प्रक्षने—प्ररोहजटिलान् प्लक्षानिवेति । प्ररोहैंश्शाखाजाताभिः शिफाभिः जटिलान् जटावतः प्लक्षान् पर्कटीसंज्ञान् वृक्षान् इव ॥

दुर्जातबन्धुरयमृक्षहरीश्वरो मे
पौलस्त्य एष समरेषु पुरः प्रहर्ता ।
इत्यादरेण कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ ७२ ॥

प्रका—दुर्जातेति । "दुर्जातं व्यसनं क्ली"ति केशवः । आदरोऽत्र स्नेहबहुमानद्योतकविशेषणोपन्यासः । व्युत्क्रम्य प्रणतं लक्ष्मणमनादृत्येत्यर्थो व्याख्येयः । लक्ष्मणमवन्दित्वेत्यर्थः उपेक्ष्यः । भरतस्य ज्येष्ठत्वात् । एवमुत्तरत्राप्यवसेयम् ॥

पदा—दुर्जातेति । अयम् ऋक्षहरीश्वरः मे दुर्जातबन्धुः । ऋक्षा हरयश्च वानरजातिविशेषाः तेषामीश्वरः सुग्रीवः । "दुर्जातं व्यसनं क्ली लिङ्गसम्यग्जातवस्तुनि" इति केशवः । तत्र बन्धुः । एष पौलस्त्यः समरेषु पुरःप्रहर्ता विभीषणोऽयं समरेष्वग्रप्रहारकर्ता । भरतः रघुपुङ्गवेन इति आदरेण कथितौ उभौ लक्ष्मणं व्युत्क्रम्य ववन्दे । व्युत्क्रम्य अतिक्रम्य । प्रणमन्तं लक्ष्मणमनालिङ्ग्यैव सुग्रीवविभीषणौ वन्दितवानित्यर्थः ॥

सौमित्रिणा तदनु संससृजे स चैन-
मुत्थाप्य नम्रशिरसा भृशमालिलिङ्गे ।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन
क्लिश्नन्निवास्य भुजमध्यमुरःस्थलेन ॥ ७३ ॥

प्रका—सौमित्रिणेति । संससृजे "सृज विसर्गे" इति श्यन्विकरणो धातुः । स भरतः । एनं लक्ष्मणम् । संससृजे चेत्यन्वयः । भृशं गाढम् । क्लिश्नातिरत्र सकर्मकः । यथा "क्लिश्नाति भुवनत्रयम्" इति । कचित्त्वकर्मकः "क्लिश्नाति भोगेच्छया" इति । लक्ष्मणवक्षसा स्वं वक्षः पीडयन्निवेत्युत्प्रेक्षया तद्वक्षसि बहुमानः स्ववक्षसि निर्वेदश्च द्योत्यते ॥

  

पदा—सौमित्रिणेति । तदनु स सौमित्रिणा संससृजे च । स भरतः सुग्रीवविभीषणवन्दनानन्तरन्तु प्रणमता लक्ष्मणेन संसर्गमगाच्च । "सृज विसर्गे" इति श्यन्विकरणो धातुः । संसर्गप्रकारमाह—नम्रशिरसमेनमुत्थाप्य भृशमालिलिङ्ग इति । नम्रं नमनशीलं शिरो यस्य । भरतप्राप्तिपर्यन्तं नतोत्तमाङ्गमित्यर्थः । आलिलिङ्गे आलिङ्गितवान् । अस्य उरस्थलेन भुजमध्यं क्लिश्नन्निव । अस्य लक्ष्मणस्य । भुजमध्यं वक्षः । क्लिश्नन् पीडयन् । लक्ष्मणस्य वक्षसा निजं वक्षः पीडयन्निवेत्यर्थः । दृढत्वमुत्प्रेक्षाहेतुः । क्लिश्नातिरत्र सकर्मकः । तथाच कुमारसम्भवे । "क्लिश्नाति भुवनत्रयम्" इति । उत्प्रेक्षया लक्ष्मणवक्षसि बहुमानः स्ववक्षसि निर्वेदश्च ध्वन्यते । लक्ष्मणवक्षसि बहुमाने हेतुमाह—रूढेन्द्रजित्प्रहरणव्रणकर्कशेनेति । रूढेन किणीकृतेन इन्द्रजितः प्रहरणजन्येन व्रणेन कर्कशेन कठिनेन ॥

रामाज्ञया हरिचमूपतयस्तदानीं
कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान् ।
तेषु क्षरत्सु बहुधा मदवारिधारा-
श्शैलाधिरोहणसुखान्युपलेभिरे ते ॥ ७४ ॥

प्रका—रामेति । हरिचमूपतयो नीलादयः । क्षरत्स्विति निर्झरप्रतिवस्तु ॥

पदा—रामेति । हरिचमूपतयः तदानीं रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रान् आरुरुहुः । हरिचमूनां वानरसैन्यानां पतयो नीलाङ्गदादयः । तेषु बहुधा मदवारिधाराः क्षरत्सु ते शैलाधिरोहणसुखानि उपलेभिरे । तेषु गजेन्द्रेषु । बहुधा "करात् कटाभ्याम्" इत्यादिपूर्वोक्तप्रकारेण । क्षरत्सु प्रवाहरूपेण पातयत्सु । अत्र गजानां शैलतुल्यत्वन्निर्झरतुल्यत्वं मदप्रवाहस्य च प्रतिपादितम् ॥

सानुप्लवः प्रभुरपि क्षणदाचराणां
भेजे रथान्दशरथप्रभवानुशिष्टान् ।
मायाविकल्परचितैरपि ये तदीयै-
र्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥ ७५ ॥

प्रका—सानुप्लव इति । अनुप्लवोऽनुचरः । मायया विविधकल्पनेन रचितैः । तुलिता उपमिता कृत्रिमा कायिकक्रियानिर्वृता भक्तिशोभा येषाम् । भक्तिर्भागः । सङ्कल्पनिर्मितात् कायव्यापारनिर्मितस्य सातिशयत्वं विस्मयावहमिति भावः ॥

पदा—सानुप्लव इति । क्षणदाचराणां प्रभुः अपि सानुप्लवः दशरथप्रभवानुशिष्टान् रथान् भेजे । क्षणदाचराणां प्रभुर्विभीषणः । सानुप्लवः सानुचरः । "अभिसारस्त्वभिसरस्सहायोऽनुप्लवोऽनुगः" इति यादवः । दशरथप्रभवेन रामेण अनुशिष्टान् नियुक्तान् । ये मायाविकल्परचितैः तदीयैः स्यन्दनैः अपि तुलितकृत्रिमभक्तिशोभाः न । ये रथाः मायाविकल्परचितैः कल्पः कल्पनं मायया विविधकल्पनानुरूपं निर्मितैरित्यर्थः । तदीयै राक्षससम्बन्धिभिः । तुलिता उपमिता कृत्रिमा करणनिर्वृत्ता भक्तिशोभा विन्यासशोभा येषाम् । भक्तिर्भागेन विन्यासः । राक्षसानां सङ्कल्पमात्रेण यथाकामं निर्मितैस्स्यन्दनैरपि अस्पृष्टसादृश्या इत्यर्थः ॥

भूयस्ततो रघुपतिर्विलसत्पताक-
मध्यास्त कामगति सावरजो विमानम् ।
दोषातनं बुधबृहस्पतियोगदृश्य-
स्ताराधिपस्तरळविद्युदिवाभ्रबृन्दम् ॥ ७६ ॥

प्रका—भूय इति । ततः यथोचितव्यवहाराचरणादनन्तरम् । दोषातनं रात्रिभवम् । बुधबृहस्पतियोगेन दृश्यो दर्शनीयः ॥

पदा—भूय इति । ततः रघुपतिः भूयः सावरजः विमानम् अध्यास्त । ततः वसिष्ठादीन् प्रति यथोचितकर्मानुष्ठानानन्तरम् । सावरजः अवरजाभ्यामनुजाभ्यां भरतलक्ष्मणाभ्यां सहितः । शत्रुघ्नस्तूपकार्यानिर्माणार्थं भरतेन प्रेषितः । अत एव तस्य विमानारोहणाभावः । विलसन्ती पताका ध्वजपटो यस्मिन् । कामगति यथेष्टसञ्चारम् । बुधबृहस्पतियोगदृश्यः ताराधिपः दोषातनं तरळविद्युद् अभ्रबृन्दमिव । बुधस्य सौम्यस्य बृहस्पतेः सुराचार्यस्य च योगेन दृश्यो दर्शनीयः । ताराधिपश्चन्द्रः । दोषातनं रात्रिभवम् । तरळा चञ्चला विद्युत्सौदामिनी यस्मिन् ॥

तत्रेश्वरेण जगतां प्रलयादिवोर्वीं
वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रा-
दभ्युद्धृतां धृतिमतीं भरतो ववन्दे ॥ ७७ ॥

प्रका—तत्रेति । विमाने । प्रलयादेकार्णवात् । घनः सङ्घातः । कृच्छ्रं विपत् ।

१ च्छ्राद् प्रत्यु ।

धृतिमतीमचलनीयव्यवसायामिति भक्त्यतिशयहेतुः । अत्राद्येनोपमानेन उद्धरणस्यान्यदुष्करत्वं द्वितीयेन विश्वसौख्यहेतुत्वञ्च ध्वन्यते ॥

पदा—तत्रेति । भरतः तत्र मैथिलसुतां ववन्दे । तत्र विमाने । जगतामीश्वरेण प्रलयादुर्वीमिव, वर्षात्ययेन अभ्रघनादिन्दोः रुचमिव, रामेण दशकण्ठकृच्छ्रादभ्युद्धृताम् । जगतामीश्वरश्श्रीवराहरूपो हरिः । प्रलयादेकार्णवात् । वर्षात्ययः शरत् । अभ्रघनादभ्रसङ्घातात् । "घनाः कठिनसङ्घातमेघकाठिन्यमुद्गराः" इति वैजयन्ती । रुचं शोभाम् । चशब्दोऽर्थाद्द्रष्टव्यः । दशकण्ठादेव कृच्छ्राद् विपदः । धृतिमतीं धैर्यवतीम्, अचलनीयव्यवसायामित्यर्थः । इदन्तु विशेषणं भक्त्यतिशये हेतुः । अत्राद्येनोपमानेन उद्धरणस्यान्यदुष्करत्वं द्वितीयेन सर्वसौख्यहेतुत्वञ्च ध्वन्यते ॥

लङ्केश्वरप्रणतिभङ्गदृढव्रतन्त-
द्वन्द्यं युगं चरणयोर्जनकात्मजायाः ।
ज्येष्ठानुवृत्तिजटिलञ्च शिरोऽस्य साधो-
रन्योन्यपावनमभूदुभयं समेत्य ॥ ७८ ॥

प्रका—तदेव धृतिमत्त्वं व्याकुर्वन्नाह—लङ्केति । अत्र काव्यलिङ्गेनान्योन्यमुपक्रियते ॥

पदा—धृतिमतीमित्यनेनोक्तमर्थमेव विवृणोति—लङ्केति । जनकात्मजायाः चरणयोः तद्युगं साधोरस्य शिरश्च उभयं समेत्य अन्योन्यपावनमभूत् । समेत्य सङ्गम्य. अन्योन्यपावनं परस्परविशुद्धिकरमासीत् । चरणद्वयस्य शुद्धिकरत्वे हेतुमाह—लङ्केश्वरेति । लङ्केश्वरस्य प्रणतेः प्रणामस्य भङ्गे भञ्जने दृढं निश्चलं व्रतं यस्य । प्रणतिभङ्गोऽत्र प्रणतिफलभञ्जनम् । त्रैलोक्याधिपतौ लङ्केश्वरे प्रणमत्यपि कदाचिदपि तदनुकूलतामप्राप्तामित्यर्थः । अत एव वन्द्यम् । शिरसः शुद्धिकरत्वे हेतुमाह—ज्येष्ठेति । ज्येष्ठस्यानुवृत्त्या अनुसरणेन जटिलं जटावत् । अत्र काव्यलिङ्गमलङ्कारः स च परस्परोपकारकारित्वादन्योन्यालङ्कारमुत्थापयति ॥

क्रोशार्धं प्रकृतिपुरस्सरेण गत्वा
काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्यमार्यः
साकेतोपवनमुदारमध्युवास ॥ ७९ ॥

प्रका—क्रोशार्धमिति । प्रकृतिपुरस्सरेणेत्यासन्नभूपृष्ठता गमनस्य द्योत्यते । स्तिमितो मन्दो जवो यस्येति प्रकृतिगमनानुसारित्वमुक्तम् । शत्रुघ्नेन प्रतिविहिता सज्जिता

उपकार्या राजगृहं यत्र । उदारं महत् । अत्र प्रकरणे रामस्य पुनर्विमानारोहणं भरतस्य सीतावन्दनार्थं, शत्रुघ्नस्य तु उपकार्या प्रतिविधानाय प्रहितत्वात्तदनारोहणं तद्वन्दनञ्चेत्यवसेयम् ॥

इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां दशमः सर्गः ॥

पदा—कोशार्धमिति । काकुत्स्थः पुष्पकेण कोशार्धं गत्वा साकेतोपवनमध्युवास । कोशस्यार्धमेकदेशम् । साकेतमयोध्या । प्रकृतयो जनाः पुरस्सरा यस्य । अनेन गमनस्यासन्नभूभागत्वं द्योत्यते । स्तिमितो मन्दो जवो यस्य । अनेन प्रकृतिगमनानुमारित्वं वेगस्योक्तम् । शत्रुघ्नेन प्रतिविहिता निर्मिता उपकार्या राजगृहं यत्र । उपवनमुद्यानम् । आर्यः श्रेष्ठः । उदारं महत् । "उदारो दातृमहतोः" इति सिंहः । सर्वजनाधिवासयोग्यमित्यर्थः । दिदृक्षूणां जनानां दर्शनयोग्ये स्थले कञ्चित् कालमुवासेत्यर्थः ॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ रघुवंशव्याख्यायां
पदार्थदीपिकायां दशमः सर्गः ॥



# चतुर्दशः सर्गः ।

भर्तुः प्रणाशादथ शोचनीयं दशान्तरं तत्र समं प्रपन्ने ।
अपश्यतां दाशरथी जनन्यौ छेदादिवोपघ्नतरोर्व्रतत्यौ ॥ १ ॥

**प्रका**—अथाभिषेकादिकं वर्णयितुमुपक्रमते—भर्तुरिति । शोचनीयं विधवाकारवेषोपगतम् । दशान्तरं प्राग्दृष्टदशाया अन्यां दशाम् । समं तुल्यरूपम् । तत्रेति उपवनोपकार्यायाम् । जनन्यौ कौसल्यासुमित्रे । ते हि पुत्रदर्शनौत्सुक्यात् पुरान्निष्क्रम्य तत्र स्थिते । कैकेय्यास्त्वनिष्क्रमणस्य हेतुर्लज्जा । सा च वक्ष्यते । "उपघ्न आश्रये" इति निपातः । व्रतत्यौ लते ॥

**पदा**—भर्तुरिति । अथ दाशरथी तत्र जनन्यौ अपश्यताम् । दाशरथी रामलक्ष्मणौ । तत्र उपवनोपकार्यायाम् । जनन्यौ कौसल्यां सुमित्राञ्च । ते हि पुत्रदर्शनत्वरया पुरान्निष्क्रम्य पूर्वमेव तत्रागत्य स्थिते । कैकेयी तु लज्जावशाद् भवनान्न निर्गता । अत एव तस्या लज्जापनयनप्रकारं वक्ष्यति । प्रणाशात् शोचनीयं दशान्तरं समं प्रपन्ने । प्रणाशाद्विनाशात् । शोचनीयं शोच्यं विधवाकारपरिग्रहाद्दृष्टुरपि शोकावहमित्यर्थः । दशान्तरं प्राग्दृष्टदशाया अन्यादृशीं दशाम् । समम् अलङ्कारपरित्यागादिभिरुभयोरपि तुल्यरूपम् । प्रपन्ने प्राप्ते । अत्रोपमामाह—उपघ्नतरोः छेदाद् व्रतत्यौ इव इति । उपघ्नतरोराश्रयवृक्षस्य । "उपघ्न आश्रये" इति निपातः । व्रतत्यौ लते ॥

उभावुभाभ्यां प्रणतौ नतारी यथाक्रमं विक्रमशोभिनौ तौ ।
विस्पष्टमस्रान्धतया न दृष्टौ ज्ञातौ सुतस्पर्शसुखोपलम्भात् ॥ २ ॥

**प्रका**—उभाविति । नतारी गुरुजनादृते प्रणाममशिक्षितावित्यर्थः । उभाभ्यामिति प्रणामापेक्षया चतुर्थी दर्शनापेक्षया तृतीया । यथाक्रमं ज्येष्ठक्रमेण । विक्रमशोभिनौ वीरव्रणलक्ष्माणौ । अनेनातिशयदर्शनीयत्वमुक्तम् । बाष्पावृतदृष्टित्वादुभाभ्यां विस्पष्टन्न दृष्टौ, किन्त्वनुभूतचरेण स्पर्शसुखेन ज्ञातावित्यर्थः । बाष्पोऽत्र चिरवियोगदुःखजः ॥

**पदा**—उभाविति । उभौ यथाक्रमं प्रणतौ तौ उभाभ्याम् अस्रान्धतया विस्पष्टन्न दृष्टौ । यथाक्रमं ज्येष्ठक्रमेण मातृवयःक्रमेण च प्रणतौ कृतप्रणामौ उभाभ्यां कौसल्यासुमित्राभ्याम् अस्रैश्चिरवियोगाद्भर्तृमरणानुस्मरणाच्च सञ्जातैरश्रुभिरन्धतया अन्धीकृतने-

त्वाद्धेतोः विस्पष्टं न दृष्टौ । सुतस्पर्शसुखोपलम्भज्ज्ञातौ किन्तु चिरानुभूतचरस्य सुतस्पर्शसुखस्य उपलम्भादन्तरनुभवादेव ज्ञातौ । नताः प्रणता अरयो याभ्याम् । शत्रुभिः प्रणताविवत्यर्थः । गुरुजनेष्वेव प्रणाम इति भावः । विक्रमेण शोभितुं शीलमनयोरिति तथा ॥

आनन्दजः शोकजमश्रु बाष्पस्तयोरशीतं शिशिरो बिभेद ।
गङ्गासरय्वोर्जलमुष्णतप्तं हिमाद्रिनिष्यन्द इवावतीर्णः ॥ ३ ॥

प्रका—अथानन्दजमाह—आनन्दजेति । बिभेद भेदमनयद्, अन्यथात्वमनयत् । उष्णो ग्रीष्मः । अवतीर्णोऽनुप्रविष्टः ॥

पदा—आनन्दज इति । तयोः आनन्दजः बाष्पः शोकजम् अश्रु बिभेद भेदमनयत् । अशीतमुष्णम् । शिशिरः शीतलः । आनन्दजस्य बाष्पस्य शीतलत्वादत्युष्णं शोकजमश्र्वेव शीतमनयदित्यर्थः । अवतीर्णः हिमाद्रिनिष्यन्दः गङ्गासरय्वोः उष्णं जलमिव । अवतीर्णोऽनुप्रविष्टः । हिमाद्रेर्हिमाचलस्य निष्यन्दो निर्झरः उष्णेन ग्रीष्मेण तप्तम् ॥

ते पुत्रयोर्नैरृतशस्त्रमार्गानार्द्रानिवाङ्गे सदयं स्पृशन्त्यौ ।
अपीप्सितं क्षत्रकुलाङ्गनानां न वीरसूशब्दमकामयेताम् ॥ ४ ॥

प्रका—ते इति । मार्गशब्देन क्षतं लक्ष्यते । ध्वन्यते चाभोगवत्ता । वीरसूश्चासौ शब्दश्चेति कर्मधारयः । "सत्सूद्विष" इत्यादिना क्विप् । नाऽकामयेतामजुगुप्सेताम् । वीरसुवश्चैवं पुत्रान् पश्यन्तीति ॥

पदा—ते इति । ते वीरसूशब्दं न अकामयेताम् । ते कौसल्यासुमित्रे । वीरसूरिति शब्दः वीरसूशब्दः । वीरं सूते इति वीरसूः । "सत्सूद्विष" इत्यादिना क्विप् । नाकामयेतां निनिन्दतुरिति यावत् । क्षत्रकुलाङ्गनानाम् ईप्सितमपि । ईप्सितमिष्टमपि । तत्र हेतुमाह—पुत्रयोः अङ्गे नैरृतशस्त्रमार्गान् आर्द्रान् इव सदयं स्पृशन्त्यौ इति । नैरृतानां राक्षसानां शस्त्रमार्गात् शस्त्रव्रणान् । आर्द्रान् क्षरत्क्षतजान् । आर्द्रक्षतस्पर्शनेन हि पीडाभयात्सदयत्वं भवति ॥

क्लेशावहा भर्तुरलक्षणाऽहं सीतेति नाम स्वमुदीरयन्ती ।
स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे ॥ ५ ॥

प्रका—क्लेशेति । अलक्षणेति क्लेशावहत्वे हेतुः । इतीति । निर्वेदगर्भवि-

शेषणविशिष्टमित्यर्थः। स्वर्गे प्रतिष्ठा यस्येत्यनेन रामायणसिद्धां लङ्कायां दृष्टस्य दशरथस्य इन्द्रादिसमकक्ष्यां पदप्राप्तिं भक्त्यतिशयहेतुत्वेन द्योतयति। गुरोर्महिष्यावित्यभक्तिभेदहेतुसीताबुद्ध्यनुसारेणोक्तम्। न हि तस्या इयं भर्तृमाता, इयं देवरमातेति भेदेन बुद्धिः, किन्तु गुरोर्महिष्यावित्यभेदेनैव ॥

पदा—क्लेशेति। वधूः स्वर्गप्रतिष्ठस्य गुरोः महिष्यौ अभक्तिभेदेन ववन्दे। वधूः पुत्रभार्या। स्वर्गे प्रतिष्ठा आस्पदं यस्य। गुरोः दशरथस्य। महिष्यौ भार्ये। अभक्तिभेदेन भक्तिभेदं विना। इयं भर्तृमाता, इयन्तु देवरमाता इति भक्तिभेदस्तदानीं न जात इत्यर्थः। तत्र हेतुः—स्वर्गप्रतिष्ठस्य गुरोर्महिष्याविति। मम गुरोर्महिष्यावेते इति बुद्धिरेव तदा जातेत्यर्थः। अहं भर्तुः क्लेशावहा अलक्षणा सीता इति स्वं नाम उदीरयन्ती भर्तुर्मनश्शरीरयोः पीडाकरी। तत्र हेतुः—अलक्षणेति। महाभाग्यलक्षणैर्हीना ॥

**उत्तिष्ठ वत्से! ननु सानुजोऽसौ वृत्तेन भर्ता शुचिना तवैव।**
**कृच्छ्रं महत्तीर्ण इति प्रियार्हां तामूचतुस्ते प्रियमप्यमिथ्या ॥ ६ ॥**

प्रका—उत्तिष्ठेति। ननु सम्प्रधारणे। शुचिना विमलेन। प्रियमपीति। प्रियं हि प्रायेणासत्यं भवति ॥

पदा—उत्तिष्ठेति। वत्से! त्वम्। उत्तिष्ठ उत्थानं कुरु। शुचिना तव वृत्तेन एव ननु सानुजः असौ भर्ता महत् कृच्छ्रं तीर्णः। शुचिना निर्मलेन। वृत्तेन पातिव्रत्यनिष्ठया। एवशब्दोऽवधारणे। ननुशब्दः प्रसिद्धौ। कृच्छ्रं विपत्। ते ताम् इति ऊचतुः। ते कौसल्यासुमित्रे। प्रियार्हां प्रियवचनयोग्याम्। इतिशब्दोक्तं वचनप्रकारं विशिनष्टि—प्रियमपि अमिथ्येति। प्रियवचनं हि प्रायेण असत्यं भवति; अत्र तु सत्यमेवासीदित्यर्थः ॥

**अथाभिषेकं रघुवंशकेतोः प्रारब्धमानन्दजलैर्जनन्योः।**
**निर्वर्तयामासुरमात्यवृद्धास्तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥ ७ ॥**

प्रका—अथेति। निर्वर्तयामासुः समापितवन्तः ॥

पदा—अथेति। अथ अमात्यमुख्याः तीर्थाहृतैः काञ्चनकुम्भतोयैः रघुवंशकेतोः अभिषेकं निर्वर्तयामासुः। अथ प्रधानामात्याः गङ्गादिभ्यस्तीर्थेभ्यस्समाहृतैः काञ्चनकुम्भसम्भृतैः तोयैः रघुवंशस्य केतुवदलङ्कारभूतस्य रामस्याभिषेकं समापयामासुः। आरम्भमाह—जनन्योः आनन्दजलैः प्रारब्धमिति। आनन्दजलैर्हर्षाश्रुवर्षैः ॥

सरित्समुद्रान् सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि ।
तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः ॥ ८ ॥

प्रका—तत्प्रकारमाह—सरिदिति । उपपादितान्यानीतानि । पर्यायप्रक्रमभेदशङ्किनस्तु "प्रभवानि यद्वत्" इति पठन्ति ॥

पदा—तत्प्रकारमाह—सरिदिति । जिष्णोः तस्य मूर्ध्नि जलानि अपतन् । जिष्णोर्जयशीलस्य । अनेन राज्याभिषेकयोग्यतोक्ता । मेघप्रभवा आपः । विन्ध्यस्य इव । मेघात् प्रभवो यासाम् । आपो जलानि । मूर्ध्नीत्यनुषङ्गः । रक्षःकपीन्द्रैस्सरित्समुद्रान् सरसीः च गत्वा उपपादितानि । सरितो नदीः । सरसीः सरांसि । उपपादितानि आनीतानि ॥

तपस्विवेषक्रिययापि तावद्यः प्रेक्षणीयः सुतरां बभूव ।
राजेन्द्रनेपथ्यविधानशोभा तस्योदितासीत् पुनरुक्तदोषा ॥ ९ ॥

प्रका—तपस्वीति । क्रियया विधानेन । तावत् प्रथमम् । उदिता आविर्भूता । पुनरुक्ताख्यो दोषो यस्यास्सा पुनरुक्तदोषा । स्वाभाविकशोभाया द्विगुणासीदित्यर्थः । "स्यात् पुनरुक्तदोषा" इतिपाठे उदिता उक्ता, ततो न वर्णितेति शेषः ॥

पदा—तपस्वीति । यः तावत् तपस्विवेषक्रियया अपि सुतरां प्रेक्षणीयः बभूव, तस्य उदिता राजेन्द्रनेपथ्यविधानशोभा पुनरुक्तदोषा आसीत् । तावत् प्रथमम् । तपस्विनां वेषस्य अलङ्कारस्य क्रियया विधानेन, जटावल्कलादिधारणेनापीत्यर्थः । प्रेक्षणीयो दर्शनीयः । उदिता आविर्भूता । राजेन्द्राणां चक्रवर्तिनां नेपथ्यमाकल्पः, अलङ्कार इत्यर्थः । "आकल्पवेषौ नेपथ्यम्" इति सिंहः । तस्य विधानेन निर्माणेन, कटकमकुटाद्यलङ्कारविरचनेनेत्यर्थः । पुनरुक्ताख्यो दोषो यस्याः । स्वाभाविकशोभाया राजेन्द्रनेपथ्यविधानशोभा द्विगुणा बभूवेत्यर्थः । उक्तस्यैव पुनर्वचनं हि पौनरुक्त्यम् । तदेव पुनरुक्तमिति चोच्यते । तस्य च दोषत्वं प्रसिद्धम् । अत्र जातस्यैव पुनर्विधाने पुनरुक्तत्वोपचारः ॥

स मौलरक्षोहरिभिश्रसैन्यस्तूर्यस्वनानन्दितपौरवर्गः ।
विवेश सौधोद्गतलाजवर्षामुत्तोरणामन्वयराजधानीम् ॥ १० ॥

प्रका—स इति । मौलाः कुलभृत्याः । अत्रोदात्तमलङ्कारः ॥

पदा—स इति । स अन्वयराजधानीं विवेश । उपकार्याया स्वराजधानीमेव प्राप्तवान् । मौलैः कुलभृत्यैः रक्षोभिः राक्षसैः हरिभिर्वानरैश्च मिश्रं सम्मिलितं सैन्यं यस्य ।

तूर्यस्वनेन पणवनिनादेन आनन्दिताः पौरवर्गा येन । सौधादुद्गतानि लाजवर्षाणि यस्याम् । उत्क्षिप्तं तोरणं यस्याम् । अत्रोदात्तमलङ्कारः । "उदात्तं वस्तुनः सम्पद्" इति ॥

सौमित्रिणा सावरजेन मन्दमाधूतवालव्यजनो रथस्थः ।
धृतातपत्रो भरतेन भास्वानुपायसङ्घात इव प्रसिद्धः ॥ ११ ॥

प्रका—सौमित्रिणेति । अवरजसन्निधानात्सौमित्रिर्लक्ष्मणः । रूढो वायं शब्दो लक्ष्मणे, पार्थशब्द इवार्जुने । मन्दमित्यानन्दपरवशतां तयोर्द्योतयति । भास्वान् दीप्तः । साक्षादिति वा पाठः । प्रसिद्धोऽलङ्कृतः । तथा प्रसिद्धपदं ध्वनिवृत्तिकृद्व्याख्यातवान् । अथवा प्रसिद्धः प्रकर्षेण सिद्धः सम्पन्नः इत्यर्थः । उपायानां सामादीनां सङ्घात इवेति भ्रातृसहिते राम उपायसमूह उत्प्रेक्ष्यते । समस्तार्थसाधनत्वादि द्योत्यम । दृश्यते चानेकसान्निध्येनैकस्मिन्नपि समूहारोपणाम् । यथा माघे "राजयक्ष्मेव रोगाणां समूहः स महीभृताम्" इति । प्रवृद्ध इति पाठमादृत्य उपायसङ्घाते प्रवृद्ध उपाय इव भ्रातृभिरनुगतो राम इति केचित् ॥

पदा—गमनप्रकारमाह—सौमित्रिणेति । सावरजेन सौमित्रिणा मन्दम् आधूतवालव्यजनः । अवरजः शत्रुघ्नः तेन सहितेन । सौमित्रिशब्दो लक्ष्मणे रूढः, यथा पार्थशब्दोऽर्जुने । मन्दमिति क्रियाविशेषणम् । तच्च बालव्यजनावधूननस्वभावः । आधूतश्चालितं बालव्यजनं चामरं यस्य । रथस्थः, न तु पूर्ववद्विमानस्थः । भरतेन धृतातपत्रः उद्धृतश्वेतच्छत्रः । भास्वान् दीप्तः, शोभावानित्यर्थः । एवंभूतं राममुत्प्रेक्षते — प्रसिद्ध उपायसङ्घात इवेति । प्रकर्षेण सिद्धः प्रसिद्धः, तत्तदवसरकृतेन प्रयोगेण सम्यक् प्रसिद्धशक्तिरित्यर्थः । उपायानां सामादीनां सङ्घातस्समूहः । सामदानभेदानां सङ्घात एकत्रावस्थित इवेत्यर्थः । किं किन्नानेन साध्यमिति च द्योत्यते ॥

प्रमोदकालागरुधूमराजिस्तस्याः[1] पुरो वायुवशेन भिन्ना ।
वनान्निवृत्तेन रघूद्वहेन मुक्ता स्वयं वेणिरिवाबभासे ॥ १२ ॥

प्रका—प्रमोदेति । पौरप्रमोदस्य हेतुत्वात्तृतीयासमासः । भिन्ना विकीर्णा । वेणिरिवेति । प्रोष्यागतेन भर्त्रा वेण्युद्वेष्टयितव्येति प्रसिद्धिमनुसृत्य वेणित्वोत्प्रेक्षा । गन्धवर्णसंस्थानसादृश्यं हेतुः । पुर्याश्च नायिकाया इव चिरप्रवुषितनिखिलोचितसेकसम्मार्जनादिप्रसाधनारम्भो ध्वन्यते ॥

१ प्रासा ।

पदा—प्रमोदेति। तस्याः पुरः वायुवशेन भिन्ना प्रमोदकालागरुधूमराजिः आबभासे। भिन्ना इतस्ततो विकीर्णा। प्रमोदकालागरुधूमशब्देऽत्र तृतीयासमासः। सा तु तृतीया हेतौ। कालागरुरगरुविशेषः। प्रमोदेन हेतुना यः कालागरुधूमः इति विग्रहः। पौरैः प्रमोदेन हेतुना प्रवर्तितः कालागरुधूमराजिरित्यर्थः। वनान्निवृत्तेन रघूद्वहेन स्वयं मुक्ता वेणिः इव। वेणिः केशबन्धः। प्रोष्यागतेन भर्त्रा स्वयमेव वेण्या उद्वेष्टनं कर्तव्यमिति प्रसिद्धिमनुसृत्यैवमुक्तम्। उक्तञ्च "मोक्ष्यथ स्वर्गबन्दीनां वेणीबन्धानदूषितान्" इति। एकवेणीधारणं हि भर्तृविरहे पतिव्रतानां व्रतम्। उक्तञ्च शाकुन्तले "नियमक्षाममुखी धृतैकवेणिः" इति। वर्णसंस्थानसादृश्यं सौरभ्यञ्चोत्प्रेक्षाहेतुः। चिरविलुप्तसेकसम्मार्जनादिप्रसाधनारम्भश्च ध्वन्यते॥

श्वश्रूजनानुष्ठितचारुवेषां कर्णीरथस्थां रघुवीरपत्नीम्।
विमानवातायनदृश्यबन्धैः साकेतनार्योऽञ्जलिभिः प्रणेमुः ॥ १३ ॥

प्रका—श्वश्रूजनेति। कर्णीरथोऽल्परथः। "कर्णीरथः प्रवहणं डयनं रथगर्भक" इति यादवः। विमानानि गृहाणि तद्वातायनदृश्या बन्धा येषाम्। श्वश्रूजनेत्यादि तद्दर्शनस्याद्भुतत्वमुक्तम्। कर्णीरथस्थामिति सुलभत्वमुक्तम्। रघुवीरपत्नीमिति। समुद्रसेतुबन्धोपक्रममहापदानप्रत्याहृतत्वपतिव्रतावृत्तपारगत्वादिश्रवणजनितविस्मयव्यभिचार्यौत्सुक्यनिर्भरत्वं ध्वनितम्॥

पदा—श्वश्रूजनेति। साकेतनार्यः रघुवीरपत्नीमञ्जलिभिः प्रणेमुः। साञ्जलिबन्धं नमश्चक्रुरित्यर्थः। श्वश्रूजनेन कौसल्यासुमित्राभ्यामनुष्ठितो विहितः चारुः सुन्दरो वेषोऽलङ्कारो यस्याः। कर्णीरथस्थां, कर्णीरथोऽल्परथः। "कर्णीरथः प्रवहणं डयनं रथगर्भक" इति यादवः। तत्र स्थिताम्। अनेन दर्शनसौकर्यमुक्तम्। प्रासादे रामाद्यागमनदर्शनार्थन्नारीभिरारूढे प्रासादे यानि वातायनानि गवाक्षाः तैर्दृश्यो बन्धो बन्धनं येषाम्॥

स्फुरत्प्रभामण्डलमानसूयं सा बिभ्रती शाश्वतमङ्गरागम्।
रराज शुद्धेति पुनः स्वपुर्यै सन्दर्शिता वह्निगतेव भर्त्रा ॥ १४ ॥

प्रका—स्फुरदिति। अङ्गरागस्य दिव्यत्वं विशेषणाभ्यां द्योत्यते। उत्प्रेक्षया त्वस्यास्तथाविदधर्शनमेव शुद्धेः कस्य न प्रत्यायकमिति ध्वन्यते॥

पदा—स्फुरदिति। आनसूयं शाश्वतमङ्गरागं बिभ्रती सा रराज। अनसूयाया आगतं, तया दत्तमित्यर्थः। शाश्वतं नित्यम्। स्नानादिभिरप्यनिवर्त्यमित्यर्थः। स्फुरत् शोभमानं प्रभामण्डलं मण्डलाकारा प्रभा यस्य। अत एवोत्प्रेक्षते—वह्निगता शुद्धा इति

भर्त्रा पुनः स्वपुर्यै सन्दर्शिता इवेति । पुनः पुनरपि । स्वपुर्यै अयोध्यावासिने जनाय। दिव्याङ्गरागस्य प्रभामण्डले वह्निस्वप्रतीतिरुत्प्रेक्षाहेतुः । शुद्धिसन्देहस्यात्यन्तनिवृत्तिः फलम् । एवमियं पूर्वं शुद्धा इति पुनरपि स्वपुर्यै सन्दर्शितेवेत्यर्थः ॥

वेश्मानि रामः परिबर्हवन्ति विश्राण्य सौहार्दनिधिः सुहृद्भ्यः ।
बाष्पायमाणो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश ॥ १५॥

प्रका—वेश्मानीति । परिबर्हवन्ति सपरिच्छदानि । विश्राण्य "श्रणु दाने" इति धातोः । सौहार्दमिति युवादित्वादण् । "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः । सुहृद्भ्यः सुग्रीवादिभ्यः । बाष्पायमाणः "बाष्पोष्मभ्यामुद्वमने" इति क्यष्। बलिमदविच्छिन्नोपहारम् । आलेख्यशेषस्येति शोकोद्दीपनविभावः ॥

पदा—वेश्मानीति । रामः सुहृद्भ्यः वेश्मानि विश्राण्य पितुः निकेतं विवेश । सुहृद्भ्यः सुग्रीवविभीषणादिभ्यः । वेश्मानि गृहाणि । विश्राण्य दत्त्वा । "श्रणु दाने" इति धातोरिदं रूपम् । परिबर्हवन्ति सपरिच्छदानि, सम्पादितसर्वोपकरणानीत्यर्थः । निकेतं गृहं पित्रा नित्याधिष्ठितं कक्ष्याविशेषमित्यर्थः । सौहार्दमिति युवादित्वादण् । "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः । सुहृत्त्वमित्यर्थः । बाष्पायमाणः बाष्पमुद्वमन् । "बाष्पोष्मभ्यामुद्वमने" इति क्यष् । बलीमद् अविच्छिन्नोपहारम् । आलेख्यशेषस्य चित्रगतप्रतिकृतिमात्रशेषस्येत्यर्थः । अनेन शोकोद्दीपनविभावः ॥

कृताञ्जलिस्तत्र यदम्ब! सत्यान्नाभ्रश्यत स्वर्गफलाद्गुरुर्नः ।
तच्चिन्त्यमानं सुकृतं तवेति जहार लज्जां भरतस्य मातुः ॥ १६॥

प्रका—कृतेति । तवेति तस्यास्त्रपया पुरादनिर्गमनमुक्तम् । पिता नः सत्याच्छ्रेयसः परमसाधनभूताद्यदभ्रष्टोभूत्, तन्निपुणदृष्ट्या विचार्यमाणं सत्त्वत्कृत उपकार इति प्रदर्शनेन कैकेय्या लज्जामपानयदित्यर्थः ॥

पदा—कृतेति । स तत्र कृताञ्जलिः अम्ब! नः गुरुः स्वर्गफलात्सत्यात् न अभ्रश्यत यत्, तत् चिन्त्यमानं तव सुकृतमिति भरतस्य मातुः लज्जां जहार । तत्र पितृभवने । अनेन कैकेय्यास्त्रपया सततं पितृभवन एव अवस्थानमुक्तम् । स्वर्गः फलं यस्य । हे मातः! अस्माकं पिता श्रेयसः परमसाधनभूतात्सत्यान्न भ्रष्टोऽभूदिति यत्तन्निपुणदृष्ट्या निरूप्यमाणं सत् त्वत्कृत उपकार एवेति वदन् कैकेय्या लज्जामपजहार ॥

तथा च सुग्रीवविभीषणादीनुपाचरत् कृत्रिमसंविधाभिः ।
सङ्कल्पमात्रोदितसिद्धयस्ते क्रान्ता यथा चेतसि विस्मयेन ॥ १७ ॥

प्रका—तथा चेति । तथैवेति वा पाठः । तथा तेन प्रकारेण । उपाचरत् सम्भावयामास । सङ्कल्पमात्रेण उदिता सिद्धिरुपजीव्यद्रव्यसम्पत्तिर्दिव्यानुभावत्वाद्येषाम् । कृत्रिमाभिः कायिकव्यापारनिर्वृत्ताभिः संविधाभिः स्नानपानाशनशयनरचनाभिः । तथा सुहृदः सुग्रीवादीनर्चितवान्, यथा सङ्कल्पायत्तसिद्धयोऽपि ते विसिष्मियिरे इत्यर्थः ॥

पदा—तथेति । सुग्रीवविभीषणादीन् च कृत्रिमसंविधाभिः तथा उपाचरत् । कृत्रिमाभिः करणनिर्वृत्ताभिः । संविधाभिः स्नानपानाशनरचनाभिः । उपाचरत् सम्भावयामास । सङ्कल्पमात्रोदितसिद्धयः ते यथा चेतसि विस्मयेन क्रान्ताः । सङ्कल्पमात्रेण केवलेन सङ्कल्पेन उदिता उत्पन्ना सिद्धिः उपजीव्यद्रव्यसम्पत्तिर्येषाम् । दिव्यानुभावशालित्वादिति शेषः । क्रान्ता आक्रान्ताः । सङ्कल्पमात्रायत्तोपकरणसम्पत्तीनां तेषां चेतसि यथा विस्मयो भवति, कायिकव्यापारनिर्वृत्तैरुपकरणैस्तथा सम्भावयामासेत्यर्थः ॥

सभाजनायोपगतान् स दिव्यान् मुनीन् पुरस्कृत्य हतस्य शत्रोः ।
शुश्राव तेभ्यः प्रभवादिवृत्तं स्वविक्रमे गौरवमादधानम् ॥ १८ ॥

प्रका—सभाजनायेति । प्रीतिदर्शनायागतान् । पुरस्कृत्य सम्पूज्य । शत्रोः रावणस्य । गौरवमिति । पूर्वं कियदिदमित्यनास्थापदत्वं विक्रमस्य द्योत्यते ॥

पदा—सभाजनेति । स सभाजनाय उपगतान् दिव्यान् मुनीन् पुरस्कृत्य तेभ्यः हतस्य शत्रोः प्रभवादिवृत्तं शुश्राव । सभाजनाय । "सभाज प्रीतिदर्शनयोः" इति धातुः । अत्र तु द्वावप्यर्थौ योज्यौ । प्रीतिदर्शनायेत्यर्थः । प्रीत्या यद्दर्शनं तदिह प्रीतिदर्शनम् । दिव्यान् महाप्रभावान् । पुरस्कृत्य सम्पूज्य । शत्रोः रावणस्य प्रभवो जन्मैवादिर्यस्य । जन्मन आरभ्य तपश्चरणपर्यन्तं वृत्तान्तमित्यर्थः । स्वविक्रमे गौरवमादधानं पूर्वं रामस्य स्वविक्रमेषु अनास्थैव तद्वृत्तान्तश्रवणानन्तरं गौरवं जातमिति भावः ॥

प्रतिप्रयातेषु तपोधनेषु सुखादविज्ञातगतार्धमासान् ।
सीतास्वहस्तोपहृताग्र्यपूजान् रक्षःकपीन्द्रान् विससर्ज रामः ॥ १९ ॥

प्रका—प्रतिप्रयातेष्विति । सुखाद्दानमानादिकृतात् । अग्र्यपूजा श्रेष्ठपूजा । श्रेष्ठत्वञ्च सीतास्वहस्तोपहृतत्वेन विशेषितम् ॥

पदा—प्रतिप्रयातेष्विति । रामः तपोधनेषु प्रतिप्रयातेषु रक्षःकपीन्द्रान् विस-

१ थैव ।

 

सर्ज । रक्षःकपीन्द्रान् विभीषणसुग्रीवादीन् । सुखादविज्ञातगतार्धमासान् दानमानादिकृतात्सुखादविज्ञातमेव गतोऽर्धमासो मासैकदेशो येषाम् । तत्र हेतुमाह—सीतास्वहस्तोपहृतार्घ्यपूजानिति । सीतया स्वहस्तेनैव उपहृता दत्ता अर्घ्यपूजा श्रेष्ठपूजा येषाम् ॥

तच्चात्मचिन्तासुलभं विमानं हृतं सुरारेः सह जीवितेन ।
कैलासनाथोद्वहनाय भूयः पुष्पं दिवः पुष्पकमन्वमंस्त ॥ २० ॥

प्रका—तच्चेति । आत्मचिन्तासुलभं स्मृतिमात्रोपस्थायि । कृत्वेति शेषः । अत्र हेतुभूतं विक्रमार्जितत्वमाह—हृतमित्यादिना । कैलासनाथोद्वहनायेति । सुरकार्यकृत्त्वमुक्तम् । भूय इति प्रागपि तद्वाहनं तदिति द्योतयति । पुष्पं भूषणमित्यर्थः । अन्वमंस्त आज्ञापितवान् ॥

पदा—तच्चेति । पुष्पकं तद्विमानम् आत्मचिन्तासुलभं भूयः कैलासनाथोद्वहनाय अन्वमंस्त च । आत्मनश्चिन्तया सुलभं सुखेन लभ्यम् । कृत्वेति शेषः । भूयः पुनरपि । कैलासनाथो वैश्रवणः । अन्वमंस्त आज्ञापितवान् । येन प्रतिप्रयाणं न कृतं तत् पुष्पकाख्यं वैश्रवणस्य विमानं स्मरणमात्रे सत्यागन्तव्यमिति नियुज्य पुनरपि वैश्रवणोद्धरणार्थमनुमेने चेत्यर्थः । आत्मचिन्तासुलभत्वविधाने हेतुः विक्रमार्जितत्वम् । तदेवाह—सुरारेः जीवितेन सह हृतमिति । सुरारेः रावणस्य । दिवः पुष्पं स्वर्गस्य भूषणमित्यर्थः ॥

पितुर्निदेशाद्वनवासमेवं निस्तीर्य रामः प्रतिपन्नराज्यः ।
धर्मार्थकामेषु समं प्रपेदे [1]तथा [2]यथैवावरजेषु वृत्तिम् ॥ २१ ॥

प्रका—पितुरिति । सममिति प्रपत्तिक्रियाविशेषणम् । तथा यथेति पाठः । अत्र पूर्वार्धेनाऽनुवादरूपेण राजर्षिवृत्तेऽधिकार उक्तः । वृत्तञ्च धर्मार्थेत्यादिना सङ्ग्रहेण दर्शितम् ॥

पदा—पितुरिति । पितुर्निदेशादेवं वनवासन्निस्तीर्य प्रतिपन्नराज्यः रामः अवरजेषु यथा, तथा एव धर्मार्थकामेषु समं वृत्तिं प्रपेदे । निस्तीर्य तीर्त्वा । अवरजेषु अनुजेषु । यथा राज्यप्राप्तेः पूर्वमवरजेषु समं वृत्तिं प्राप्तवान्, राज्यप्राप्त्यनन्तरन्तु राजर्षिवृत्तानुसारित्वात्तथैव धर्मार्थकामत्रयेऽपीत्यर्थः ॥

सर्वासु मातृष्वपि वत्सलत्वात्स निर्विशेषप्रतिपत्तिरासीत् ।
षडाननापीतपयोधरासु नेता चमूनामिव कृत्तिकासु ॥ २२ ॥

१ य । २ त ।

प्रका—विस्तरेण दर्शयितुमुपक्रमते—सर्वास्विति। वत्सलत्वात् स्निग्धत्वात्। न तु लोकप्रतिपत्त्यर्थित्वात्। प्रतिपत्तिः प्रवृत्तिः। षडाननेति वृत्तिसाम्यं दर्शितम्। भगवतः स्कन्दस्य कृत्तिकास्तनपानं महाभारतादिसिद्धम्। अनेन गुरुषु वृत्तिरुक्ता॥

पदा—सर्वास्विति। स सर्वासु मातृषु अपि वत्सलत्वाद् निर्विशेषप्रतिपत्तिः आसीत्। वत्सलः स्निग्धः। "स्निग्धस्तु वत्सल" इत्यमरः। निर्विशेषप्रतिपत्तिः समानबहुमानः। वात्सल्यादेव समानबहुमानोऽभून्न तु लोकप्रतिपत्त्यर्थित्वादिति भावः। चमूनां नेता षडाननापीतपयोधरासु कृत्तिकासु इव। चमूनां देवसेनानां नेता रक्षिता सुब्रह्मण्यः षड्भिराननैरापीताः पीताः पयोधरा यासां कृत्तिकानक्षत्राणाम्। कृत्तिकानक्षत्राणां षट्सङ्ख्यायोगित्वात् षड्भिराननैः कार्तिकेयः तदीयं स्तनं पपाविति पुराणप्रसिद्धिः॥

तेनाऽर्थवाँल्लोभपराङ्मुखेन तेन घ्नता विघ्नभयं क्रियावान्।
तेनाऽस लोकः पितृमान् विनेत्रा तेनैव शोकापनुदेन पुत्री ॥ २३ ॥

प्रका—लोके वृत्तिमाह—तेनेति। क्रियावान् यज्ञादिप्रवृत्तः। आस "अस गतिदीप्त्यादानेषु" इति धातोः। नास्तेः। भूभावप्रसङ्गात्। शोकापनुदेन। "तुन्दशोकयोः परिमृजापनुदोः" इति कः। लोकस्तेनैवमेवम्भूतः सन्दिदीप इत्यर्थः। अलार्थदूषणराहित्यं पालनं विनयाधानं भरणञ्च क्रमादुक्तम्॥

पदा—तेनेति। लोकः तेन अर्थवान् आस। आसेत्यस्तिधातोर्न रूपम्। तस्य "अस्तेर्भूः" इति भूभावप्रसङ्गात्। "अस गतिदीप्त्यादानेषु" इति धातोरेवायं शब्दः। लोकस्तेनार्थवान् भूत्वा सन्दिदीप इत्यर्थः। एवं सर्वत्र। अत्र हेतुर्लोभपराङ्मुखेनेति। लोभात् पराङ्मुखेन स्वभावादेव निवृत्तेन। अनेन अर्थदूषणराहित्यमुक्तम्। तेन क्रियावान्। आसेत्यनुषज्यते। अत्र हेतुर्विघ्नभयं घ्नतेति। अत्र तु विघ्नाः विघ्नकराः। वक्ष्यति च "आसन्यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः" इति। विघ्नेभ्यो राक्षसादिभ्यो भयं घ्नता नुदता। अनेन पालनमुक्तम्। तेन पितृमान्। अत्र हेतुर्विनेत्रेति। विनयकर्त्रा। अनेन विनयाधानम्। तेन एव पुत्री सत्पुत्रवान्। अत्र हेतुः शोकापनुदेनेति। शोकमपनुदतीति शोकापनुदः। "तुन्दशोकयोः परिमृजापनुदोः" इति कः॥

स पौरकार्याणि समीक्ष्य काले रेमे विदेहाधिपतेर्दुहित्रा
उपस्थितश्चारु वपुस्तदीयं कृत्वोपभोगोत्सुकयेव लक्ष्म्या ॥ २४ ॥

प्रका—एवं धर्मार्थयोर्वृत्तिमुक्त्वा कामे वृत्तिमाह—स इति। समीक्ष्य "धर्मस्यीयात्" इत्युक्तप्रकारेण सम्यगीक्षित्वा। अनेनेतराबाधकत्वं कामस्य ध्वनितम्। काले

पूर्वाह्ने। तथा च कौटिल्यः "राजवृत्तमहोरात्रस्य षोडशसु भागेषु विभजन्नह्नो द्वितीये भागे पौरजानपदानां कार्याणि पश्येत्" इत्युक्तवान्। तथा काले रेमे। कालश्चाह्नः षष्ठो भागः। तदुक्तं "षष्ठे स्वैरविहारो मन्त्रो वा सेव्य" इति। उपस्थितः सेवितः तदीयं सीतासम्बन्धि। कृत्वा स्वीकृत्य। उपभोगोत्सुकया लक्ष्म्या चारु तदीयं वपुः कृत्वा उपस्थित इव विदेहाधिपतेर्दुहित्रा रेम इत्यन्वयः। अत्रोत्तरार्धे सर्वमुत्प्रेक्षितम्। उत्प्रेक्षया च वपुषोऽतिशयः प्रतीयते॥

पदा—स इति। स काले पौरकार्याणि समीक्ष्य विदेहाधिपतेः दुहित्रा रेमे। षोडशधा विभक्तस्याह्नो द्वितीये भागे पौरजानपदानां कार्याणि पश्येदित्युक्तत्वात्। समीक्ष्य नयशास्त्रोक्तप्रकारेण सम्यगवलोक्य। तथा रमणस्यापि कालो विहितः कौटिल्येन। "षष्ठे स्वैरविहारो मन्त्रो वा सेव्य" इति। उपभोगोत्सुकया लक्ष्म्या चारु तदीयं वपुः कृत्वा उपस्थितः इव। उपभोगेषु उत्सुकया सश्रद्धया। तदीयं वैदेहीसम्बद्धम्। कृत्वा स्वीकृत्य। उपस्थितः सेवितः। उत्प्रेक्षया सीताया सौन्दर्यातिशयो दर्शितः॥

तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुषोः सद्मसु चित्रवत्सु।
प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखीबभूवुः[1] ॥ २५ ॥

प्रका—तयोरिति। यथाशब्दो वीप्सायाम्। प्रार्थितं प्रार्थितमित्यर्थः। अथवा पदार्थानतिवृत्तौ। प्रार्थनानुसारेणेत्यर्थः। इन्द्रियार्थान् साम्राज्यसुलभान् शब्दादीन् विषयान्। सम्भोगभाविन आलिङ्गनादींश्च। चित्रवत्सु अतीतवृत्तालेख्यवत्सु। आलेख्यञ्च संस्कारोद्बोधकम्। भवभूतिनाऽप्युत्तररामचरिते प्रथमाङ्के तथोपनिबद्धम्। दुःखानीति। वनवाससम्भवीनि। शयनासनविहारपानाशनपरिक्लेशा, वियोगदशासुलभानि निर्वेदविलपितादीनि च गृह्यन्ते। सञ्चिन्त्यमानानि स्मर्यमाणानि। सुखीबभूवुः सुखसाधनतामवापुः। सुखान्यभूवन्निति वा पाठः। दुःखानां हि संस्कारोद्बोधकवशेन सुखावस्थायां स्मर्यमाणानां तदुद्दीपकत्वमङ्गीकरणीयम्। दुःखेन हि सुखस्य स्पृहणीयतातिशयो भवति। आतपक्लान्तस्य हि च्छायायां बहुमानः। दुःखेन च सुखमत्यन्तविलक्षणत्वात् परभागं नीयते, यथा वर्णान्तरेण शुक्लः। तथा च भोजराजः "न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुत" इति। न च केवलं दुःख एवायं न्यायः। यावत्सुखेऽपि। सुखमपि ह्यनुभूतचरं दुःखावस्थायां संस्कारोद्बोधकसन्निधिना स्मर्यमाणं दुःखोद्दीपकं भवति। यथा "अयं स रशनोत्कर्षी पीनस्तनविमर्दनः नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः" इत्यत्र। इदं हि भूरिश्रवसः समरभुवि निपतितं करं दृष्ट्वा तद्वधूनाम-

१ सुखान्यभूवन्।

भिधानम् । तासां हि तद्दर्शनेन स्मर्यमाणास्ते ते सम्भोगप्रकारास्त्वयमस्तमिताः सन्तः तत्कालानुभूयमानं करुणमुद्दीपयन्ति । तस्मादयमर्थः—परस्परसन्निविप्रयुक्तसौभाग्याच्छ-न्दादीनालिङ्गनादींश्च तत्कालनियतान्यथामनोरथमनुभवतोस्तयोरालेख्यगतातीतवृत्तान्तदर्शन-प्रबुद्धसंस्काराणि दूरास्तमितानि स्मर्यमाणानि दुःखानि तत्कालानुभूयमानसम्भोगप्रागल्प-तितानि तन्मयीभवनयुक्त्या तत्परिपोषकत्वमवापुरिति । अयञ्च भोजराजोक्तश्शृङ्गारवृद्धि-नामा प्रवासानन्तरसम्भोगप्रकारः ॥

पदा—तयोरिति । चित्रवस्तु सद्मसु यथाप्रार्थितमिन्द्रियार्थानासेदुषोस्तयोः दण्ड-केषु प्राप्तानि दुःखानि अपि सञ्चिन्त्यमानानि सुखीबभूवुः । चित्रवस्तु आलेख्यवस्तु । चित्रलिखितप्रागनुभूतवृत्तान्तवस्त्वित्यर्थः । यथाप्रार्थितमिति क्रियाविशेषणम् । यथा-शब्दः पदार्थानतिवृत्तौ । प्रार्थनानुसारेणेत्यर्थः । वीप्सायां प्रार्थितं प्रार्थितमित्यर्थः । इन्द्रि-यार्थान् शब्दादिविषयान् । बहुवचनेन साम्रज्यलभ्याः प्रियतमसन्निधानलभ्याश्च बहवो विषया विवक्षिताः । आसेदुषोः प्राप्तवतोः । सञ्चिन्त्यमानानि विचार्यमाणानि । सुखी-बभूवुः सुखसाधनतां प्रापुरित्यर्थः । दण्डकारण्ये प्रागनुभूतानि चित्रदर्शने द्योतितानि च सर्वाणि दुःखानि सुखसाधनतामवापुरित्यर्थः । ये वयं पूर्वं तथा दुःखिनः, ते एव इदानी-मेवमनुभवाम इति परभागलाभादुभयोरपि विरहपीडाया उभाभ्यमेव प्रत्यक्षीक्रियमाणत्वेना-नुरागसंवर्धनाच्च सुखसाधनतामवापुरिति भावः ॥

अथाधिकस्निग्धविलोचनेन मुखेन सीता शरपाण्डरेण ।
आनन्दयित्री परिणेतुरासीदनक्षरव्यञ्जितदोहदेन ॥ २६ ॥

प्रका—अथ रसान्तरप्रस्तावाय प्रकरणान्तरमारभते—अथेति । कस्यचित् कालस्यापगमे । शरः सुषिरवेणुविशेषः । तत्काण्डं हि पाण्डु भवति । अनक्षरमुक्तिं विना । दोहदं गर्भः ॥

पदा—अथेति । अथ सीता अनक्षरव्यञ्जितदोहदेन मुखेन परिणेतुः आनन्द-यित्री आसीत् । अनक्षरमक्षरशून्यं यथा भवति तथा व्यञ्जितमभिव्यञ्जितं दोहदं गर्भो येन । उक्त्या विनैवाभिव्यञ्जितगर्भेणेत्यर्थः । अधिकस्निग्धे विलोचने यस्य । सुषिरवे-णुविशेषश्शरः तद्वत्पाण्डरेण । शरकाण्डं हि पाण्डरं भवति ॥

तामङ्कमारोप्य कृशाङ्गयष्टिं वर्णान्तराक्रान्तपयोधराग्राम् ।
विलज्जमानां रहसि प्रतीतः पप्रच्छ रामां रमणोऽभिलाषम् ॥ २७ ॥

प्रका—तामिति । कृशाङ्गयष्टिं क्षामाम् । "क्षामता गरिमा कुक्षेः मूर्छा-

च्छर्दिररोचकम्" इति गर्भलक्षणे वाहटः। वर्णान्तरनीलिमा। विलज्जमानामभिलाषं कथयितुमप्रगल्भाम्। रहसीति तत्कथनोपपत्त्यर्थम्। प्रतीतो हृष्टः॥

पदा—तामिति। रमणः रहसि तां रामाम् अङ्कम् आरोप्य अभिलाषं पप्रच्छ। रमणः कान्तः। रहसि विजने। एतच्च कथनसौकर्यार्थम्। इप्सितं वस्तु। कृशा क्षामा अङ्गयष्टिः प्रशस्तमङ्गं यस्याः। अत्र वाहटः "क्षामता गरिमा कुक्षेः मूर्छा च्छर्दिररोचकम्" इति। वर्णान्तरेण नीलिम्ना आक्रान्तम् अभिभूतं पयोधरयोरग्रं यस्याः। प्रतीतः हृष्टः॥

सा दष्टनीवारबलीनि हंसैस्सम्बद्धवैखानसकन्यकानि।
इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि ॥ २८ ॥

प्रका—सेति। वैखानसा वानप्रस्थाः। हंसानां क्रीडासाधनत्वात् कन्यानां चिररूढविस्रम्भत्वात्, कुशानां क्रियोपयोगित्वाच्च तत्स्पृहाविषयत्वम्॥

पदा—सेति। सा भूयः भागीरथीतीरतपोवनानि गन्तुम् इयेष। भूयः पुनरपि। भागीरथ्याः गङ्गायाः तीरे यानि तपोवनानि। इयेष इच्छां कृतवती। तत्प्राप्तिं प्रार्थितवतीति यावत्। हंसैः दष्टनीवारबलीनि बल्यर्था नीवारा नीवारबलयः दष्टा भक्षिता नीवारबलयो यत्र। कुशवन्ति। अत्र हंसानां क्रीडासाधनत्वात्, वैखानसकन्यकानां चिरपरिचितत्वात्, कुशानां क्रियोपयोगित्वाच्च स्पृहाविषयत्वम्॥

तस्यै प्रतिश्रुत्य रघुप्रवीरस्तदीप्सितं पार्श्वचरानुयातः।
आलोकयिष्यन्मुदितामयोध्यां प्रासादमभ्रंलिहमारुरोह ॥ २९ ॥

प्रका—तस्या इति। "प्रत्याङ्भ्यां श्रुवः" इति सम्प्रदानत्वम्। मुदितां केनाप्युत्सवेन हृष्टजनाम्॥

पदा—तस्या इति। रघुप्रवीरः तस्यै तदीप्सितं प्रतिश्रुत्य मुदितामयोध्याम् आलोकयिष्यन् प्रासादम् आरुरोह। तद् भागीरथीतीरतपोवनप्राप्तिरूपं ईप्सितम् अभिलाषम्। "प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता" इति सम्प्रदानविधानात्तस्यै इति चतुर्थी। प्रतिश्रुत्य तथेति प्रतिज्ञाय। मुदितां केनाप्युत्सवविशेषेण सन्तुष्टां। पार्श्वचरैः सेवकैः अनुयातः अनुगतः। अभ्रमाकाशं लिहतीत्यभ्रंलिहः। अनेन दर्शनसौख्यमुक्तम्॥

ऋद्धापणं राजपथं स पश्यन् विगाह्यमानां सरयूश्च नौभिः।
विलासिभिश्चाध्युषितानि पौरैः पुरोपकण्ठोपवनानि रेमे ॥ ३० ॥

१ हिंस्रैः।

प्रका—ऋद्धेति। आपणः पण्यविक्रयस्थानम्। रेमे प्रीतोऽभवत्। "प्रजासुखे सुखं राज्ञः" इति न्यायात्॥

पदा—ऋद्धापणमिति। स ऋद्धापणं राजपथं नौभिर्विगाह्यमानां सरयूञ्च विलासिभिः पौरैरध्युषितानि पुरोपकण्ठोपवनानि च पश्यन् रेमे। ऋद्धं समृद्धमापणं पण्यविक्रयस्थानं यत्र। अनेन अर्थसमृद्धिरुक्ता। राजपथो विपणिः। नौभिर्विगाह्यमानत्वाच्चेलोहारित्वम्। उपवनानां विलासिभिः पौरैरध्युषितत्वात् कामोत्सवानुभूतिश्च। "प्रजासुखे सुखं राज्ञः" इति न्यायेन प्रीतोऽभूदित्यर्थः॥

स किंवदन्तीं वदतां पुरोगः स्ववृत्तमुद्दिश्य विशुद्धवृत्तः
सर्पाधिराजोरुभुजोऽपसर्पं पप्रच्छ भद्रं विजितारिभद्रः ॥ ३१ ॥

प्रका—स इति। किंवदन्तीं जनवादम्। वदतां पुरोग इत्यनेन स यथा निश्शङ्कं वदेत्तथा प्रष्टुं कुशल इति द्योत्यते। विशुद्धवृत्त इति। निष्कल्मषचारित्रः। वृत्ताभिमानी हि तद्विषयायां किंवदन्त्यां जिज्ञासुर्भवति। नन्वेवं कालकवृक्षीयादिमुनिमतवैमुख्येन विजिगीषुताऽस्य हीयेतेत्याह—विजितारिभद्र इति। तद्वैमुख्ये तदपि कथमित्याह—सर्पाधिराजोरुभुज इति। यश्चतुर्दशभुवनानि मालामिव शिरसा धारयति, तेन नागेन समसारौ भुजौ यस्य, तथाविधस्य नेतुः किमेभिरुदात्तजनकुत्सितैः शास्त्रेऽप्यापद्यनुष्ठेयतयोक्तैर्मानुषमात्रनृपाधिकारैस्तादृशैः प्रयोगैरिति भावः। एवमभिप्रायेण विशेषणान्यत्र दत्तानि, न केवलमनुप्राससिद्धय इत्यवधातव्यम्। अपसर्पं चरम्। भद्रं तन्नामानम्। विजिता अरिभद्रा अरिमुख्या येन॥

पदा—इतः परं दुष्प्रमेयत्वान्न लिख्यते—

श्रुत्वा चारमुखात्तत्र सीतादूषणघोषणम्।
मुहूर्तं विमना भूत्वा सन्निपात्य निजानुजान् ॥ १ ॥

तेभ्य आचष्ट तत्सर्वं लक्ष्मणञ्चेदमब्रवीत्।
नय भागीरथीतीरमेनान्तद्दोहदार्थिनीम् ॥ २ ॥

शान्तव्यालमृगाकीर्णे तत्र वल्मीकजन्मनः।
त्यक्त्वैनामाश्रमोपान्ते क्षिप्रमायाहि चान्तिकम् ॥ ३ ॥

रक्षोवधान्ता व्यापाराः स्त्रीलोभान्न मया कृताः।
दशास्याक्रान्तपूर्वः किं भुजङ्गः शोणिताशया ॥ ४ ॥

गुर्वाज्ञालङ्घनाद् भीतो लक्ष्मणस्तु तथाऽकरोत् ।
सा च भीता शुचा दीना विललापाकुलाक्षरम् ॥ ५ ॥

तं विलापमुपश्रुत्य प्रलापञ्च कृपामृदुः ।
वाल्मीकिः स्वाश्रमोपान्तात् प्रचचाल तदन्तिकम् ॥ ६ ॥

अथ वैखानसस्त्रीभिः सार्धमेनामनागसम् ।
सान्त्वयित्वाऽऽश्रमं क्षिप्रं कृपामृदुरुपानयत् ॥ ७ ॥

सर्वदुःखहरैश्चैनामनाधारामनागसम् ।
सान्त्वयामास वचनैः कवीनां प्रथमो मुनिः ॥ ८ ॥

आहरन्ती फलं पुष्पं दर्भान् गर्भाकुलाऽपि सा ।
मोदं सञ्जनयामास शुश्रूषाभिर्महामुनेः ॥ ९ ॥

व्यसनातिभारविधुराऽपि सा मुहुः स्वशरीरमेतदुपतापशोषितम् ।
विभार तत्र किल भर्तृसन्ततेस्तदधीनतां परिकलय्य केवलम् ॥ १० ॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ रघुवंशव्याख्यायां पदार्थदीपिकायां चतुर्दशः सर्गः ॥

**निर्बन्धपृष्टस्स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम् ।**
**अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव! देव्याः ॥ ३२ ॥**

**प्रका**—निर्बन्धेति । निर्बन्धेन पृष्ट इति गूहनं गम्यते । सर्वमिति तद्वाक्योपक्रमः । रक्षोभवनं षितायाः इति देवीपरिग्रहस्तववर्जने हेतुः । मानवदेवेति सर्वस्तव्यत्वमुपपादयति ॥

**कळत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्तिविपर्ययेण ।**
**अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे ॥ ३३ ॥**

**प्रका**—कळत्रेति । गुरुणा दुस्सहेन । किलेत्यसम्भाव्ये । अभ्याहतं ताडितम् । कीर्तिविपर्ययेणाऽयशसा । अयोमयेन घनेन मुद्गरेण "घनाः कठिनसङ्घातमेघकाठिन्यमुद्गराः" इति यादवः । अयोहननसाधनेन द्रुघणाख्येन वा । अयोऽनेन हन्यत इति "करणेऽयोविद्रुषु" इत्यप्प्रत्ययः । वैदेहिबन्धोः "भार्या मित्रं गृहे सतः" इति न्यायेन धर्मादिसहायिनीमेनामेव पश्यत इत्यर्थः । "ङ्यापोः संज्ञाछन्दसोर्बहुल"मिति संज्ञायां ह्रस्वः काळिदास इतिवत् । संज्ञा चैषा रामस्य । विदद्रे विदीर्णमभवत् ॥

किमात्मनिर्वादकथामुपेक्षे[1] जायामदोषामुत सन्त्यजानि[2] ।
इत्येकपक्षाश्रयविक्लवत्वादासीत्स दोलाचलचित्तवृत्तिः ॥ ३४ ॥

प्रका—किमिति । निर्वादोऽपवादः । कथा कथनम् । जायामित्यापन्नसत्त्वता द्योत्यते । उपेक्षे सन्त्यजानीति सम्प्रश्ने लोट् । सम्प्रश्नस्सम्प्रधारणम् । इतिस्संशयप्रकारवाची । डोलेति च संशय उक्तः । एकेत्यादिना तद्धेतुः । विक्लवोऽशक्तः । अशक्तिश्चोभयत्रापि दोषभूयस्त्वदर्शनात् ॥

निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन [3]देव्याः परिमार्ष्टुमैच्छत् ।
अपि स्वदेहात् किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ॥ ३५ ॥

प्रका—निश्चित्येति । निर्वादानुपेक्षामिति शेषः । अन्येन निवृत्तिर्यस्य नास्ति तदनन्यनिवृत्ति । देव्या इति समस्तनायिकागुणयोगं द्योतयत्तत्त्यागस्य दुष्करतां द्योतयति । अत्रार्थान्तरं न्यस्यति—अपीति । इन्द्रियार्थात् स्रक्चादेः ॥

स सन्निपात्यावरजान् हतौजास्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ॥ ३६ ॥

प्रका—स इति । सन्निपात्य समवेतान् कृत्वा । हतौजा विच्छायः । तद्विक्रियेति कर्मधारयः । कौलीनं जनापवादम् ।

राजर्षिवंशस्य रविप्रसूतेरुपस्थितं पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कं पयोदवातादिव दर्पणस्य ॥ ३७ ॥

प्रका—राजर्षीति । कीदृशोऽयमिति वाक्यमध्ये वाक्यान्तरम् । कीदृशोऽत्यन्तमनुचित इत्यर्थः । मत्तः मया हेतुभूतेन । सदाचारशुचेः सद्वृत्तपूतस्य । कलङ्कं मालिन्यम् । कलङ्क इति पाठे वाक्यान्तरगर्भता न भवति । पयोदसम्बन्धेन वातस्याप्यपरमाणुसंसर्गाद्दर्पणमालिन्यहेतुत्वमुपपादितम् । उपमयाऽत्र शक्यापाकरणत्वं द्योत्यते ॥

पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ ३८ ॥

प्रका—पौरेष्विति । अत्र उपमया दूरप्रसारितत्वादि ध्वन्यते । तत्पूर्वमिदम्प्रथमम् । "अवर्णाक्षेपनिर्वादपरिवादापवादवद्" इति सिंहः । आलानिकं बन्धनार्थम् । आलानकमिति वा पाठः । संज्ञायां कन् । तस्य च तत्पूर्वस्य द्विपेन्द्रं प्रति दुस्सहत्वं

१ २ मि । ३ पत्न्या ।

सिद्धम् । स च तदुन्मूलने यतत एवेति मयाऽप्यवर्णोन्मूलनयत्ने क्रियमाणे भवद्भिर्नासूयितव्यमिति भावः ॥

तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात् समुद्रनेमिं पितुराज्ञयेव ॥ ३९ ॥

प्रका—तस्येति । अवर्णस्य । फलस्यापत्यलक्षणस्य प्रवृत्तिर्लाभः । पुरस्तादित्यादिना त्यागे शक्तत्वन्द्योतयति । समुद्रो नेमिः पर्यन्तो यस्यास्तां भूमिमित्यर्थः । तत्पक्षे फलं साम्राज्यरत्नादि ॥

अवैमि चैनामनघेति किन्तु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ॥ ४० ॥

प्रका—वादः खल्वयमित्याह—अवैमीति । अनघा अपापा । किन्त्वित्ययं निपातस्तुशब्दवद्विशेषं द्योतयति । अपापत्वावगमाल्लोकापवादे विशेषोऽस्तीत्यर्थः । तं विशेषमाह—बलवानिति । नात्र सत्यासत्यत्वन्निरूप्यमित्यर्थः । ननु तुशब्दवल्लोकापवादशब्दानन्तरं किन्तु प्रयोज्यम् । नैवम् । केषाञ्चिदेव वाक्यादौ प्रयोगः श्लिष्यतीति शब्दस्वभाव एवायम् । एतदुपपादनाय प्रतिवस्तूपन्यस्यति—छायेति । छाया प्रतिबिम्बः । शुद्धिमतो निर्मलस्य । अत्र पुराणवचनं "शशमेके परे श्वभ्रं भूछायामपरे विदुः । इन्दोर्मण्डलमालिन्यं तमस्पर्शमलं परे" इति । असत्यार्थविषयोऽपि लोकप्रवादः कार्यकरोऽनपाकरणीयश्च भवतीत्यर्थः ॥

रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ॥ ४१ ॥

प्रका—तर्हि किमर्थं कृत एतत्प्रत्यानयनप्रयास इत्याह—रक्ष इति । वैरनिर्यातनफलम्मे प्रयासं जानीतेत्यर्थः । अत्र प्रतिवस्तु—अमर्षण इति । कर्तरि नन्द्यादिल्युः । किं क्षेपे । आप्रतीकारविसर्पिणोऽमर्षस्यायं स्वभाव इत्यर्थः ॥

तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः ।
यद्यर्थिता निर्हृतवाच्यशल्यान् प्राणान् मया धारयितुं चिरं वः ॥ ४२ ॥

प्रका—तदिति । उक्ताद्धेतोरित्यर्थः । सर्गो निश्चयः यद्युद्धृतापवादशल्यत्वेन सुधीरान् प्राणान् मया कर्तृभूतेन चिरं धारयितुमिच्छा युष्माकमस्ति, तर्हि सीतायां दयमानैरपि भवद्भिरेष मे सर्गो न निषेध्य इत्यर्थः । अथ च दयापरत्वान्न निषेध्यः, यतो

मत्प्राणेष्वपि नश्यत्सु दयितव्यमिति भावः । धारयतेति पाठे हेतौ तृतीया । अर्थिता च हेतुमती ॥

इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम् ।
न कश्चन भ्रातृषु तत्र शक्तो निषेद्धुमासीदनुवर्तितुं वा ॥ ४३ ॥

प्रका—इतीति । तत्र तस्मिन्नर्थे । तेष्विति वा पाठः । इत्युक्तवन्तमिति निषेद्धुमनुचितत्वे हेतुः । ईशमित्यशक्यत्वे । जनकात्मजायामिति परुषनिर्बन्ध इत्यनुवर्तितुमशक्यत्वे । जनकात्मजाशब्दो हि भुवनवन्दनीयगुणगणास्पदत्वं द्योतयंस्तथाविधविपत्तिविषयतानौचित्यं तस्यां द्योतयति । भ्रातृष्विति निषेद्धुमनुवर्तितुञ्चाधिकार उक्तः ।

स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्तिः ।
सौम्येति चाभाष्य यथार्थभाषः स्थितं निदेशे पृथगादिदेश ॥ ४४ ॥

प्रका—स इति । लक्ष्मणपूर्वजन्मेत्यनेन लक्ष्मणस्य शीलसाम्येन रामचित्तज्ञतां द्योतयति । अत आह—विलोक्येति । अयमत्र योग्यतम इति दृष्ट्वैव कार्यमासज्येत्यर्थः । लोकेति । इत्थमपवादभीरोः कथं लोकत्रयव्यापि यशो न स्यादिति भावः । सौम्येति गुरुजनोचितमामन्त्रणम् । सोम इव सोम्य । "शाखादिभ्यो यः" । ततः प्रज्ञाद्यण्, इतः आगच्छेति शेषः । आभाष्यामन्त्र्य । तच्च पृथगादेशार्थम् । यथार्थभाषः सत्यप्रतिज्ञः । स्थितं निदेशे कथञ्चिदप्यशङ्कनीयनिदेशलङ्घनमित्यर्थः । पृथगिति गोपनीयत्वात् ॥

प्रजावती [2]दौहृदशंसिनी ते तपोवनेषु स्पृहयालुरेव ।
स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥ ४५ ॥

प्रका—प्रजेति । "प्रजावती भ्रातृजाये"ति नैघण्टुकाः । "दौहृदं गर्भिणीवाञ्छितम्" इति च । तपोवनेषु गमनायेति शेषः । तस्मात् "स्पृहेरीप्सितः" इति तपोवनस्य न सम्प्रदानत्वम् । एवेति । न तु स्पृहोत्थापयितव्या । स इति । यस्तत्प्रियान्वेषी मम च शासनप्रतीक्षः । रथी रथेनेत्यर्थः । नेयां नेतुं शक्याम् । वाल्मीकिपदं परमकारुणिकतया प्रसिद्धस्य मुनेः स्थानम् । स एवास्या अशरणायाश्शरणं भवत्विति भावः ॥

स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात् प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया ॥ ४६ ॥

प्रका—स इति । प्रहृतं प्रहारं शिरश्छेदम् । द्विषद्वद् द्विषतीव । "तत्र

---

१ मोदि । २ दोह

तस्यैव" इति वतिः। विशङ्कमिति पाठे निर्विचिकित्सम्। प्रत्यग्रहीत् प्रत्यश्रौषीत्। तदिति। तथा घोरम्। अत्र युक्तिमाह—आज्ञेति॥

अथानुकूलश्रवणप्रतीतामत्रस्नुभिर्युक्तधुरं तुरङ्गैः।
रथं सुमन्त्रप्रतिपन्नरश्मिमारोप्य वैदेहसुतां प्रतस्थे ॥ ४७॥

प्रका—अथेति। प्रतीतां हृष्टाम्। अत्रस्नुभिस्त्रासदोषरहितैरिति गर्भिणीवाहनयोग्यत्वमुक्तम्। युक्तधुरमिति। "ऋक्पूरि"त्यादिना समासान्तः। रश्मिः प्रग्रहः। अत्र चिरन्तनामात्येन सुमन्त्रेण सह यद्गमनं, तेन सीतापवाहने लक्ष्मणस्यायशः परिहृतम्। मन्त्रिषु निवेदितश्चैतदिति च प्रतीयते॥

सा नीयमाना रुचिरान् प्रदेशान् प्रियङ्करो मे प्रिय इत्यनन्दत्।
नाबुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम् ॥ ४८॥

प्रका—सेति। रुचिरानिष्टान्। अबुद्ध "बुध अवगमने" इत्यस्य लुङि रूपम्। आत्मनि न त्वन्यत्र। असिपत्रः स्नुहिः। तथाह यादवः। अथवा निरयवर्तितया प्रसिद्धः कश्चिद्वृक्षः। अत्र सौम्यदारुणत्वयोः कल्पवृक्षासिपत्रत्वेन अध्यवसायादतिशयोक्तिः॥

जुगूह तस्याः पथि लक्ष्मणो यत्सव्येतरेण स्फुरता तदक्ष्णा।
आख्यातमस्यै गुरु भावि दुःखमत्यन्तलुप्तप्रियदर्शनेन ॥ ४९॥

प्रका—जुगूहेति। अत्यन्तलुप्तप्रियदर्शनेनेति तथाभावं जानतेवेत्युत्प्रेक्षाध्वनिः॥

सा दुर्निमित्तोपगताद्विषादात्सद्यः परिम्लानमुखारविन्दा।
राज्ञः शिवं सावरजस्य भूयादित्याशशंसे करणैरबाह्यैः ॥ ५०॥

प्रका—सेति। राज्ञ इति। सकलभुवनक्षेमङ्करस्येत्यर्थः। आशशंसे अभिलषा। "शंस इच्छायाम्"। अबाह्यैः करणैरिति। "मनो बुद्धिरहङ्कार इत्यन्तःकरणन्त्रिधा" इति यादवः॥

गुरोर्नियोगादपि तां वनान्ते साध्वीं सुमित्रातनयो विहास्यन्।
अवार्यतेवोत्थितवीचिहस्तैर्जह्नोर्दुहित्रा स्थितया पुरस्तात् ॥ ५१॥

प्रका—गुरोरिति। अपिशब्दो गुरुनियोगप्रवृत्तस्य अवार्यत्वन्द्योतयति। तामपीति केचिदन्वयमिच्छन्ति। वनान्त इति त्यागस्यातिदारुणत्वं द्योतयति। साध्वी-

मित्यत्याज्यत्वम् । सुमित्रातनय इति तत्करणानौचित्यम् । वीचिहस्तैरिति करणे तृतीया । तत्पुरस्तात् स्थितया रथस्य गतिं रुध्वेति शेषः । अत्र गङ्गाकर्तृकवारणोत्प्रेक्षया लक्ष्मणस्य तत्तरणसमये विशेषतश्चाकित्यं द्योत्यते ॥

रथात्स यन्त्रा निगृहीतवाहात्तां भ्रातृजायां पुळिनेऽवतार्य ।
गङ्गां निषादाहृतनौविशेषस्ततार सन्धामिव सत्यसन्धः ॥ ५२ ॥

प्रका—रथादिति । यन्त्रा निगृहीतवाहादिति अवतारणे सावधानत्वं ध्वनितम् । भ्रातृजायामित्यादरः । पुळिन इति तदायासपरिजिहीर्षा । नौविशेषो राजार्हा नौः । ततार तया सहेति शेषः । सन्धां प्रतिज्ञाम् । सत्यसन्धस्स कथं प्रतिश्रुतं गुरुनियोगमनुकम्पादिना विमोघीकुर्यादिति भावः ॥

अथ व्यवस्थापितवाक्कथञ्चित्सौमित्रिरन्तर्गतबाष्पकण्ठः ।
औत्पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार ॥ ५३ ॥

प्रका—अथेति । गङ्गोत्तरणानन्तरम् । व्यवस्थापिता वक्तुमुद्योजिता वाग्येन । कथञ्चित् कृच्छ्रात् । अत्र हेतुरन्तर्गतबाष्पकण्ठ इति । उत्पातः प्रयोजनमस्येत्यौत्पातिकः । महीपतेरित्यलङ्घ्यशासनत्वमुक्तम् ॥

ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥ ५४ ॥

प्रका—तत इति । अभिषङ्गो विषादः, अथवा शापः । स च परिवादः । "अभिषङ्गस्तु कथ्यते । आक्रोशशापाभिभवसङ्गेष्वाह तु सज्जनः । दुःखे पराभवे त्वाह सिंहः" इति केशवः । अनर्थ इति वल्लभः । विप्रविद्धा नुन्ना । आभरणप्रसूनेत्यपि रूपकम् । स्वमूर्तिलाभस्य प्रकृतिं कारणं, मातरमित्यर्थः । अत्र पतिकुलभ्रष्टाया मातृसकाशगमनं दमयन्त्या इव युक्तमित्यर्थान्तरन्यासध्वनिः ॥

इक्ष्वाकुवंशप्रभवः कथन्त्वां त्यजेदकस्मात्पतिरार्यवृत्तः ।
इति क्षितिस्संशयितेव तस्यै ददौ प्रवेशं जननी न तावत् ॥ ५५ ॥

प्रका—इक्ष्वाकुवंशप्रभव इति । तथाकुलीनस्तथावृत्तश्च निर्दोषां न त्यजेदिति निर्दोषतायां जातसंशयत्वेन प्रवेशावकाशं न तावद्दाविनेति हेतुफलयोरुत्प्रेक्षा । तया च देव्याश्शोच्यतातिशयो व्यज्यते । तावत्तस्मिन् क्रमे । क्रमान्तरे तु दास्यत्येवेत्यर्थः ॥

सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः ॥ ५६ ॥

प्रका—सेति । प्रत्यागतासुर्लब्धसंज्ञा । अन्तरिति । यावानन्तस्तापस्तावान्न समग्रैरपि लिङ्गैरुपलब्धुं शक्यत इत्यर्थः । यत एवन्तस्माल्लक्ष्मणप्रयासः प्रतिकूलफल आसीदित्यर्थः ॥

न चावदद्भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं पुनः पुनर्दुष्कृतिनं निनिन्द ॥ ५७ ॥

प्रका—न चेति । चस्त्वर्थे । अवर्णमयशः । अवदने हेतुरार्येति । वृजिनात्पापात् । स्थिरदुःखभाजं नित्यदुःखम् । तत्र हेतुः दुष्कृतिनम् ॥

आश्वास्य रामावरजः सतीन्तामाख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि! क्षमस्वेति बभूव नम्रः ॥ ५८ ॥

प्रका—आश्वास्येति । सतीमिति तद्विषयप्रतिपत्तीनामौचित्यप्रदम् । निघ्नस्य परवशस्य । निहन्यत इति निघ्नः अस्ववशः । घञर्थे कविधानात् । भर्तृनिदेशेन रौक्ष्यं प्रतिकूलाचरणम् । नम्रः पादयोः पतितः ॥

सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि ते सौम्य! चिराय जीव ।
बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥ ५९ ॥

प्रका—सीतेति । वाक्यशब्दनौचित्यादिधर्मान्तरसङ्क्रान्तं वाक्यं लक्ष्यते । वाक्यमात्रस्यानुपादेयत्वात् । विष्णुर्द्वादश आदित्यः । न केवलं क्षन्तव्योऽसि, प्रत्युत प्रीताऽस्मि त्वयि । यदित्थं मामपि हातुं गुरुणा पराधीनोऽसि, तस्मादायुष्मान् भवेत्यर्थः ॥

श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः ।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥ ६० ॥

प्रका—श्वश्रुजनमिति । अनुक्रमेण उक्तप्रकारानुवादेन । एवं सीता विज्ञापयतीति विज्ञाप्येत्यर्थः । प्रापितमत्प्रणामः सीताया अयं प्रणाम इति प्रणम्येत्यर्थः । प्रजार्थन्निषेकं बीजाधानम् । अनुध्यानमनुकूलचिन्तनम् । चेतसा शुभेनेत्यर्थः । वल्लभस्त्वानुक्रमेण ज्येष्ठानुक्रमेणेति व्याचष्ट ॥

वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किन्तत्सदृशं कुलस्य ॥ ६१ ॥

प्रका—वाच्य इति। त्वया "कृत्यानां कर्तरि वा" इति षष्ठ्या विकल्पोऽनुसन्धेयः। मद्वचनात् मद्वचनं पुरस्कृत्य। नात्र तव दोष इत्यर्थः। राजेत्यैश्वर्यमदादिदोषान् द्योतयदुपालम्भरोषगर्भमभिधानम्। सन्तो ब्रह्मादयः। लोकवादश्रवणादिति प्रमाणशून्यतां ध्वनति। श्रुतस्य प्रसिद्धस्य, अथवा शास्त्रस्य। कुतस्त्वया मयि कामकारः कृत इति भावः॥

कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः।
ममैव जन्मान्तरपातकानां विपाकविष्फूर्जथुरप्रसह्यः ॥ ६२ ॥

प्रका—पक्षान्तरमाह—कल्याणेति। अयमिति निष्कारणत्यागहेतुः। कामचारोऽनालोचितकारित्वम्। कामकार इति वा पाठः। शङ्कनीयश्शङ्कितुमर्हः। तर्हि किंहेतुकस्त्याग इत्याह—ममैवेति। विपाकविष्फूर्जथुः परिणामविजृम्भितम्॥

उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः।
तदास्पदं प्राप्य तयातिरोषात्सोढास्मि न त्वद्भवने वसन्ती ॥ ६३ ॥

प्रका—प्रकारान्तरसम्भावनागर्भमाह—उपस्थितामिति। पूर्वं विच्छिन्नाभिषेकसमये। आस्पदम् प्रतिष्ठाम्। रोषात् मदुपेक्षाहेतुरियमित्यमर्षात्। व्यसने तवाहं सहाया, लब्धैश्वर्यः पुनर्मां त्यजसीति प्रतीतेः पर्यायोक्तमिदम्॥

निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात्।
भूत्वा शरण्या शरणार्थमन्यां कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ६४ ॥

प्रका—इदन्तु मेऽनुचितमापतितमित्याह—निशाचरेति। अन्यामिति योषित एव योषिता संश्रयितुमुचितत्वात्। दीप्यमाने प्रभवति॥

किं वा तवाऽत्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन्।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः[1] ॥ ६५ ॥

प्रका—नन्वेवं गते किं जीवितेन शल्यायमानेनेत्याह—किमिति। वाशब्दः पक्षान्तरपरिग्रहे। जीवितधारणपक्षः परसंश्रयदोषदुष्टो निरूपितः। अधारणपक्षो निरूप्यत इत्यर्थः। अत्यन्तवियोगः समागमप्रत्याशारहितो विरहः तेन मोघे पुरुषार्थशून्ये। कुर्यां सम्भावनायां लिङ्। किङ्कुर्यां न धारणं सम्भवतीत्यर्थः। उपेक्षामत्यागम्। हतशब्दः

1 यः।

कुत्सितपर्यायः। मोघत्वं कुत्सितत्वे हेतुः। तच्च त्याज्यत्वे। अन्तरायात्तेजो यदि रक्षणीयं न स्यादित्यन्वयः। अन्तराय इति पाठे रक्षणीयं तेजोऽन्तरायो यदि न स्यादित्यन्वयः। यदि गर्भो नाभविष्यत्, तदा जीवितन्न धारयिष्यामीत्यर्थः॥

साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये।
[१]तथा यथा मे जननान्तरेऽपि त्वमेव भर्ता न तु विप्रयोगः ॥ ६६ ॥

प्रका—तदिदानीं तव का प्रतिपत्तिरित्याह—साहमिति। यैवमधन्येत्यर्थः। सूर्येति पञ्चाग्निमध्यगतत्वमुक्तम्। तथा यथा म इति पाठः। त्वमेवेति स्वानुरागस्थैर्यं द्योतयति। न तु विप्रयोग इति अवियोगहेतोर्जन्मान्तरे तदनुरागस्थैर्यस्याशंसनं द्योत्यते। तेन चानवस्थितानुरागस्त्वमिति व्यज्यते॥

नृपस्य वर्णाश्रमपालनं यत्स एव धर्मो मनुना प्रणीतः।
निर्वासिताऽप्येवमतस्त्वयाऽहं तपस्विसामान्यमवेक्षणीया ॥ ६७ ॥

प्रका—तत्त्वया मद्विषय एतावत् करणीयमित्याह—नृपस्येति। नृपस्य धर्म इत्यन्वयः। प्रणीतो निरूपितः। एवमिति। निष्कारणं निष्करुणञ्च। तपस्विभिः सामान्यं समानम्॥

तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ॥ ६८ ॥

प्रका—तथेतीति। व्यतीत इति निमित्तसप्तमी। भूयःक्रन्दनस्य तद्धेतुकत्वात्। मुक्तकण्ठं निर्यन्त्रणम्। व्यसनातिभारात्, न तु वैयात्यादेः। विग्ना भीता। कुररी क्रौञ्ची। भूयो बहुतरम्॥

नृत्तं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः।
तस्याः प्रपन्ने समदुःखभावमत्यर्थमासीद्रुदितं वनेऽपि ॥ ६९ ॥

प्रका—नृत्तमिति। समदुःखभावं तद्दुःखदुःखित्वात्। इत्थन्तस्याः समदुःखतां प्राप्ते वनेऽप्यत्यर्थं रुदितं शोक आसीदिति वल्लभः। वनेऽपि समदुःखतां प्राप्ते तस्या रुदितमत्यर्थमासीदिति दक्षिणावर्तः॥

तामभ्यगच्छद्रुदितानुसारी कविः कुशेध्माहरणाय यातः।
निषादविद्धाण्डजदर्शनेन[३] श्लोकत्वमापद्यत यस्य शोकः ॥ ७० ॥

१ भूयो। २ न्त। ३ नोत्थः।

प्रका—तामिति। कुशेध्माहरणायेति दैवोपपादितत्वमुक्तम्। तृतीयया शोकहेतुरुक्तः। श्लोकत्वं "मा निषाद प्रतिष्ठान्त्वम्" इत्यादिपद्यात्मकत्वम्। अयमर्थो रामायणोपक्रमे द्रष्टव्यः॥

तमश्रु नेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे।
तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान् सुपुत्राशिषमित्युवाच ॥ ७१॥

प्रका—तमिति। अश्रुप्रमार्जनं विलापविरामश्च मुनिगौरवात्। दाश्वान् दत्तवान्। "दाश्वान् साह्वान् मीढ्वांश्च" इति निपातः। मुखपाण्डुत्वादि गर्भलिङ्गं दृष्ट्वा वीरप्रसवा भूया इत्याशिषं दत्त्वा वक्ष्यमाणप्रकारेणोवाचेत्यर्थः॥

जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि पितुर्निकेतम् ॥ ७२॥

प्रका—जान इति। क्षुभितेन भीतेन। मा व्यथिष्ठाः भर्तृत्यक्तां मामन्येप्यवजानीयुरिति। यतोऽहं त्वां तत्त्वतो जान इत्यर्थः। अबान्धवाहमिति च मा व्यथिष्ठा इत्याह—विषयान्तरस्थमिति। देशान्तरगतम्। पितृतो मयि कस्तव विशेष इत्यर्थः॥

उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि।
त्वां प्रत्यकस्मात् कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥ ७३॥

प्रका—स्वप्रत्ययदार्ढ्यमुपन्यस्यति—उत्खातेति। कण्टका उपद्रवकर्तारः। कलुषा पापीयसी प्रवृत्तिर्यस्य। अनेकापिशब्दोपादानादेकैकस्य गुणस्य मन्युनिवृत्तौ कारणत्वन्द्योतयन्निष्कारणत्यागस्य मन्युहेतोर्बलीयस्तां द्योतयति। दुर्लभत्वाच्चैषामेव गुणानामुपादानम्। एक एव हि लोके विश्वपीडाहरो भवति। तत्राऽपि राजवृत्तस्य परातिसन्धानभूयस्त्वात् सत्यप्रतिज्ञत्वं दुर्लभम्। तथासतोऽपि श्लाघाविपर्ययो दुरवाप इति॥

तवोरुकीर्तिः श्वशुरः सखा मे सतां भवच्छेदकरः पिता ते।
धुरि स्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या ॥ ७४॥

प्रका—नच परस्त्रीप्रतिश्रयदानानौचित्यं मम शङ्क्यमित्याह—तवेति। सतां वीतरागाणां भवच्छेदकरः तत्त्वोपदेशदानेन ते पिता च मे सखेत्यन्वयः। धुरि अग्रे। तत् किम्। न किमपीत्यर्थः। अत्र मुनेः सर्वभूतानुकम्पित्वेऽपि सीताविस्रम्भार्थमनुकम्पाकारणोपन्यास इत्यवसेयम्॥

---

१ वो।

तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥ ७५ ॥

प्रका—स्वाश्रमवासे गुणमाह—तपस्वीति । विनीता दान्ताः सत्त्वाः प्राणिनः शार्दूलादयः । इतः अत्र । अथवा अस्मत्सकाशात् । अनघप्रसूतेः प्रसूतिव्यसनानि च न भविष्यन्तीत्यर्थः । अपत्यसंस्कारमयोऽपत्यसंस्कारात्मकः । विधिर्गर्भहोमादिः ॥

अशून्यतीरां मुनिसन्निवेशैस्तमोपहन्त्रीं तमसां वगाह्य ।
तत्सैकतोत्सङ्गबलिक्रियाभिः सम्पत्स्यते ते मनसः प्रसादः ॥ ७६ ॥

प्रका—मनोरथान्तरस्यापि सिद्धिर्भविष्यतीत्याह—अशून्येति । अशून्यं पूर्णं तीरं यस्याः । मुनिसन्निवेशैरुटजैः । सन्निवेश्यतेऽस्मिन्निति सन्निवेशः । अनेन पावनत्वातिशय उक्तः । श्रेयसि प्रवर्तयितारश्चात्र ते सुलभा इति च द्योतयति । तमोपहन्त्रीं स्वभावत एवेत्यर्थः । तमः पापम् । तच्च श्रेयःप्रतिबन्धरूपमिति भावः । बलिक्रियाभिरभिमतदेवतापूजासम्पादनैः । मनसः इत्यभिलाषस्यानिर्द्धारितविषयत्वं द्योतयति ॥

पुष्पं फलञ्चार्तवमाहरन्त्यो बीजञ्च बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥ ७७ ॥

प्रका—शोकश्च नाभिभविष्यतीत्याह—पुष्पमिति । आर्तवं स्वकालभावि । तद्धि गुणवद् भवतीति भावः । बीजं नीवारादि । बालेयं बलिक्रियायोग्यम् । "छदिरुपधिबलेर्ढञ्" । अकृष्टरोहि अकृष्टभूमिभवम् । विनोदयिष्यन्ति विनोदं करिष्यन्ति रमयिष्यन्ति । नवाभिषङ्गां प्रत्यग्रदुःखाम् । उदारवाच इतिहासाद्युपन्यासकुशलाः । मुनिकन्यका इत्यकृतकव्यवहारत्वं ध्वन्यते ॥

पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपैः ।
असंशयं प्राक्तनयोपपत्तेः स्तनन्धयप्रीतिमवाप्स्यसि त्वम् ॥ ७८ ॥

प्रका—विनोदान्तरमप्यस्तीत्याह—पय इति । पयःसहितैर्घटैरिति मध्यमपदलोपी समासः । उपपत्तेरुत्पत्तेः । स्तनन्धयेन या प्रीतिस्ताम् । "नासिकास्तनयोर्ध्माधेटोः" । तेष्वपि स्वहस्तसिक्तत्वादपत्यबुद्धिर्भवेदेवेत्यर्थः ॥

अनुग्रहप्रत्यभिनन्दिनीन्तां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं[1] स्वमाश्रमं शान्तमृगं निनाय ॥ ७९ ॥

१ मृगम् ।

प्रका—अनुग्रहेति । अनुग्रहस्वीकाररूपं प्रशंसनमाचरितवतीमित्यर्थः । आदाय सादरं गृहीत्वा । वेदिरग्नीनां वृक्षाणां वा । शान्तत्वात्सुखमनुकूलम् ॥

समर्पयामास[1] च शोकदीनां तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारां पितृभिर्हिमांशोरन्त्यां कलां दर्श इवौषधीषु ॥ ८० ॥

प्रका—समर्पयामासेति । तदागमेन प्रीतिर्यासामिति बहुव्रीहिः । निर्विष्टसारां भुक्तरसाम् । एतच्छोकदीनामित्यस्य प्रतिवस्तु । दर्शोऽमावास्या । ओषधीषु लतादिषु । अमावास्यायां ह्योषधीषु सोमस्य सङ्क्रम इत्यागमप्रसिद्धम् । उपमानेन पुनरुपचयः प्रतीयते ॥

ता इङ्गुदीस्नेहकृतप्रदीपमास्तीर्णमेध्याजिनतल्पमन्तः ।
तस्यै सपर्यानुपदं दिनान्ते निवासहेतोरुटजं वितेरुः ॥ ८१ ॥

प्रका—ता इति । इङ्गुदी तापसतरुरिति सिंहः । आस्तरणं शयनरचना । तल्पं शय्या । सपर्या फलमूलादिपूजा तस्या अनुपदमनन्तरम् । पदमनुगतमनुपदम् । "कुगतिप्रादयः" । स्वभावाच्चायं पश्चादर्थवृत्तिः । दिनान्त इत्युचितकालत्वमुक्तम् ॥

तत्राभिषेकप्रयता वसन्ती प्रयुक्तपूजा विधिनाऽतिथिभ्यः ।
वन्येन सा वल्कलिनी शरीरं पत्युः प्रजासन्ततये बभार ॥ ८२ ॥

प्रका—तत्रेति । अभिषेकेण मुनिजनोचितेन स्नानेन । वन्येन फलमूलादिना । प्रजायास्सन्ततये अविच्छेदाय । स्नानशुद्धिर्दैवातिथिपूजा वल्कलधारणं, मुनेस्तस्य तपःसिद्धौ सत्यामपि वन्येनात्मधारणञ्चेति तपो भर्तृहितैषिणी चकारेत्यर्थः ॥

अपि प्रभुः सानुशयोऽधुना स्यादित्युत्सुकः शक्रजितोऽपि हन्ता ।
शशंस सीतापरिदेवितान्तमनुष्ठितं शासनमग्रजाय ॥ ८३ ॥

प्रका—अपीति । अपिराशंसायाम् । अधुनैतच्छ्रवणसमये । परिदेवितान्तमित्यनुशयजननाय । अनुष्ठितं कृतमेव, न त्वनुकम्पादिविघ्नितम् । इत्थमतिकरुणं विलपन्त्येवार्या मया विजने वने त्यक्तेति निवेदितवानित्यर्थः । ननु द्वितीयोऽपिशब्दः किमर्थः समुच्चयार्थः । कुत्र कयोः समुच्चयः ? प्रवृत्तिमात्रे सीतालक्ष्मणयोः । सीतायाः प्रवृत्तिरुक्ता । लक्ष्मणस्यापि सेच्यते इत्यर्थः । अनुष्ठानमत्र शासनस्य । कथनन्तु प्रलापसहितस्य ॥

[1] ता ।

बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥ ८४ ॥

प्रका—बभूवेति । सहसा अविचार्यैव । सहस्यः शिशिरद्वितीयमासः । अनेन विच्छायत्वमपि प्रतीयते । तत् किन्त्यक्तवानित्याह—कौलीनेति ॥

निगृह्य शोकं स्वयमेव धीमान् वर्णाश्रमावेक्षणजागरूकः ।
स भ्रातृसाधारणभोगमृद्धं राज्यं रजोरिक्तमनाः शशास ॥ ८५ ॥

प्रका—विचार्य तु कथमित्याह—निगृह्येति । स्वयमेव न तु पराश्वासनया । अत्र हेतुर्धीमान् । जागरूकः सन्नद्धः । भ्रातृभिः साधारणो भोगो रत्नादानलक्षणो यत्र । रजोरिक्तमनाः राजर्षिवृत्तस्थित इत्यर्थः । अत्र भोगस्य साधारणत्वेऽपि शासनस्यासाधारणत्वं विवक्षितम् ॥

तस्यैकपत्नीं परिवादभीरोः साध्वीमपि त्यक्तवतो नृपस्य ।
वक्षस्यसङ्घट्टसुखं वसन्ती रेमे सपत्नीरहितेव लक्ष्मीः ॥ ८६ ॥

प्रका—न केवलं सीतात्यागजेन शोकेनाधीरत्वादुद्यमो नाभिभूतः, प्रत्युत स्वसुखचिन्तनाभावात् पालनोद्यमस्य प्रकर्षोऽभूत् । ततश्च राजलक्ष्मीरपि प्रकर्षवत्यासीदित्याह—तस्येति । एकशब्दोऽधिकसङ्ख्याव्यवच्छेदपरः तदेकायत्तसुखत्वं द्योतयति । परिवादभीरोः लोकरञ्जनपरत्वेनेत्यर्थः । न त्वधर्मभीरुतयापीत्याह—साध्वीमिति । अपिशब्दस्त्यागे विरोधमाचक्षाणः परिवादभयस्य बलीयस्तां द्योतयति । एवंविधश्च त्यागोऽत्रानूद्यमानो लक्ष्म्युद्दीपने हेतुः । नृपस्य रञ्जनप्रधानस्येत्यर्थः । वक्षसि लक्ष्मीवासस्य कविव्यवहारसिद्धत्वात् प्राक् सीतालक्ष्म्योर्यः सङ्घट्टः सम्मर्दस्तदभावेन तदानीं सुखं वसन्तीत्यर्थः । सङ्घट्टस्त्वेकस्थानवासावेग समारोपितः । तदभावस्य च पालनोद्यमप्रकर्षाधानेन वाससुखत्वं प्रति हेतुत्वं । वासस्य सुखत्वञ्च सम्पन्नानुकूलसाधनत्वम् । रेमे चिक्रीड, कन्दलिता बभूवेत्यर्थः । सपत्नीरहितेवेति निष्प्रत्यूहत्वं ध्वनितम् । निर्दोषामप्येकपत्नीं लोकरञ्जनप्रधानत्वेन त्यक्तवतः प्राक्तदेकायत्तसुखस्य तदानीं स्वसुखचिन्तारहितस्य तस्य पालनोद्यमप्रकर्षे सति सम्पन्नानुकूलसाधना निर्व्यसना च राजलक्ष्मीः स्फीताऽऽसीदित्यर्थः ॥

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार ।

१ भार्याम् ।

वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ ८७ ॥

प्रका—अथ रामस्य सीताविषयां प्रतिपत्तिं दर्शयंस्तस्याः तयैवाश्वस्ततामुत्तरसर्गार्थसन्धानायाह—सीतामिति । दशमुखरिपुरित्यनेन तत्प्रत्याहरणे महान्तमारम्भं द्योतयता प्रेमातिशयो ध्वन्यते । तेन च श्रोतॄन् प्रति तस्यागस्यासम्भाव्यत्वमन्यानुपयमनस्य सम्भाव्यता च द्योत्यते । तेनैव पदेन प्रवीरत्वात्सुलभकन्यारत्नस्सन्नपीति च ध्वन्यते । महाकविवाचोऽस्याः कामधेनुत्वात् । अन्यामिति योषिदन्तरपराचीनस्वभावत्वमस्य लोकसिद्धमत्र हेतुत्वेन द्योत्यते । यदिति वाक्यार्थपरामर्शकत्वान्नपुंसकत्वम् । अयन्तावदाद्यो विषहणे हेतुः । द्वितीयमाह—तस्या इति । एवशब्दः पौनर्वचनिकः; उक्तस्य पुनर्वचने प्रयुज्यत इति । प्रतिकृतिसख इति । तत्प्रतिच्छन्दं पत्नीप्रतिनिधिं कृत्वेत्यर्थः । सम्भवतु नामैकस्मिन् यज्ञे प्रतिनिधिः, बहुषु तु मुख्येनैव सम्भाव्यमित्याशयेन—क्रतूनिति बहुवचनं प्रयुक्तं प्रतिनिधिनिर्बन्धं द्योतयति । अत्राद्येन यद्वृत्तेन सीतायाः प्रेमस्वभावशङ्कितहेतुकेर्ष्याज्वलनप्रशमो ध्वन्यते । द्वितीयेन च मनोरथसम्पत्तिः । मनोरथोऽपि तस्या दर्शितो मुनिना तदुक्त्यैव विच्छिन्नाभिषेकप्रस्तावे "दीक्षितं व्रतसम्पन्न"मित्यादिना । वृत्तान्तेन कथोपारूढेन अर्थशरीरेण । तेनेति । तेन तेनेत्यर्थः । श्रवणविषयप्रापिणा याहच्छिकपथिकजनकथाप्रसङ्गेषु स्वयमेव कर्णगोचरं गतेनेत्यर्थः । भर्तुरिति । अनेन प्रकारेण मनागपि अक्षतभर्तृभावस्येत्यर्थः । दुर्वारं दुस्सहम् । कथमपि कृच्छ्रेण । विषेहे सोढवत्येव । दुर्वारव्यथमपीति पाठे परित्यागदुःखं परित्यागव्यसनमित्यर्थः । उपयेमे "उपाद्यमः स्वकरणे" इत्यात्मनेपदम् । आजहारेत्यत्र तु क्रियाफलस्य कर्त्रभिप्रायत्वे सत्यप्रधानत्वाद्विवक्षितत्वेन नात्मनेपदम् । "विवक्षापि हि प्रयोजिका भवति, यथा अलोमिका एडका" इति । तथा चाह महिमा "अर्थस्य तदतद्भावो विवक्षामात्रतो भवेत् यत्र, प्रक्रमभेदोयं न तत्रोद्भाव्यते बुधैः, तथा विशेषे कालस्य शीघ्रादिप्रत्ययेषु च कर्तुश्च फलवत्तायां तेन तेनोपदर्शिता" इति । वाक्ये चात्र सीताप्रतिकृतिसखत्वप्रतिपादने तात्पर्यं, न तु कर्तुः क्रियाफलसम्बन्धे । एवमन्यत्रापि ॥

इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां चतुर्दशः सर्गः ॥

# पञ्चदशः सर्गः ।

कृतसीतापरित्यागः स रत्नाकरमेखलाम् ।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥ १ ॥

प्रका—अथास्य दुष्टदमनपुत्रलाभादि वर्णयितुमुपक्रमते—कृतेति । रत्नाकरमेखलाम् अखण्डामित्यर्थः । अनेन साम्राज्यप्राप्तिरुक्ता, तया च पूर्वप्रतिपादितस्योद्यमस्य प्रकर्षान्तरं द्योत्यते । बुभुजे करादानादिना स्ववशे तामनयत् । पालनस्याविवक्षितत्वादात्मनेपदम् । पृथिवीपाल इत्यधिकार उक्तः । पृथिवीमेव, न तु नृत्तगीतादीन् सम्भोगानपीत्यर्थः । तत्र हेतुस्सीतात्यागोऽनूदितः । केवलशब्दः कर्मविशेषणं सन्नेवशब्दार्थं स्फुटयति ॥

पदा—अथ रामस्य दुष्टान्तरदमनं पुत्रसम्भवादिकञ्च वक्तुमुपक्रमते—कृतेति । कृतसीतापरित्यागः स पृथिवीपालः केवलां पृथिवीमेव बुभुजे । केवलामेकाम् । बुभुजे भुक्तवान् । पालनस्याविवक्षितत्वात् "भुजोऽनवने" इत्यात्मनेपदम् । नृत्तगीतादिसम्भोगमपहाय भुवमेवानुभूतवानित्यर्थः । रत्नाकरः समुद्र एव मेखला यस्याः अखण्डां भुवमित्यर्थः ॥

लवणेन विलुप्तेज्यास्तामिस्रेण तमभ्ययुः ।
मुनयो यमुनाभाजः शरण्यं शरणार्थिनः ॥ २ ॥

प्रका—लवणेनेति । तामिस्रेण राक्षसेन तमिस्रायां रात्र्याञ्चरतीति । यमुनाभाजस्तत्तीरवासिनः ॥

पदा—लवणेनेति । यमुनाभाजो मुनयः शरणार्थिनः तम् अभ्ययुः । यमुनातीरवासिनो मुनयश्शरणार्थिनो भूत्वा श्रीराममासेदुः । शरणं रक्षितारमर्थयितुं शीलमेषामिति । तथा । शरणार्थित्वे हेतुमाह—लवणेन तामिस्रेण विलुप्तेज्या इति । तमिस्रायाञ्चरतीति तामिस्रो राक्षसः । विलुप्ता नाशिता इज्या यागो येषाम् । शरण्यं शरणार्हम् ॥

अवेक्ष्य रामं ते तस्मिन्न प्रजह्रुः स्वतेजसा ।
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ ३ ॥

प्रका—महाप्रभावानामेषां कुतः शरणार्थित्वमित्याह—अवेक्ष्येति । त्रातारं बुद्ध्वा । प्रजह्रुः अपकृतवन्तः । अत्र वैधर्म्येणार्थान्तरं न्यस्यति—त्राणेति । शापास्त्रा मुनयः परिपन्थिनिराकारकं शापं तपोव्ययभयान्न प्रयुञ्जतेत्यर्थः ॥

प्रदा—अवेक्ष्येति । ते रामम् अवेक्ष्य तस्मिम् स्वतेजसा न प्रजहुः । अवेक्ष्य निरूप्य । तस्मिन् लवणे विषये । रामं त्रातारं बुद्ध्वा स्वेषां तेजसा शापशिना न प्रहृतवन्त इत्यर्थ । उक्तमर्थं वैधर्म्यार्थान्तरन्यासेन समर्थयते—शापास्त्राः त्राणाभावे हि तपसः व्ययं कुर्वन्तीति । शाप एवास्त्रं येषान्ते शापास्त्रा मुनयः । त्राणस्य रक्षणस्य अभावे । शापेन शत्रुनिग्रहे हि कृते तपसो व्ययो भविता । अन्यकृतस्यात्मरक्षणस्याभावे तु सोऽपि बलादापतेत् । न हि मुनयः परिपन्थिनिरासकं शापं तपोव्ययभयात् प्रयुञ्जत इत्यर्थः ॥

प्रतिशुश्राव काकुत्स्थस्तेभ्यो विघ्नप्रतिक्रियाम् ।
धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥ ४ ॥

प्रका—प्रतिशुश्रावेति । क्रियाया एवोत्तरत्वे योग्ये प्रतिश्रवस्तदाश्वासनार्थः । तत्प्रतिश्रवस्यार्थाव्यभिचारसम्प्रतिपत्तेः । उपपन्नञ्चैतदित्याह—धर्मेति । "धर्मसंस्थापनार्थाय सम्भवामि युगे युग" इति वचनात् । प्रवृत्तिरवतारः ॥

पदा—प्रतिशुश्रावेति । काकुत्स्थः तेभ्यः विघ्नप्रतिक्रियां प्रतिशुश्राव । प्रतिक्रियां प्रतिविधानम् । प्रतिशुश्राव प्रतिजज्ञे । युक्तञ्चैतदित्याह—शार्ङ्गिणः भुवि प्रवृत्तिः धर्मसंरक्षणार्था एव इति । प्रवृत्तिरवतारः । भगवदवतारो हि धर्मसंरक्षणार्थम् । तदुक्तं भगवतैव "धर्मसंरक्षणार्थाय सम्भवामि युगे युगे" इति । एवशब्देन प्रयोजनान्तरनिरपेक्षत्वमुक्तम् ॥

ते रामाय वधोपायमाचख्युर्विबुधद्विषः ।
दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति ॥ ५ ॥

प्रका—त इति । शूली परमेश्वरप्रसादलब्धेन पैतृकेण शूलेन उपेतः । प्रार्थ्यतामभियातव्यः ॥

पदा—त इति । ते रामाय विबुधद्विषः वधोपायम् आचख्युः । विबुधद्विषो राक्षसस्य । आचख्युः कथयामासुः । तत्प्रकारमेवाह—दुर्जय इति । लवणः शूली दुर्जयः, विशूलः प्रार्थ्यतामिति । शूली शूलवान् महेश्वरप्रसादलब्धेन पैतृकेण शूलेनोपेतश्चेद्दुर्जयः । तस्मात्स यदा विशूलो भवति तदा प्रार्थ्यताम् अभियातव्यः । "याच्ञायामभियाने च प्रार्थना" इति केशवः ॥

आदिदेशाथ शत्रुघ्नं तेषां क्षेमाय राघवः ।
करिष्यन्निव नामास्य यथार्थमरिनिग्रहात् ॥ ६ ॥

प्रका.—आदिदेशेति। करिष्यन्निवेत्युत्प्रेक्षया रामस्य तच्छक्तिख्यापनेच्छा द्योत्यते ॥

पदा—आदिदेशेति। अथ राघवः तेषां क्षेमाय शत्रुघ्नमादिदेश। तेषामृषीणाम्। क्षेमाय रक्षार्थं। अस्य नाम अरिनिग्रहाद्यथार्थं करिष्यन्निव। शत्रून् हन्तीति व्युत्पत्त्या सिद्धस्यास्य नाम्नोऽन्वर्थतां कर्तुमिच्छन्निवेत्यर्थः। उत्प्रेक्षया रामस्य तद्वीर्यख्यापनेच्छा द्योत्यते ॥

यः कश्चन रघूणां हि परमेकः परन्तपः।
अपवाद इवोत्सर्गं व्यावर्तयितुमीश्वरः ॥ ७ ॥

प्रका—कथं तथावीर्ये लवणे शत्रुघ्नमदृष्टकर्माणमादिष्टवानित्याह—यः कश्चनेति। अनियतः। परं शत्रुम्। परन्तपः सहजतथाविधशक्तियुक्तः। "द्विषत्परयोस्तापेः" इति खश्। अपवादो विशेषशास्त्रम्। उत्सर्गः सामान्यशास्त्रम्। रघूणां मध्ये यः कश्चिदसहायोऽपि निसर्गशक्तत्वाच्छत्रुन्निवारयितुं क्षमः। तदादेशलक्षणविशेषप्रस्तावे सामान्यकथनात्मिकेयमप्रस्तुतप्रशंसा। प्रस्तुत आदेशो युज्यत इति व्यङ्ग्यम् ॥

पदा—तादृशवधार्थमदृष्टवीर्यस्य शत्रुघ्नस्य नियोगमुपपादयति—यः कश्चनेति। रघूणां यः कश्चन एकः परं व्यावर्तयितुं ईश्वरः हि। यः कश्चन अनियत इत्यर्थः। परं शत्रुम्। व्यावर्तयितुं निवारयितुम्। ईश्वरः क्षमः। हि प्रसिद्धौ। रघूणां मध्ये यः कश्चिदसहायोऽपि शत्रून्निवारयितुं शक्तो हीत्यर्थः। तत्र हेतुः—परन्तप इति। सहजतथाविधशक्तियुक्तः। "द्विषत्परयोस्तापेः" इति खश्। अपवाद उत्सर्गमिव। अपवादो विशेषशास्त्रम्। उत्सर्गः सामान्यशास्त्रम्। अपवादस्य सामान्यबाधकत्वं प्रसिद्धम्। व्याख्यातञ्चास्माभिरेव कुमारसम्भवविवरणे ॥

अग्रजेन प्रयुक्ताशीस्ततो दाशरथी रथी।
ययौ वनस्थलीः पश्यन् पुष्पिताः सुरभीरभीः ॥ ८ ॥

प्रका—अग्रजेनेति। दाशरथिरिति सुरशत्रुहनने शक्तत्वं द्योतयति। रथी प्रशस्तं रथमारूढः। अभीः शत्रुचिन्तारहितः। अतश्च विस्रब्धं वनस्थलीदर्शनम् ॥

पदा—अग्रजेनेति। ततो दाशरथिरग्रजेन प्रयुक्ताशीः ययौ। अग्रजेन प्रयुक्तमाशीर्वादं परिगृह्य ययावित्यर्थः। रथी राक्षसप्रहारसहेन प्रशस्तेन रथेन युक्तः। वनस्थलीः पश्यन् अदृष्टपूर्वाणि वनान्तराणि अवलोकयन्। पुष्पिताः सञ्जातपुष्पाः, अत एव सुरभीः घ्राणप्रीतिकरीः। अभीः भयरहितः। शत्रुचिन्तारहित इत्यर्थः। अन्यथा कथं तादृशवनस्थलीदर्शनपरत्वं सम्भवेदिति भावः ॥

रामादेशादनुगता या सेना तस्य सिद्धये ।
पश्चादध्ययनार्थस्य धातोरधिरिवाभवत् ॥ ९ ॥

प्रका—रामेति । रामादेशादिति तद्गतमेव प्रभुत्वमिति ध्वनति । शत्रुघ्नस्य तन्निरपेक्षताञ्च । अनुगता या सेना सा पश्चात्तस्य सिद्धयेऽभवत् । प्रथमन्तु स एव सिद्धयेऽभूत् । यथा प्रथममिङैवाध्ययनेऽभिहिते "इङिकावध्युपसर्गं न व्यभिचरत" इति प्रयुक्तोऽधिः धातुलीनमर्थमुपसर्गो द्योतयतीति न्यायेन तदेवाध्ययनं द्योतयति, तथा तद्बुध्युत्साहसाधितेष्वर्थेषु सेनाया व्यापार इत्यर्थः । सेनाङ्गमिति वल्लभपाठे तच्छब्दाध्याहारदोषो न विद्यते । अङ्गशब्दश्चैकदेशपर्यायः ॥

पदा—रामेति । रामादेशाद् या सेना अनुगता सा पश्चात् तस्य सिद्धये अभवत् । प्रथमन्तु स एव कार्यसिद्धयेऽभूदित्यर्थः । अध्ययनार्थस्य धातोः अधिरिव । अध्ययनमर्थो यस्य सोऽध्ययनार्थः । "इङ् अध्ययने" इत्यस्य धातोरित्यर्थः । अधिरुपसर्गः । अध्युपसर्गो यथा धातूक्तस्यैवार्थस्य पश्चात्सिद्धये भवति तथेत्यर्थः । अयं भावः । धातुलीनमर्थमुपसर्गेण विना धातुरेवाभिदधाति । उपसर्गाणान्तु केवलं तदुक्तार्थाभिव्यञ्जकत्वमेव । यथाह माघः—"धातुलीनमुपसर्ग इवार्थम्" इति । अध्युपसर्गो यथा धातूक्तमेवार्थं पश्चादभिद्योतयति तथा तद्बुध्युत्साहसाधितमर्थं सेनापीति । ततश्च यथा स्वयमेवाध्ययनार्थप्रतिपादने समर्थस्य धातोः "इङिकावध्युपसर्गं न व्यभिचरतः" इति शास्त्रीयाद्वचनादेवाध्युपसर्गप्रयोगः, तथा रामाज्ञयैव सेनानुगमनमिति ॥

आदिष्टवर्त्मा मुनिभिः स गन्ता तपतां वरः ।
विरराज रथप्रष्ठैर्वालखिल्यैरिवांशुमान् ॥ १० ॥

प्रका—आदिष्टेति । आदिष्टं मुनिभिः पुरोगमनेन ज्ञापितं वर्त्म यस्य । गन्ता गच्छन् । तपतां परन्तपानाम् । "प्रष्ठोऽग्रगामिनि" इति निपातः । बालखिल्याः सूर्यस्य स्तोत्रैस्तेजोवर्धका मुनयः ॥

पदा—आदिष्टेति । मुनिभिरादिष्टवर्त्मा गन्ता स विरराज । मुनिभिः पुरोगमनेन आदिष्टं ज्ञापितं वर्त्म मार्गो यस्य । गन्ता गच्छन् । बालखिल्यैः अंशुमान् इव । बालखिल्या सूर्याग्रगामिनो मुनयः । अंशुमानादित्यः । तपतां वरः राजपक्षे परन्तपानां वर इत्यर्थः । रथप्रष्ठैः रथाग्रगामिभिः । "प्रष्ठोऽग्रगामिनि" इति निपातः ।

तस्य मार्गवशादेका बभूव वसतिर्यतः ।
रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने ॥ ११ ॥

---

प्रका—तस्येति । मार्गवशादवर्जनीयतया । वसती रात्रिः । यतो गच्छतः । अनेनाबुद्धिपूर्वता द्योत्यते । रथस्वनोत्कण्ठमृग इति मृगाणामपि हर्षकथनात्तपोवनस्यातिथेयत्वमुक्तम् ॥

पदा—तस्येति । यतः तस्य मार्गवशाद् वाल्मीकीये तपोवने एका वसतिर्बभूव । यतः गच्छतः । मार्गवशादित्यनेनावर्जनीयत्वमुक्तम् । वसती रात्रिः । "वसतिर्वासतेयी च श्यामा रात्रिश्च कथ्यते" इति हलायुधः । रथस्य स्वनेन शब्देन उत्कण्ठा उत्क्षिप्तकण्ठा मृगा यस्मिन् । अनेन मृगाणामपि अतिथिसमागमे हर्षकथनेन तपोवनवासिनामातिथेयत्वमुक्तम् ॥

तमृषिः पूजयामास कुमारं [१]क्लान्तवाहनम् ।
तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः ॥ १२ ॥

प्रका—तमिति । कुमारमिति सम्भावनीयत्वमुक्तम् । श्रान्तवाहनमिति दूराध्वखिन्नपरिवारत्वमुक्तम् । विशेषप्रतिपत्तिभिः सातिशयसंविधाभिः ॥

पदा—तमिति । ऋषिः तं कुमारं तपःप्रभावसिद्धाभिः विशेषप्रतिपत्तिभिः पूजयामास । तपसः प्रभावेन सिद्धाभिर्लब्धाभिः । विशेषप्रतिपत्तिभिः सातिशयाभिः सम्भावनाभिः क्लान्तवाहनं दूराध्वगमनखिन्नपरिवारमित्यर्थः ॥

तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती ।
सुतावसूत सम्पन्नौ कोशदण्डाविव क्षितिः ॥ १३ ॥

प्रका—तस्यामिति । एवशब्दो दैवयोगमत्र हेतुतया द्योतयति । अन्तर्वत्नी गर्भिणीत्वेन प्रागेव प्रतिपन्नेत्यर्थः । एतच्च सम्प्रत्ययहेतुः । सम्पन्नौ समग्रौ । उपमयाऽत्र तस्याश्चरितार्थता द्योत्यते ॥

पदा—तस्यामिति । अस्य अन्तर्वत्नी प्रजावती तस्यां यामिन्याम् एव सुतौ असूत । अस्य शत्रुघ्नस्य । अन्तर्वत्नी गर्भिणी । प्रागेव प्रसिद्धोऽयमर्थ इति भावः । प्रजावती भ्रातृजाया । सुतावसूत सहैव द्वौ पुत्रौ प्रसूतवती । क्षितिः कोशदण्डाविव पृथिवी धनसञ्चयसैनिकजनाविव । उपमाया सीताया कृतार्थता द्योत्यते । सम्पन्नौ सम्पूर्णौ । उभयविशेषणम् ॥

सन्तानश्रवणाद्भ्रातुः सौमित्रिः सौमनस्यवान् ।
प्राञ्जलिर्मुनिमामन्त्र्य प्रातर्युक्तरथो ययौ ॥ १४ ॥

१ क्ला ।

प्रका—सन्तानेति। श्रवणात्सिद्धिनिश्चयादित्यर्थः। तेन पूर्वं शङ्कितापायता प्रतीयते। सौमनस्यं प्रीतिः। प्राञ्जलिरिति कृतज्ञतां द्योतयन्निवेत्युत्प्रेक्षाध्वनिः। युक्तरथ इति रणोद्यमद्योतकम्॥

पदा—सन्तानेति। सौमित्रिः भ्रातः प्राञ्जलिः मुनिमामन्त्र्य युक्तरथः ययौ। आमन्त्र्य आपृच्छ्य। युक्तो योजितो रथो येन। अनेन युद्धोद्यमो द्योत्यते। भ्रातुः सन्तानश्रवणात्सौमनस्यवान्। सौमनस्यं प्रीतिः तद्वान्॥

स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः।
वनात् करमिवादाय सत्त्वराशिमुपस्थितः ॥१५॥

प्रका—स चेति। मधूपघ्नं मधोरसुरस्य लवणस्य पितुराश्रयं स्थानम्। कुम्भीनसी रावणस्वसा मधुभार्या मलापरसंज्ञा। चशब्दावेककालतां द्योतयतः। समुच्चयालङ्कारप्रकारश्चायम्। सत्त्वराशिं प्राणिसमूहम्। करमिवेति। तस्य वनप्रदेशस्य तद्भयादन्यैरनास्कन्दनीयत्वं द्योत्यते॥

पदा—स चेति। स मधूपघ्नं प्राप च। कुम्भीनस्याः कुक्षिजः वनात् करमिव सत्त्वराशिमादाय उपस्थितः च। मधुरिति लवणपितुर्नाम। तस्योपघ्नमाश्रयम्। "मधुरा तु मधूपघ्नम्" इति यादवः। कुम्भीनसी रावणसोदरी। सा तु मधोर्भार्या। तस्याः कुक्षिजः पुत्रः। सत्त्वराशिं प्राणिसमूहम्। करमिवेत्यनेन लवणस्य वनप्रदेशाधिपत्यमुक्तम्। तस्य वनप्रदेशस्यान्यैरनभिभवनीयता च द्योत्यते। चकारावेककालतां द्योतयतः। अतोऽत्र समुच्चयालङ्कारः॥

धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः।
क्रव्याद्गणपरीवारश्चिताग्निरिव जङ्गमः ॥१६॥

प्रका—धूमेति। "उपमानानि सामान्यवचनैः" इति समासः। वसागन्धी तत्सिक्तत्वात्। क्रव्यं मांसमदन्तीति क्रव्यादो गृध्राद्यः राक्षसाश्च। जङ्गमश्चिताग्निरिवेत्युद्वेजनीयत्वातिशय उक्तः॥

पदा—धूमेति। चिताग्निः जङ्गम इव। चितायामग्निः चिताग्निः। उद्वेजनीयातिशय उत्प्रेक्षया दर्शितः। धूमवद्धूम्रः धूमेन धूम्रश्च। वसाया गन्धोऽस्यास्तीति वसागन्धी। "हृन्मेदस्तु वसा वपा" इत्यमरः। ज्वालावद्बभ्रवः पिङ्गलाशिरोरुहा यस्य। ज्वाला एव बभ्रवः शिरोरुहा यस्य इति च। क्रव्यं मांसमदन्तीति क्रव्यादो राक्षसाः। चिताग्नौ तु गृध्रादयः॥

अपशूलन्तमासाद्य लवणं लक्ष्मणानुजः ।
रुरोध सम्मुखीनो हि जयो रन्ध्रप्रहारिणाम् ॥ १७ ॥

प्रका—अपशूलमिति । अनेन 'विशूलः प्रार्थ्यताम्' इत्युपदेशस्याविस्मरणं द्योतयति । लक्ष्मणानुज इत्यप्रमादम् । रुरोध द्वारमवष्टभ्य तस्थौ । सम्मुखीन इत्यानुकूल्यं लक्ष्यते । "यथामुखसम्मुखस्य दर्शनः खः" ॥

पदा—अपशूलमिति । लक्ष्मणानुजः अपशूलं तं लवणमासाद्य रुरोध । लक्ष्मणानुज इत्यनेन अप्रमाद उक्तः । अपगतः शूलो यस्मात् । अनेन 'विशूलः प्रार्थ्यताम्' इत्युपदेशस्याविस्मरणमुक्तम् । रन्ध्रप्रहारिणां जयः सम्मुखीनः हि । रन्ध्रे प्रहारयोग्ये काले प्रहर्तुं शीलमेषामिति तथा । सम्मुखीनः अभिमुखागतः । अनुकूल इति यावत् । "यथामुख" इत्यादिना खः ॥

नातिपर्याप्तमालक्ष्य मत्कुक्षेरद्य भोजनम् ।
दिष्ट्या त्वमसि मे धात्रा भीतेनेवोपपादितः ॥ १८ ॥

प्रका—नातीति । असीति क्रियापदं, वाक्यालङ्कारे निपातो वा ॥

पदा—नातीति । त्वं धात्रा मे उपपादितः असि दिष्ट्या । मे मह्यम् । उपपादितः सम्पादितः । दिष्ट्येत्यानन्दवाचकमव्ययम् । "दिष्ट्या समुपजोषञ्चेत्यानन्द" इत्यमरः । अद्य मत्कुक्षेः भोजनं नातिपर्याप्तम् आलक्ष्य भीतेनेव । अतिपर्याप्तमतिसम्पूर्णं न भवतीति नातिपर्याप्तम् । आलक्ष्य ज्ञात्वा । धातुरपि तत्कृतपरिभवासहनत्वमुत्प्रेक्षया ध्वन्यते ॥

इति सन्तर्ज्य शत्रुघ्नं राक्षसस्तज्जिघांसया ।
प्रांशुमुत्पाटयामास मुस्तास्तम्बमिव द्रुमम् ॥ १९ ॥

प्रका—इतीति । स्तम्बस्तृणम् । उपमयात्त्वोत्पाटनस्येषत्करत्वं द्योत्यते ॥

पदा—इतीति । राक्षसः शत्रुघ्नम् इति सन्तर्ज्य तज्जिघांसया प्रांशुं द्रुममुत्पाटयामास । सन्तर्ज्य तर्जयित्वा । प्रांशुं दीर्घं महान्तमित्यर्थः । मुस्तास्तम्बमिव । स्तम्बस्तृणम् । तादृशद्रुमोत्पाटनस्यानायाससिद्धत्वमुपमया ध्वन्यते । तेन च तस्य बलाधिक्यम् ॥

सौमित्रेर्निशितैर्बाणैरन्तरा शकलीकृतः ।
गात्रं पुष्परजः प्राप न शाखी नैरृतेरितः ॥ २० ॥

प्रका—सौमित्रेरिति । पुष्परजः प्रापेति मध्ये वाक्यान्तरं विस्मयावेगं द्योतयति ॥

पदा—सौमित्रेरिति । नैरृतेरितः शाखी सौमित्रेः गात्रं न प्राप । नैरृतेन राक्षसेन ईरितः प्रयुक्तः शाखी वृक्षः शत्रुघ्नस्य गात्रं न प्राप्तः । तत्र हेतुः निशितैः बाणैः अन्तरा शकलीकृत इति । अन्तरा मध्ये । शकलीकृतः शकलतां नीतः । पुष्परजः प्राप । पुष्परजस्तु सौमित्रेर्गात्रं प्रापेत्यर्थः ॥

निशानं स्वस्य शूलस्य रक्षस्तस्मै महोपलम् ।
प्रजिघाय कृतान्तस्य मुष्टिं पृथगिव स्थितम् ॥ २१ ॥

प्रका—निशानमिति । निश्यतेऽस्मिन्निति निशानम् । उत्प्रेक्षया त्वमोघत्वमुक्तम् ॥

पदा—निशानमिति । रक्षः तस्मै महोपलं प्रजिघाय । तस्मै शत्रुघ्नं निहन्तुम् । महान्तमुपलम् । प्रजिघाय प्रयुक्तवान् । कृतान्तस्य मुष्टिं पृथक् स्थितमिव । कृतान्तस्य मुष्टिं कृतान्तात् पृथग्भूय स्थितमिव । तत्रामोघत्वमुत्प्रेक्षयोक्तम् । अत एवाह—स्वस्य शूलस्य निशानमिति । निश्यतेऽस्मिन्निति निशानम् । महेश्वरप्रसादलब्धस्य शूलस्य निशातत्वविधानसाधनमित्यर्थः ॥

ऐन्द्रमस्त्रमुपादाय शत्रुघ्नेन स ताडितः ।
सिकतात्वादपि परां प्रपेदे परमाणुताम् ॥ २२ ॥

प्रका—ऐन्द्रमिति । स निशानोपलः । परामतिशयिताम् । परमाणुतां सौक्ष्म्यम् ॥

पदा—ऐन्द्रमिति । शत्रुघ्नेन ऐन्द्रमस्त्रमुपादाय ताडितः स सिकतात्वादपि परां परमाणुतां प्रपेदे । स निशानोपलः । ऐन्द्रम् इन्द्रदैवतम् । सिकतात्वादपि परामतिशयितां परमाणुतां सूक्ष्मताम् ॥

तमुपाद्रवदुद्यम्य दक्षिणन्दोर्निशाचरः ।
एकताल इवोत्पातपवनप्रेरितो गिरिः ॥ २३ ॥

प्रका—तमिति । दोश्शब्देऽत्र नपुंसकत्वं चिन्त्यम्[2] । एवन्तु पठनीयं 'दक्षिणं दोषमुद्धृत्य लवणस्तमुपाद्रवत्' इति वल्लभः ॥

पदा—तमिति । निशाचरः दक्षिणं दोरुद्यम्य तमुपाद्रवत् । दोर्भुजम् । दक्षिणं

---

१ विनाशात् तस्य वृक्षस्य । २ चिन्ताप्रकारस्तु सिद्धान्तकौमुद्यामजन्तपुल्लिङ्गप्रकरणे समर्थितदिशा द्रष्टव्यः ।

बाहुमुत्क्षिप्य राक्षसस्तमुपाद्रवदित्यर्थः । दोश्शब्दस्य नपुंसकत्वं चिन्त्यम् । एकतालः उत्पातपवनप्रेरितः गिरिरिव । एक एव तालो वृक्षविशेषो यस्मिन् । उत्पातपवन उत्पातवायुः तेन प्रेरितः । उत्पातवातो हि महान् भवति । अत एव पर्वतप्रेरणसमर्थश्च । दुर्वारत्वप्रतीतिरुत्प्रेक्षाफलम् ॥

कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन् ।
आनिनाय भुवः कम्पं जहाराश्रमवासिनाम् ॥ २४ ॥

प्रका—कार्ष्णेनेति । लोहमयेन, वैष्णवेन वा । "कृष्णं सीसासिलोहेषु" इति यादवः । जहारानिनायेति परिवृत्तिः ॥

पदा—कार्ष्णेनेति । शत्रोः कार्ष्णेन पत्रिणा भिन्नहृदयः पतन् स भुवः कम्पम् आनिनाय । आश्रमवासिनां जहार । कार्ष्णेन लोहमयेन शरेण । "कृष्णं सीसासिलोहेषु" इति यादवः । वैष्णवेन वा । शरीरस्य महत्त्वात् पतनसमये भुवश्चालयामास । तदुपद्रुतानामाश्रमवासिनां हृदयकम्पन्तु जहार इति परिवृत्तिः ॥

वयसां पङ्क्तयः पेतुर्हतस्योपरि विद्विषः ।
तत्प्रतिद्वन्द्विनो मूर्ध्नि दिव्याः कुसुमवृष्टयः ॥ २५ ॥

प्रका—वयसामिति । पक्षिणाम् । अत्र दीपकालङ्कारः ॥

पदा—वयसामिति । हतस्य रक्षसः उपरि वयसां पङ्क्तयः पेतुः । मांसार्थिनो गृध्रादयः पतन्ति स्म । तत्प्रतिद्वन्द्विनो मूर्ध्नि दिव्याः कुसुमवृष्टयः । तस्य रक्षसः प्रतिद्वन्द्विनः शत्रोः, शत्रुघ्नस्येत्यर्थः । दिवि भवा दिव्याः, कल्पवृक्षोद्भवा इत्यर्थः । अत्र दीपकालङ्कारः ॥

स हत्वा लवणं वीरस्तदा मेने महौजसः ।
भ्रातुस्सोदर्यमात्मानमिन्द्रजिद्वधशोभिनः ॥ २६ ॥

प्रका—स इति । समानोदरे शयितः सोदर्यः । "सोदराद्यत्" इति यत्प्रत्ययः । तदेति । पूर्वं तत्सोदर्यव्यपदेशस्यापर्याप्तिम्मन्योऽभूदिति द्योत्यते ॥

पदा—स इति । स लवणं हत्वा तदा आत्मानमिन्द्रजिद्वधशोभिनः भ्रातुः सोदर्यं मेने । तदा लवणवधानन्तरकाले । अनेन तस्मात् पूर्वं तत्सोदरव्यपदेशस्यापर्याप्तिम्मन्यता द्योत्यते । समानोदरे शयितस्सोदर्यः । "सोदराद्यत्" इति यत् । वीर इत्यनेन सोदरव्यपदेशयोग्यता उक्ता । महौजसः महात्मनः ॥

तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः ।
शुशुभे विक्रमोदग्रं व्रीडयावनतं शिरः ॥ २७ ॥

प्रका—तस्येति । विक्रमेति । विक्रमाभिमानेनोदग्रं प्रकृत्येत्यर्थः ॥

पदा—तस्येति । चरितार्थैस्तपस्विभिः संस्तूयमानस्य तस्य व्रीडया अवनतं शिरः शुशुभे । चरितार्थैः लवणवधात्कृतार्थैः । स्तुतौ लज्जया नतशिरस्कत्वं महाजनस्वभावः । विक्रमेण पराक्रमेण उदग्रमुन्नतम्, तादृशावस्थानिरूपणे तून्नतमेव तस्य शिर इति भावः ॥

उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः ।
निर्ममे निर्ममोऽर्थेषु मधुरां मधुराकृतिः ॥ २८ ॥

प्रका—उपकूलमिति । कालिन्द्या इति जलोपभोगसौकर्यं दुर्गत्वञ्चोक्तम् । पौरुषभूषण इति दुर्गविधानकर्मणः प्रतिघातासम्भव उक्तः । निर्ममे मधोः स्थाने पुरं निवेशितवानित्यर्थः । "देशाधिपतिं विनाश्य राजा पुरन्निवेशयेत्" इति वचनात् । अर्थेषु लवणवधादिषु निर्ममो निरहङ्कारः । निर्ममो मधुराकृतिरिति अभिगम्यताहेतुः ॥

पदा—उपकूलमिति । स कालिन्द्या उपकूलं मधुरां पुरीं निर्ममे । उपकूलमित्यव्ययीभावः । कालीन्दीकूलसमीप इत्यर्थः । अनेन जलोपभोगसौकर्यं जलदुर्गदुर्ग्रहत्वञ्चोक्तम् । मधुरेति नाम । निर्ममे निर्मितवान् । देशाधिपतिं विनाश्य राजा पुरं निवेशयेदिति हि नयविदो वदन्ति । पौरुषमेव भूषणं यस्य । अन्यथा कथं तादृशपुरनिर्माणोपपत्तिरिति भावः । अर्थेषु निर्ममः अर्थेषु लवणवधमुनिरक्षणादिरूपेषु निर्ममो निरहङ्कारः । मत्तः कोऽन्य इत्थं करोतीत्याद्यभिमानरहित इत्यर्थः । मधुराकृतिरित्यभिगम्यतागुण उक्तः ॥

या सौराज्यप्रकाशाभिर्बभौ पौरविभूतिभिः ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता ॥ २९ ॥

प्रका—येति । सौराज्येन सम्यक् पालनेन प्रकाशाभिः स्फुटाभिः । स्वर्गाभिष्यन्दवमनं स्वर्गातिरिक्तजनानयनम् । अत्र कौटिल्यः "भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेद्" इति ॥

पदा—येति । या सौराज्यप्रकाशाभिः पौरविभूतिभिः बभौ । सुराज्ञो भावस्सौराज्यम् । सम्यक् पालनमित्यर्थः । तेन प्रकाशाभिः स्फुटाभिः, तस्करादिभयाभावात्प्रकाशिताभिरित्यर्थः । पौराणां विभूतिभिः समृद्धिभिः । स्वर्गाभिष्यन्दवमनं कृत्वा निवेशिता इव । स्वर्गालोकाद्यदभिष्यन्दवमनमतिरिक्तजनानयनं तत् कृत्वा उपनिवेशिता स्थापितेव । स्वर्गे जनानां बहुत्वात्तत्रामान्तं जनमानीय स्थापितेवेत्यर्थः । अत्राभिष्यन्द-

शब्देन अतिरिक्तो जनो विवक्षितः । वमनशब्देनाहरणम् । तत्रस्थानां जनानां देवसाम्यं, तदनुभवस्य स्वर्गानुभवनश्चोत्प्रेक्षाहेतुः । "भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्" इति कौटिल्यः ॥

तत्र सौधगतः पश्यन् यमुनां चक्रवाकिनीम् ।
हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ॥ ३० ॥

प्रका—तत्रेति । हेमभक्तिमतीं कनकशलाकालङ्कृताम् । प्रवेणीं कबरीम् । पिप्रिये, "प्रीङ् प्रीतौ" इति धातुर्दिवादिषु ॥

पदा—तत्रेति । स तत्र चक्रवाकिनीं यमुनां पश्यन् पिप्रिये । पिप्रिये प्रीतो-भूत् । "प्रीङ् तर्पणे" इति दिवादिषु पठितो धातुः । भूमेः हेमभक्तिमतीं प्रवेणीम् इव । हेम्ना भक्तिर्भागेन विन्यासः तद्वतीं सुवर्णशलाकालङ्कृतामित्यर्थः । प्रवेणीं कबरीम् । "वेणी प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे" इति सिंहः । जलकार्ष्ण्यं चक्रवाकरक्तिमा चोत्प्रेक्षाहेतुः ॥

सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
सञ्चस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ३१ ॥

प्रका—सखेति । मन्त्रकृन्मन्त्रद्रष्टा मुनिरित्यर्थः । अनेन संस्कारप्रावीण्यं ध्वनति । उभयशब्देन दशरथजनकपरामर्शः । यथाविधि मुख्यकल्पेनेत्यर्थः ॥

पदा—सखेति । दशरथस्यापि जनकस्य च सखा मन्त्रकृदुभयप्रीत्या मैथिलेयौ यथाविधि सञ्चस्कार । मन्त्रकृन्मन्त्रद्रष्टा मुनिरित्यर्थः । उभयप्रीत्या दशरथजनकविषयया प्रीत्या । सञ्चस्कार जातकर्मादिसंस्कारं चकार ॥

स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशलवावेव चकार किल नामतः ॥ ३२ ॥

प्रका—स इति । कुशेन लवेन चोन्मृष्टो गर्भस्य क्लेदो रुधिरार्द्रता ययोः । कुशो दर्भः । लवः पावनं गवादिलोम । "धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम्"[1] इत्यस्य मनुवचनस्य व्याख्याने मेषादिलोमवाचकत्वमुक्तमित्यनुसन्धेयमिति दक्षिणावर्तः । लवा अपि तृणभेदा इति वल्लभः । न तु कुशलवशब्दे षष्ठीसमासः कर्तव्यः । प्रत्येकं कुशलवानामप्रसङ्गात् । तदाख्यया तयोराख्यया नामकरणे निमित्तभूतया । अत्राप्येवशब्दः पौनर्वचनिकः ॥

१ मनुस्मृतिः, अध्यायः 8, श्लोकः 151 ॥

पदा—स इति । स कविः कुशलवोन्मृष्टगर्भक्लेदौ तौ तदाख्यया नामतः कुशलवावेव चकार किल । स कविर्वाल्मीकिः । कुशेन दर्भेण लवेन गवादिलोम्ना च उन्मृष्टः शोधितो गर्भस्य क्लेदो रुधिरार्द्रता ययोः । तदाख्यया तयोः कुशलवयोरेवाख्यया नाम्ना । कुशोन्मृष्टगर्भक्लेदं कुशं, लवोन्मृष्टगर्भक्लेदन्तु लवमित्यर्थः । किलेतिह्ये ॥

साङ्गञ्च वेदमध्याप्य किञ्चिदुत्क्रान्तशैशवौ ।
स्वां कृतिं गापयामास कविप्रथमपद्धतिम् ॥ ३३ ॥

प्रका—साङ्गमिति । स तावित्यनुषङ्गः । कवीनां प्रथमां पद्धतिं मार्गम् । अयं वक्ष्यमाणप्रकरणोपक्षेपः । अत्रापूर्वः श्लोकः—रामस्य वृत्तं मधुरं गायन्तौ मातुरग्रतः । तद्वियोगव्यथां किञ्चिच्छिथिलीचक्रतुस्सुतौ । इति ॥

पदा—साङ्गमिति । स तावित्यनुषज्यते । स तौ साङ्गं वेदमध्याप्य स्वां कृतिं गापयामास । स्वां कृतिं श्रीरामायणम् । गापयामास गानं कारितवान् । किञ्चिदुत्क्रान्तमतिक्रान्तं शैशवं शिशुत्वं ययोः । "गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञः" इत्यादिवचनानुसारेणेत्यर्थः । कवीनां प्रथमां पद्धतिं मार्गम् । आदिकाव्यत्वात्तस्य ॥

रामस्य मधुरं वृत्तं गायन्तौ मातुरग्रतः ।
तद्वियोगव्यथां किञ्चिच्छिथिलीचक्रतुः सुतौ ॥ ३४ ॥

पदा—रामस्येति । सुतौ मातुरग्रतः रामस्य वृत्तं गायन्तौ तद्वियोगव्यथां किञ्चिच्छिथिलीचक्रतुः । मातुर्वियोगपीडां किमप्यपाचक्रतुः । भर्तृकथाश्रवणादिति भावः । मधुरं मनोहरम् ॥

इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः ।
तद्योगात्पतिवत्नीषु पत्नीष्वासन्द्विसूनवः ॥ ३५ ॥

प्रका—इतरेपीति । त्रेताग्नितेजसः अवन्ध्यवीर्या इत्यर्थः । तद्योगाद्रामसम्बन्धात् । महात्मनां कुले ज्येष्ठगुणाः कनिष्ठेष्वनुवर्तन्त इति भाव इति दक्षिणावर्तः । पतिव्रतासङ्गतेरिति वल्लभः । "पतिवत्नी सभर्तृका" इति सिंहः । पतिव्रतास्वित्यर्थः ॥

पदा—इतर इति । इतरे त्रयः रघोः वंश्याः अपि तद्योगात् पत्नीषु द्विसूनवः आसन् । तद्योगाद् रामस्य योगाद् भ्रातृत्वरूपात्सम्बन्धात् । द्वौ द्वौ सूनू येषाम् । इतरे

भरतादयोऽपि राघवाः पुत्रद्वयोपेतस्य राघवस्य भ्रातृत्वान्महात्मनां कुले ज्येष्ठगुणाः कनिष्ठेष्वनुवर्तन्ते इति न्यायाद्भार्यासु द्वौ द्वौ पुत्रावुत्पादयामासुरित्यर्थः । पतिवत्नीषु सभर्तृकासु । "पतिवत्नी सभर्तृका" इत्यमरः । पतिव्रतास्विति यावत् ॥

शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते ।
मधुराविदिशे सून्वोर्निदधे पूर्वजोत्सुकः ॥ ३६ ॥

प्रका—शत्रुघातिनीति । पूर्वजोत्सुकः तत्सकाशं गन्तुमुद्यतः ॥

पदा—शत्रुघातिनीति । शत्रुघ्नः शत्रुघातिनि सुबाहौ च सून्वोः मधुराविदिशे निदधे । सून्वोः पुत्रयोः । अधिकरणे सप्तमी चेयम् । मधुरां विदिशाञ्च नगरीं ताभ्यां ददावित्यर्थः । बहूनि श्रुतानि शास्त्राणि यस्य । पूर्वजे रामे । उत्सुकः सश्रद्धः । रामसकाशं गन्तुमुद्युक्त इति यावत् ॥

भूयस्तपोव्ययो माभूद्वाल्मीकेरिति सोऽत्यगात् ।
मैथिलीतनयोद्गीतनिःष्पन्दमृगमाश्रमम् ॥ ३७ ॥

प्रका—भूय इति । तपोव्ययः तपःप्रभावेन सातिशसपर्यासम्पादनाद्भवतीति । अत्यगात् परिहृतवान् ॥

पदा—भूय इति । स वाल्मीकेः भूयः तपोव्ययः मा भूदिति आश्रममत्यगात् । तपःप्रभावेन सपर्योपकरणसम्पादने पूर्वमिव पुनरपि तपोव्ययशङ्कया शत्रुघ्नो वाल्मीकेराश्रममतिक्रम्य ययावित्यर्थः । मैथिलीतनययोः कुशलवयोरुद्गीतेन उच्चैस्तरेण गीतेन गानेन निष्पन्दा निश्चला मृगा यस्मिन् । गानाकर्णनमपि न सञ्जातमिति भावः ॥

वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम् ।
लवणस्य वधात् पौरैरीक्षितो[1]ऽतिगौरवम् ॥ ३८ ॥

प्रका—वशीति । अनुरक्त इत्यर्थः । रथ्यासंस्कारो विजयिनः कुमारस्यागमनात् । अतिगौरवमिति क्रियाविशेषणम् ॥

पदा—वशीति । अयोध्यां विवेश च । वशी जितेन्द्रियः । अनुत्सिक्त इत्यर्थः । रथ्याया राजमार्गस्य संस्कारैः विजयिनः कुमारस्यागमनकालोचितैस्सम्मार्जना-

१ रीक्षितोऽत्यन्तगौरवम् ।

दिभिः शोभितुं शीलमस्येति तथा । लवणस्य वधात् पौरैरतिगौरवमीक्षितः । अतिगौरवमिति क्रियाविशेषणम् ॥

स ददर्श सभामध्ये सभासद्भिरुपस्थितम् ।
रामं सीतापरित्यागादसामान्यपतिं भुवः ॥ ३९ ॥

प्रका—स इति । सभासद्भिः मन्त्र्यादिभिः । उपस्थितं सेवितम् । अनेनागमनस्योचितसमयत्वमुक्तम् । उत्तरार्धेन रामस्य वियोगातुरत्वेऽपि जगत्पालनैकाग्र्यं द्योत्यते ॥

पदा—स इति । स सभामध्ये रामं ददर्श । सभासद्भिः सुमन्त्रादिभिः मन्त्रिभिः सामाजिकैश्च । उपस्थितं सेवितम् । अनेन दर्शनोचितकालत्वमुक्तम् । सीतापरित्यागाद्भुवोऽसामान्यपतिम् असाधारणं भर्तारम् । अनेन वियोगातुरत्वेऽपि जगत्पालनजागरूकत्वं द्योत्यते ॥

तमभ्यनन्दत्प्रणतं लवणान्तकमग्रजः ।
कालनेमिवधात्प्रीतस्तुराषाडिव शार्ङ्गिणम् ॥ ४० ॥

प्रका—तमिति । शार्ङ्गिणमुपेन्द्रम् ॥

पदा—तमिति । अग्रजः प्रणतं तं लवणान्तकम् अभ्यनन्दद् अभिनन्दितवान् । तुराषाड् कालनेमिवधात् प्रीतः शार्ङ्गिणमिव । कालनेमिर्नाम कश्चिन्महासुरः । तस्य वधात् प्रीतः सन् शार्ङ्गिणमुपेन्द्रमिव ॥

स पृष्टः सर्वतो वार्तमाचख्यौ न च सन्ततिम् ।
प्रख्यापयिष्यतः काले कवेराद्यस्य शासनात् ॥ ४१ ॥

प्रका—स इति । सर्वतो मार्गादौ । वार्तं कल्याणम् । चस्त्वर्थे । सन्ततिं कुशलवोत्पत्तिम् । काले अवसरविशेष इत्यर्थः । कवेराद्यस्य वाल्मीकेः ॥

पदा—स इति । पृष्टः स सर्वतः वार्तमाचख्यौ । सर्वतः सर्वस्मिन् मार्ग लवणवधादावित्यर्थः । वार्तं कल्याणम् । सन्ततिश्च न । चस्त्वर्थे । कुशलवोत्पत्तिन्तु नाचख्यौ । तत्र हेतुमाह—काले प्रख्यापयिष्यतः आद्यस्य कवेः शासनादिति । काले अवसरविशेषे, अश्वमेधप्रकरण इति यावत् । प्रख्यापयिष्यत इति लटश्शत्रादेशः । आद्यः कविर्वाल्मीकिः ॥

१ ख्यद्राज्ञे न ।

अथ जानपदो विप्रः शिशुमप्राप्तयौवनम् ।
अवतार्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः ॥ ४२ ॥

प्रका—प्रकरणान्तरमारभते—अथेति । कतिपयकालापगमे । अप्राप्तयौवनं यौवनात् प्रागेव मृतमित्यर्थः । अवतार्याङ्कशय्यास्थमुत्सङ्गशयनादवतार्येत्यर्थः । अत्रापूर्वः श्लोकः—शोचनीयासि वसुधे.......... । इति । वल्लभस्त्वमुं श्लोकं व्याख्याय विरलोऽस्य पाठ इत्युक्तवान् ॥

पदा—अथेति । अथ जानपदो विप्रः अप्राप्तयौवनमङ्कशय्यास्थं पुत्रं भूपतेर्द्वारि अवतार्य चक्रन्द । अथ कतिपयकालापगमानन्तरम् । जानपदो जनपदे भवः । अप्राप्तं यौवनं येन । बाल्ये एव मृतमित्यर्थः । अङ्के उत्सङ्गे एव शय्यायां स्थितम् । सद्य एव भूमौ शाययितुमसमर्थत्वात्क्रमेणैव तत्करणमित्यनेन द्योत्यते । चक्रन्द क्रन्दितवान् ॥

शोचनीयाऽसि वसुधे! या त्वं दशरथोद्धृता ।
रामहस्तमनुप्राप्ता कष्टात् कष्टतरं गता ॥ ४३ ॥

पदा—क्रन्दनप्रकारमाह—शोचनीयेति । वसुधे! त्वं शोचनीया असि । शोचनीया शोच्या । कुत इत्यत्राह—दशरथोद्धृता या त्वं रामहस्तमनुप्राप्ता इति । दशरथेन सम्यक्पालिता या त्वमिदानीमस्य दुरात्मनो हस्तं प्राप्तासि । अत एवाह—कष्टात्कष्टतरं गता इति । कष्टादपि कष्टतरम् । दशरथहस्तात् परिच्यवनं हि कष्टम् । सद्य एव दुष्टराजवशवर्तित्वन्तु कष्टतरमित्यर्थः ॥

श्रुत्वा तस्य शुचो हेतुं गोप्ता जिह्राय राघवः ।
न ह्यकालभवो मृत्युरिक्ष्वाकुकुलमस्पृशत् ॥ ४४ ॥

प्रका—श्रुत्वेति । शुचो हेतुं बालपुत्रमरणम् । गोप्तेति हेतुः । जिह्राय लज्जितवान् । न हीत्यादि काव्यलिङ्गम् । इक्ष्वाकूणां कुलं प्रकृतिमण्डलम् । पदमिति पाठे स्थानं, राष्ट्रमित्यर्थः ॥

पदा—श्रुत्वेति । राघवस्तस्य शुचः हेतुं श्रुत्वा जिह्राय लज्जितवान् । "ह्री लज्जायाम्" इति धातुः । रामस्तस्य दुःखहेतुभूतं पुत्रमरणं श्रुत्वा लज्जितवान् । तत्र हेतुर्गोप्तेति । रक्षाशैथिल्यं तत्र हेतुरिति चिन्तयित्वेत्यर्थः । अत एवाह—न हीति । अकालभवः मृत्युः इक्ष्वाकुकुलं न अस्पृशत् हि । इक्ष्वाकूणां कुलं प्रकृतिमण्डलम् । न हि मत्तः पूर्वमेवं जातमिति कुतो मे गोप्तृत्वम् । अत्र काव्यलिङ्गम् ॥

१ थाच्च्यु ।

स मुहूर्तं क्षमस्वेति द्विजमाश्वास्य दुःखितम् ।
यानं सस्मार कौबेरं वैवस्वतजिगीषया ॥ ४५ ॥

प्रका—स इति । आश्वास्य तद्वचनस्यार्थाव्यभिचारसम्प्रत्ययादित्यर्थः । दुःखितमित्याश्वासनीयत्वे हेतुः । अन्यथा त्वाश्वासनं विनैवार्थं कुर्यात् । यानं विमानम् ॥

पदा—स इति । स दुःखितं द्विजं मुहूर्तं क्षमस्व इति आश्वास्य वैवस्वतजिगीषया कौबेरं यानं सस्मार । वैवस्वतोऽन्तकः तस्य जिगीषा जेतुमिच्छा तया । कुबेरो वैश्रवणः तदीयं यानं विमानम् । 'तच्चात्मचिन्तासुलभं विमान'मित्युक्तत्वादिति भावः ॥

आत्तशस्त्रस्तदध्यास्य प्रतस्थे[1] च रघूद्वहः ।
उच्चचार पुरश्चा[2]स्य गूढरूपा सरस्वती ॥ ४६ ॥

प्रका—आत्तशस्त्र इति । गूढरूपा अदृष्टवक्तृशरीरा । प्रागवदेवात्र चशब्दः ॥

पदा—आत्तशस्त्र इति । रघूद्वहः आत्तशस्त्रस्तदध्यास्य प्रतस्थे च । अस्य पुरः गूढरूपा सरस्वती उच्चचार च । तद्विमानम् । अध्यास्याधिष्ठाय । अस्य रामस्य । पुरः अग्रे । गूढरूपा अदृष्टवक्तृशरीरा । उच्चचार उद्गता । च शब्दौ समुच्चयद्योतकौ ॥

राजन् प्रजासु ते कश्चिदपचारः प्रवर्तते ।
त्वं तमन्वीक्ष्य[3] शमयेर्भवितासि ततः कृती ॥ ४७ ॥

प्रका—राजन्निति । अपचारो धर्मव्यतिक्रमः । अन्वीक्ष्य अन्विष्य । ततः तेन । कृती कृतकृत्यः वैवस्वतं माभियासीरिति वाक्यशेषः ॥

पदा—राजन्निति । राजन्! ते प्रजासु कश्चिदपचारः प्रवर्तते । अपचारो वर्णव्यतिक्रमः । प्रवर्तते जायते । त्वं तमन्विष्य शमयेः । तं वर्णव्यतिक्रमम् । ततः त्वं कृती भवितासि । ततः तेन । कृती कृतकृत्यः । भवितासि भविष्यसि । किं वैवस्वसताभियानेनेति शेषः ॥

इत्याप्तवचनाद्रामो [4]विचेष्यन् वर्णविक्रियाम् ।
दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ ४८ ॥

प्रका—इतीति । वर्णविक्रियां वर्णानां ब्राह्मणादीनां व्यतिक्रमम् । पपातागच्छत् । पत्रेण वाहनेन ॥

पदा—इतीति । रामः इति आप्तवचनाद् वर्णविक्रियां विचेष्यन् पत्रेण दिशः पपात । आप्तवचनादाप्तवाक्यात् । वर्णानां ब्राह्मणादीनां विक्रियां व्यतिक्रमम् । वि-

१ स्थितः स । २ त । ३ विष्य । ४ ने ष

चेष्यन् अन्विष्यन् । पत्रेण वाहनेन । "पत्रं वाहनपक्षयोः" इति सिंहः । पपात अगच्छत् । वेगेन निष्कम्पो निश्चलः केतुर्ध्वजपटो यस्य ॥

अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम् ।
ददर्श कश्चिदैक्ष्वाकस्तपस्यन्तमधोमुखम् ॥ ४९ ॥

प्रका—अथेति । धूमेत्यधोगताग्नित्वमुक्तम् । शाखावलम्बनं पादेनेत्यवधेयम् । ऐक्ष्वाकः इक्ष्वाकुजनपदेषु भवः । "कोपधा"दणि कृते "दाण्डिनायन" इत्यादिना वकारलोपो निपात्यते ॥

पदा—अथेति । अथ ऐक्ष्वाकः वृक्षशाखावलम्बिनम् अधोमुखं तपस्यन्तं कश्चिद्ददर्श । ऐक्ष्वाकः इक्ष्वाकुजनपदेषु भवः "कोपधादणि" कृते "दाण्डिनायन" इत्यादिना उकारलोपो निपात्यते । वृक्षस्य शाखामवलम्बितुं शीलमस्येति तथा । पादेनेति शेषः । पादेन वृक्षशाखामवलम्ब्याधोमुखं तपस्यन्तमित्यर्थः । धूमेनाभिताम्रे आभीक्ष्ण्येन ताम्रे अक्षिणी यस्य । अनेनाऽधोगताग्नित्वमस्योक्तम् ॥

पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः ।
आत्मानं शम्बुकं नाम शूद्रं सुरपदार्थिनम् ॥ ५० ॥

प्रका—पृष्टेति । सुरपदं सुरत्वम् ॥

पदा—पृष्टेति । राज्ञा पृष्टनामान्वयः स आत्मानं शम्बुकं नाम शूद्रम् आचष्ट किल । शम्बुकं नामेति नामप्रश्नस्योत्तरम् । शूद्रमित्यन्वयप्रश्नस्य । धूमं पिबतीति धूमपः । धूमोऽन्नाहार इत्यर्थः । सुरपदार्थिनं स्वर्गार्थिनम् ॥

तपस्यनधिकारित्वात्प्रजानान्तमघावहम् ।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे ॥ ५१ ॥

प्रका—तपसीति । अघावहमनर्थावहम् । शीर्षच्छेदमर्हतीति "शीर्षच्छेदाद्यच्च" इति यत्प्रत्ययः ॥

पदा—तपसीति । नियन्ता तं शीर्षच्छेद्यं परिच्छिद्य शस्त्रम् आददे । नियन्ता शिक्षणाधिकृतः । शीर्षच्छेद्यं शिरश्छेदार्हम् । "शीर्षच्छेदाद्यच्च" इति यत्प्रत्ययः । परिच्छिद्य ऊहापोहादिभिर्निश्चित्य । शस्त्रमाददे । शिरश्छेदार्हत्वे हेतुमाह—तपसि अनधिकारित्वात्प्रजानामघावहमिति । स्वकुलनिषिद्धकर्मानुष्ठानात्प्रजानामनर्थावहम् । द्विजशुश्रूषामात्र एव हि शूद्राणामधिकारः ॥

स तद्वक्त्रं हिमक्लिष्टकिञ्जल्कमिव पङ्कजम् ।
ज्योतिष्कणाहतश्मश्रु कण्ठनालादपाहरत् ॥ ५२ ॥

प्रका—स इति । रामः । ज्योतिष्कणाहतश्मश्रुत्वमध्यधोगताग्नित्वात् । कण्ठनालादिति रूपकम् । पद्मोपमयाऽत्र तपस्तेजो दर्शितम् ॥

पदा—स इति । स तद्वक्त्रं कण्ठनालादपाहरत् । कण्ठादेव नालात् पद्मदण्डात् । अपाहरज्जहार । ज्योतिष्कणैरधोगतस्याग्नेस्तेजोलवैः आहतानि पीडितानि श्मश्रूणि यस्य । अत एवोपमिनोति—हिमक्लिष्टकिञ्जल्कं पङ्कजमिवेति । तुषारपरिपीडितकेसरं पद्ममिव ॥

धृतदण्डः स्वयं राज्ञा लेभे शूद्रः सतां गतिम् ।
तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥ ५३ ॥

प्रका—धृतेति । स्वयं न तु प्रयोज्यादिमुखेन । सतां गतिम् । अत्र मनुः "राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः । निर्मला स्वर्गमायान्ति" इति । तत्तपसः फलं किन्न स्यादित्याह—तपसेति । अत्र हेतुः स्वमार्गविलङ्घिनेति । स्वमार्गो हि शूद्रस्य शुश्रूषामात्रम् ॥

पदा—धृतेति । राज्ञा स्वयं धृतदण्डः शूद्रः सतां गतिं लेभे । राज्ञा स्वयं न तु तन्नियुक्तेन केनचित् । धृतो दण्डो वधो येन । सतां सज्जनानां गतिं स्वर्गम् । अत्र मनुः "राजभिः धृतदण्डास्तु कृत्वा पापानि मानवाः निर्मलास्स्वर्गमायान्ती"ति । ननु तस्य तप एवात्र साधनम्?, नेत्याह—तपसा नेति । ननु किं तपसस्स्वल्पत्वमत्र हेतुः?, नेत्याह—दुश्चरेणापीति । तपसस्साधनत्वाभावे हेतुमाह—स्वमार्गविलङ्घिनेति । स्वस्य शूद्रस्य मार्गं विलङ्घितुमतिक्रमितुं शीलमस्येति तथा । शूद्रस्य हि मार्गः शुश्रूषामात्रम् ॥

रघुनाथोऽप्यगस्त्येन मार्गसन्दर्शितात्मना ।
महौजसा संयुयुजे शरत्काल इवामलः[2] ॥ ५४ ॥

प्रका—रघुनाथ इति । दर्शितेति णिचा सांनिध्यकत्वं द्योत्यते । महौजसेत्यनुग्रहक्षमत्वमुक्तम् । शरत्काल इवेति । तत्र ह्यगस्त्योदयः । अमलः अपनीतप्रजापचारलक्षणमलः ॥

पदा—रघुनाथ इति । रघुनाथ अपि अगस्त्येन संयुयुजे संयुक्तोऽभूत् । शरत्काल इव । तत्र ह्यगस्त्योदयः । मार्गे सन्दर्शितः प्रकाशितः आत्मा येन । णिचा

१ कु । २ इवेन्दुना ।

तदनुग्रहयित्वं द्योत्यते । महौजसा अनुग्रहसमर्थेनेत्यर्थः । अमलः निर्मलः, निरस्तसमस्तधर्मव्यतिक्रममल इत्यर्थः । शरदि त्वमलत्वं प्रसिद्धम् ॥

कुम्भयोनिरलङ्कारं तस्मै दिव्यपरिग्रहम्[1] ।
ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम् ॥५५॥

प्रका—अभिसन्धिं प्रकटयति—कुम्भेति । अलङ्कारं कटकम् । दिव्यात् परिग्रहो यस्य । तस्य ह्यसौ आत्ममांसाशिना शापजक्षुत्पिपासानिवृत्तये स्वर्गवासिना श्वेतेन राज्ञा दत्तः । आत्मनो निष्क्रयं मोचनवेतनम् । एवमुत्प्रेक्षया च तस्यातिलोकत्वं ध्वन्यते ॥

पदा—अनुग्रहप्रकारमाह—कुम्भयोनिरिति । कुम्भयोनिस्तस्मै अलङ्कारं ददौ । कुम्भयोनिरगस्त्यः । अलङ्कारोऽत्रार्थात्कटकम् । दिव्यात्स्वर्गवासिनः सकाशात्प्रतिग्रह आदानं यस्य । दिव्यपरिग्रहमिति पाठेऽप्ययमेवार्थः । "पत्नीपरिजनादानमूलशापाः परिग्रहः" इत्यमरः । दानाभावजनितेन दोषेण स्वमांसभोजिना क्षुत्पिपासार्दितेन श्वेतेन राज्ञा तन्निवृत्तये दत्तमित्यर्थः । पीतेन समुद्रेण आत्मनिष्क्रयं दत्तमिव । आत्मनो निष्क्रयं मोचनवेतनम् । अगस्त्येन समुद्रे पीते सत्यात्ममोचनार्थं तेन दत्तमिवेत्यर्थः । अस्य लोकोत्तरत्वमुत्प्रेक्षया द्योत्यते । रत्नाकरो हि समुद्रः ॥

राजा श्वेत इति ख्यातो विदर्भाधिपतिर्महान् ।
तपसा घोररूपेण ब्रह्मलोकमुपागमत् ॥१॥

क्षुत्पिपासार्दितश्चाभूत्तत्राऽपि स नराधिपः ।
ततश्च प्राञ्जलिर्भूत्वा ब्रह्माणं वाक्यमब्रवीत् ॥२॥

सेवन्तेऽप्सरसां सङ्घाः समन्तान्मां सहस्रशः ।
भगवन् कर्मणा केन क्षुत्पिपासार्दितोऽस्म्यहम् ॥३॥

आहारः कश्च मे देव! ब्रूहि सर्वं पितामह!
निराहाराय रोचन्ते नैव ह्यन्यानि कान्यपि ॥४॥

अथोवाच सुरज्येष्ठः प्रश्रयावनतं नृपम् ।
पात्रे न भवता दत्तं धनधान्यादि किञ्चन ॥५॥

शरीरमात्रं भवतो भवता पोषितं धनैः ।
तस्मात्तदेव ते सम्प्रत्याहारोऽपि भविष्यति ॥६॥

[1] प्रति ।

नानुसं पच्यते क्वापि नापक्कञ्चोपयुज्यते ।
यच्चे तपोवनोपान्ते वर्तते सुमहत्सरः ॥ ७ ॥

तत्राद्याप्यविशीर्णन्तद्वर्तते च कळेबरम् ।
तदेव भक्षयानन्तं मधुरं मधुसन्निभम् ॥ ८ ॥

वर्तस्वैवं प्रभो! यावत्कुम्भसम्भवदर्शनम् ।
स तु त्वां तारयेत्क्षिप्रं कृच्छ्रादस्मात्कृपानिधिः ॥ ९ ॥

अन्नदानस्य माहात्म्यात्तदा प्रभृति पार्थिवः ।
स्वं शवं भक्षयामास ब्रह्मलोकगतोऽपि सन् ॥ १० ॥

गते महति काले तु सोऽपि दृष्टस्तपोधनः ।
तस्मै तु कटके दत्ते ननाशाशु शवं स्वयम् ॥ ११ ॥

तपसा विजिते सुरालये रममाणः सुरसुन्दरीजनैः ।
अमृतं प्रपिबन्यथारुचि त्रिदिवप्राप्तिफलं नृपो ययौ । ॥ १२ ॥

इति रामायणप्रसिद्धायाः कथायास्सङ्क्षेपः ॥

तं दधन्मैथिलीकण्ठनिर्व्यापारेण बाहुना ।
पश्चान्निववृते रामः प्राक् परासुर्द्विजात्मजः ॥ ५६ ॥

प्रका—तमिति । निर्व्यापारेणालिङ्गनशून्येन । अनेन मुनिगौरवं धारणे हेतुतया द्योत्यते । निववृते पुरीमिति शेषः । मृतस्तु द्विजपुत्रः प्रागेव निववृते प्रत्युज्जीवितोऽभूत् ॥

पदा—तमिति । रामः बाहुना तं दधत् पश्चान्निववृते । परासुर्द्विजात्मजः प्राक् । तमलङ्कारम् । निववृते निवृत्तोऽभूत् । पुरीमिति शेषः । मृतस्तु द्विजकुमारो रामगमनात्पूर्वमेव निववृते प्रत्युज्जीवितोऽभूत् । शूद्रवधानन्तरमेवेति भावः । मैथिल्याः कण्ठे निर्व्यापारेण व्यापारशून्येन । व्यापारोऽर्थादालिङ्गनम् । अनेन मुनिगौरवादेवाभरणधारणमिति द्योत्यते ॥

तस्य पूर्वकृतां निन्दां द्विजः पुत्रसमन्वितः ।
स्तुत्या निवर्तयामास त्रातुर्वैवस्वतादपि ॥ ५७ ॥

१ वौंदि ।

**प्रका**—तस्येति । निन्दां निन्दापराधम् । त्रातुर्वैवस्वतादपीति स्तुतिप्रकारस्य दिङ्मात्रं दर्शितम् ॥

**पदा**—तस्येति । द्विजः तस्य पूर्वकृतां निन्दां स्तुत्या निवर्तयामास । निन्दां निन्दापराधम् । पुत्रसमन्वितः पुत्रोपेतः । स्तुतिमेव दिङ्मात्रेणाह—वैवस्वतादपि त्रातुरिति । वैवस्वतोऽन्तकः । कोऽन्य एवं रक्षतीति भावः ॥

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः ।
मेघाः सस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥ ५८ ॥

**प्रका**—तमिति । सस्यमिवेति अखिलोपजीव्यसमृद्धिकरत्वं ध्वनितम् ॥

**पदा**—तमिति । रक्षःकपिनरेश्वराः अध्वराय मुक्ताश्वं तमुपायनैरभ्यवर्षन् । रक्षांसि कपयो नरेश्वराश्च । अध्वराय अर्थादश्वमेधाय । विभीषणादयः करं ददुरित्यर्थः । मेघाः अम्भोभिः सस्यमिव । उपमया रामस्याखिलोपजीव्यसमृद्धिकरत्वं ध्वनितम् ॥

दिग्भ्यो निमन्त्रिताश्चैनमभिजग्मुर्महर्षयः ।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्यपि ॥ ५९ ॥

**प्रका**—दिग्भ्य इति । निमन्त्रिता आहूताः । भौमानि भूमिभवानि । धिष्ण्यानि गृहाणि । ज्योतिर्मयानि दिव्यानीत्यर्थः । न केवलं भौमेभ्यः स्थानेभ्योंऽशरूपैर्मुनयो मरीच्यादय आजग्मुः, अपि तु दिव्येभ्योंऽशिरूपैरपीत्यर्थः ॥

**पदा**—दिग्भ्य इति । निमन्त्रिता महर्षयः भौमानि धिष्ण्यान्येव न, ज्योतिर्मयान्यपि हित्वा दिग्भ्य एनमभिजग्मुः च । निमन्त्रिता आहूताः । भौमानि भूमिभवानि । धिष्ण्यानि गृहाणि । ज्योतिर्मयानि तेजोमयानि दिव्यानीत्यर्थः । हित्वा परित्यज्य । मरीच्यादयो मुनयो न केवलं भूभागवर्तिभिः स्वांशभूतैः शरीरैः श्रीराममभिजग्मुः, अपि तु सप्तर्षिस्थानवर्तिभिरंशिभूतैश्शरीरैरपीत्यर्थः ॥

उपशल्यनिविष्टैस्तैश्चतुर्द्वारमुखी बभौ ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः ॥ ६० ॥

**प्रका**—उपशल्येति । "ग्रामान्त उपशल्यं स्यात्" इति सिंहः । ग्रामशब्दश्चात्र उपलक्षणं नगरादेरपि । अन्तःशब्दश्चान्तिकपर्यायः । निविष्टैः कल्पितावासैः । तैर्मुनिराक्षसवानरनरनाथैः । चतुर्द्वाराण्येव मुखानि यस्याः । सद्यस्तदानीम् । सर्गविशेषणञ्चैतत् ॥

पदा—उपशल्येति । अयोध्या उपशल्यनिविष्टैस्तैर्बभौ । "ग्रामान्त उपशल्यं स्यात्" इति सिंहः । ग्रामशब्दश्चात्र नगरादेरप्युपलक्षणम् । अन्तश्शब्दश्चान्तिकपर्यायः । तत्र निविष्टैः कल्पितावासैः । तैः मुनिराक्षसवानरनरनाथैः । सद्यः सृष्टलोका पैतामही तनुः इव । सद्यः तदानीमेव सृष्टा लोका यया । पितामहो ब्रह्मा तत्सम्बन्धिनी तनुः शरीरम् । यथा ब्रह्मणः शरीरं जगत्सृष्ट्यनन्तरं तदुचितदेशप्राप्तैः पूर्वं तैः शोभते तथेत्युपमा । चत्वारि द्वाराण्येव मुखानि यस्याः ॥

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेरासीद्यत्सैव जाया हिरण्मयी ॥ ६१ ॥

प्रका—श्लाघ्य इति । त्यागः यस्सर्वस्यापि कुलवधूजनस्याश्लाघ्यः । "प्राग्वंशः प्राग्घविर्गेहात्" इति सिंहः । अविद्यमाना अन्या जाया यस्य सोऽनन्यजानिः । "जायाया निङ्" । सैव हिरण्मयी जायासीदित्यन्वयः । दक्षिणावर्तस्तु रामस्य यज्ञे सीताप्रतिकृतिसखत्ववचनं तस्याः सम्भावनार्थमेव । परमशिष्टस्य तु तस्य पत्न्यन्तरसखस्यैवाश्वमेध इति सिद्धान्तः । यथाहुराचार्याः—"यस्तु पिण्डं पितुः पाणौ विज्ञातेऽपि न दत्तवान् शास्त्रार्थातिक्रमाद्धीनः सोऽपत्नीकः कथं यजेद्" इति ॥

पदा—श्लाघ्य इति । वैदेह्याः त्यागः अपि श्लाघ्यः आदरणीयः । आसीदिति शेषः । अन्यासामश्लाघ्योऽपीत्यपिशब्दार्थः । तत्र हेतुः पत्युरित्यादि । प्राग्वंशवासिनः अनन्यजानेः पत्युः सा एव हिरण्मयी जाया आसीत् यत् । "प्राग्वंशः प्राग्घविर्गेहाद्" इत्यमरः । देवयजनात् प्राचीनदेशवर्तिन इत्यर्थः । अन्या जाया यस्य नास्ति सोऽनन्यजानिः । "जायाया निङ्" । हिरण्मयी स्वर्णमयी ॥

विधेरधिकसम्भारस्ततः प्रववृते मखः ।
आसन्यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः ॥ ६२ ॥

प्रका—विधेरिति । विधिश्चोदना । रक्षिण आसन्नित्यन्वयः ॥

पदा—विधेरिति । ततः मखः प्रववृते । मखः प्रवृत्तोऽभूत् । विधेरधिकसम्भारः । विधिश्चोदना । सम्भार उपकरणम् । शास्त्रविहितेभ्य उपकरणेभ्य अतिरिक्तोपकरण इत्यर्थः । यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः आसन् । क्रियाया विघ्ना विघ्नकारिणः ॥

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३ ॥

१ भार्या ।

प्रका—अथैतत्प्रसङ्गेन पूर्वोपक्षिप्तप्रकरणान्तरमारभते—अथेति। प्राचेतसोपज्ञं वाल्मीकिकृतप्रथमारम्भम्। इतस्ततस्समाजेषु। गुरुर्वाल्मीकिः॥

पदा—अथेति। अथ मैथिलेयौ कुशलवौ प्राचेतसोपज्ञं रामायणमितस्ततः जगतुः। प्राचेतसो वाल्मीकिः तेन कृतप्रथमारम्भम्। "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्"। इतस्ततस्समाजेषु। गुरुर्वाल्मीकिः तेन चोदितौ नियुक्तौ। प्रख्यापयिष्यतः काले इति यदुक्तं स एष काल इति भावः॥

वृत्तं रामस्य, वाल्मीकेः कृतिस्तौ किन्नरस्वरौ[1]।
किन्तद्येन मनो हर्तुमलं स्यातान्न शृण्वताम् ॥ ६४॥

प्रका—वृत्तमिति। रामस्येति प्रख्यातोदात्तत्वमुक्तम्। वाल्मीकेरिति सहजसरस्वतीपरिस्पन्दसुन्दरत्वमुक्तम्। तौ किन्नरस्वराविति पाठधर्माः। येनेति गुणराहित्येन। अलं स्याताम्। तेन गानेनेति शेषः॥

पदा—वृत्तमिति। रामस्य वृत्तं प्रख्यातोदात्तस्य रामस्य चरितम्। वाल्मीकेः कृतिः। सहजसरस्वतीविलासो हि सः। तौ किन्नरस्वरौ। तौ कुमारौ किन्नराणां स्वर इव स्वरो ययोः। अनेन वक्तृगुणा उक्ताः। येन शृण्वतां मनः हर्तुं मलं न स्यातां तत् किम्। गायन्तौ तौ कुशलवौ येन गुणवैकल्येन शृण्वतां जनानां चेतो हर्तुं पर्याप्तौ न भवेतां, तत् किम्। न किमपीत्यर्थः। नायकगुणस्य कविगुणस्य गायकगुणस्य च सम्पूर्णत्वादिति भावः॥

रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितः।
ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ६५॥

प्रका—रूप इति। रूपे माधुर्यं ददर्श, गीते माधुर्यं शुश्राव चेत्यर्थः। तज्ज्ञैस्तद्रूपगीतवेदिभिः। निवेदितः। प्रागेवेति शेषः। कुतूहली निवेदनेन जातकुतूहलः। तथा दर्शनश्रवणसमयेऽप्यनुपशान्तकुतूहलः॥

पदा—रूप इति। तयोः रूपे गीते च माधुर्यं तज्ज्ञैर्निवेदितः रामः सानुजः ददर्श शुश्राव च। ते रूपगीते जानन्तीति तज्ज्ञाः। रूपे माधुर्यं ददर्श, गीते माधुर्यं शुश्राव चेत्यर्थः। कुतूहली निवेदनसमयादारभ्य कदाचिदप्यनुपक्षीणकुतूहल इत्यर्थः॥

तद्गीतश्रवणैकाग्रा संसदश्रु[2]मुखी बभौ।
हिमनिष्यन्दिनी प्रातर्निवातेव वनस्थली ॥ ६६॥

१ नौ। २ आस्र।

प्रका—तद्गीतेति । एकाग्रा निश्चलेत्यर्थः । संसत्समाजः । अश्रु आनन्दजम् । उपमयालैकस्याप्यतथाभावाभावं द्योतयति ॥

पदा—तद्गीतेति । तद्गीतश्रवणैकाग्रा संसद् आस्रमुखी बभौ । तयोर्गीतस्य श्रवणेन एकाग्रा निश्चलेत्यर्थः । संसत्समाजः । आस्रं हर्षाश्रु मुखे यस्याः । प्रातः हिम-निष्यन्दिनी निवाता वनस्थली इव । प्रातः प्रभाते हिमानान्निष्यन्दः प्रवाहोऽस्त्यस्मिन्निति तथा । निवाता वातरहिता । समाजवर्तिनां सर्वेषामपि निश्चलत्वमास्रमुखत्वञ्चोपमया ध्वन्यते ॥

वयोवेषविसंवादि रामस्य च तयोश्च सा ।
जनताप्रेक्ष्य[1] सादृश्यं [2]वीक्षापन्ना व्यतिष्ठत ॥ ६७ ॥

प्रका—वय इति । वयोवेषाभ्यामेव विसंवादि वैसादृश्यवत् । वीक्षामापन्ना । द्वितीयाश्रितेत्यादिना समासः विचारपदवीं प्राप्तेत्यर्थः । नाक्षिकम्पमिति पाठे विस्मयाद-निमेषमित्यर्थः ॥

पदा—वय इति । सा जनता रामस्य च तयोश्च सादृश्यं प्रेक्ष्य नाक्षिकम्पं व्यतिष्ठत । अक्षिकम्पो निमेषः तद्रहितन्नाक्षिकम्पं विस्मयादनिमेषमित्यर्थः । व्यतिष्ठत तस्थौ । वयसा वेषेण च विसंवादि वैसादृश्यवदित्यर्थः । वेषो मौञ्जीकृष्णाजिनादिधा-रणं कटकमकुटादिधारणञ्च । वयोवेषाभ्यामेव रामादनयोः भेद इत्यर्थः ॥

उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये ।
नृपतेः प्रीतिदायेषु वीतस्पृहतया यथा ॥ ६८ ॥

प्रका—उभयोरिति । प्रीत्या दायः प्रीतिदायः । दीयत इति दायो धनम् ॥

पदा—उभयोरिति । लोकः उभयोः प्रावीण्येन तथा न विसिष्मिये । प्रावी-ण्येन कुशलतया । विसिष्मिये विस्मितोऽभूत् । नृपतेः प्रीतिदायेषु वीतस्पृहतया यथा । दीयत इति दायो धनम् । प्रीत्या दायः प्रीतिदायः । वीता विगता स्पृहा श्रद्धा ययोः । राजदत्तेषु मणिसुवर्णादिषु निरपेक्षत्वाद्यथा तयोर्जनानां विस्मयोऽभूत्, गानप्रावीण्येन सभाऽकम्पादिभिश्च तथा नेत्यर्थः ॥

गेये केन विनीतौ वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ६९ ॥

१ ताऽवेक्ष्य । २ नाक्षिकम्पम् । ३ ने । कवेः कृतिः ।

प्रका—गेय इति। विनीतौ शिक्षितौ। वां युवाम्। विनीतमिति विनीतिरिति च पाठयोर्भावपरत्वे वां युवयोरित्यर्थः। स्वयमित्यादरः। अशंसताम् उपाध्यायं कर्तारञ्चेत्यर्थः॥

पदा—गेय इति। गेये वां केन विनीतौ। गेये गाने। वां युवामित्यर्थः। विनीतौ शिक्षितौ। गेये केन विनीतिर्वामिति पाठे विनीतिर्विनयः। वां युवयोः। गेये विनीतिः केन कृतेत्यर्थः। "उभयप्राप्तौ कर्मणि" इति नियमात् केनेत्यत्र षष्ठ्यभावः। विनीतमिति पाठे विनीतं विनयः। योजना तु पूर्ववदेव। इयं कस्य कवेः कृतिः च। कवेरित्यत्र निश्चयो जातः। तन्नाम श्रोतुमिच्छामीत्यर्थः। राज्ञा स्वयमिति पृष्टौ तौ वाल्मीकिमशंसताम्। स्वयमित्यादरातिशयः। वाल्मीकिमेव कर्तारञ्चोपाध्यायञ्चाशंसतां कथयामासतुः॥

अथ सावरजो रामः प्राचेतसमुपेयिवान्।
दूरीकृत्यात्मनो देहं[1] राज्यमस्मै न्यवेदयत् ॥ ७० ॥

प्रका—अथेति। दूरीकृत्य वर्जयित्वा। देहस्य यज्ञपरायत्तत्वादिति भावः। ऊरीकृत्येति पाठे "विस्तारेऽङ्गीकृतावूरी उररी चे"ति हलायुधः। देहमात्रमात्मनः स्वीकृत्यास्मै राज्यं निष्क्रयमदादित्यर्थः॥

पदा—अथेति। अथ सावरजः रामः प्राचेतसमुपेयिवान्। प्राचेतसो वाल्मीकिः। उपेयिवान् प्राप्तोऽभूत्। आत्मनः देहमूरीकृत्य राज्यमस्मै न्यवेदयत्। ऊरीकृत्य अङ्गीकृत्य। "विस्तारेऽङ्गीकृतावूरी उररी चे"ति हलायुधः। देहमात्रमात्मनः स्वीकृत्य राज्यमस्मै काव्यनिष्क्रयमदादित्यर्थः॥

स तावाख्याय रामस्य[2] मैथिलेयौ तदात्मजौ[3]।
कविः कारुणिको वव्रे सीतायाः सम्परिग्रहम् ॥ ७१ ॥

प्रका—स इति। मैथिलेयौ तवात्मजावित्याख्यायेत्यर्थः। कारुणिकः सीतादशादर्शनदूनहृदय इत्यर्थः। वव्रे प्रार्थयत। आस्तान्तवैव राज्यं, सीता तु गृह्यतामिति॥

पदा—स इति। सः कविः तौ मैथिलेयौ तवात्मजौ रामस्याख्याय सीतायाः सम्परिग्रहं वव्रे। इतिशब्दोऽर्थाद्द्रष्टव्यः। रामस्येति सम्बन्धषष्ठी। सम्यक् परिग्रहः सम्परिग्रहः। सम्यक्त्वञ्च पुनरपि वियोगाभावः। एतौ मैथिलेयौ तवात्मजाविति रामस-

१ ऊ। २ माय। ३ तदा।

मन्धेनाख्याय सीतायाः परिग्रहं नत्वे प्रार्थयामास। राज्यं रक्षितुस्तवैवास्तु, सीता तु परिगृह्यतामिति। कारुणिकः सीताविषयया करुणया खिन्नहृदय इत्यर्थः॥

तात शुद्धा समक्षन्नः स्नुषा ते जातवेदसि।
दौरात्म्याद्रक्षसस्तान्तु नात्रत्याः श्रद्दधुः प्रजाः ॥ ७२ ॥

प्रका—रामस्य प्रतिवचनमाह—तातेति। रक्षसो दौरात्म्यादिति प्रजानां दुर्दुरुटत्वदोषं परिहरति। अत्रत्या इति वैदूर्यमप्यश्रद्धाहेतुत्वेन द्योतयति। श्रद्दधुः विशश्वसुः॥

पदा—रामस्य प्रतिवचनमाह—तातेति। तात ते स्नुषा नः समक्षं जातवेदसि शुद्धा। दशरथसख्यात्तातेति वचनम्। अत एव स्नुषा पुत्रभार्या नः अस्माकं समक्षं प्रत्यक्षम्। क्रियाविशेषणमिदम्। तर्हि किमर्थं त्यक्तेत्यत्राह—अत्रत्याः प्रजाः तु रक्षसः दौरात्म्यात्तान्न श्रद्दधुरिति। अत्रत्याः अत्र वर्तमानाः। दूरत्वं विश्वासाभावे हेतुरिति भावः। रक्षसो राक्षसस्य दौरात्म्याद्दौष्ट्यात्। प्रजानान्नात्र दोष इति भावः। श्रद्दधुर्विशश्वसुः। प्रजानामेवात्राविश्वासः नास्माकमित्यर्थः॥

सा स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ७३ ॥

प्रका—तत्किमिच्छसीत्याह—सेति। प्रत्याययतु बोधयतु। ण्यन्तादिण इदं रूपम्। इणश्शपथविश्वासयोरर्थयोरन्यतराश्रयणे "णौ गमिरबोधने" इति गम्यादेशप्रसङ्ग इत्यवधेयम्। लोकमुद्दिश्य सा स्वचारित्रं प्रकाशयत्वित्यर्थः। अथवा "अय गतौ" इति धातोरिदं रूपम्। स्वचारित्रमुद्दिश्य सा प्रत्याययतु शपथं विश्वासं वा करोत्वित्यर्थः। पुत्रवतीं पुत्राभ्यां सहेत्यर्थः। प्रतिपत्स्ये अङ्गीकरिष्ये॥

पदा—तर्हि किमत्र कर्तव्यमित्याह—सेति। सा मैथिली स्वचारित्रमुद्दिश्य प्रत्याययतु। प्रत्ययं विश्वासं करोतु। "अय वय गतौ" इति धातोरिदं रूपम्। ततः पुत्रवतीमेनान्त्वदाज्ञया प्रतिपत्स्ये। ततः अनन्तरं पुत्रवतीं पुत्राभ्यां सहेत्यर्थः। प्रतिपत्स्ये अङ्गीकरिष्ये॥

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥ ७४ ॥

प्रका—इतीति। नीवह्योः कर्मसंज्ञानिषेधाच्छिष्यैरिति तृतीया। आनाययामास स्वावासमिति शेषः। स्वसिद्धिमपवर्गादिरूपाम्। नियमैः शौचादिभिः। उपमया विश्वमहनीयत्वादि ध्वन्यते॥

पदा—इतीति । राज्ञा इति प्रतिश्रुते मुनिः जानकीमाश्रमाच्छिष्यैरानाययामास प्रापयामास । स्ववासमिति शेषः । स्वसिद्धिं नियमैरिव । सिद्धिमपवर्गादिरूपाम् । नियमैश्शौचादिभिः । "नियमाश्शौचसन्तोषतप अदय" इति यादवः ॥

अन्येद्युरथ काकुत्स्थः सन्निपात्य पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ७५ ॥

प्रका—अन्येद्युरिति । प्रस्तुतप्रतिपत्तये प्रतिश्रुतकरणाय ॥

पदा—अन्येद्युरिति । काकुत्स्थः । अन्येद्युः पुरौकसः सन्निपात्य प्रस्तुतप्रतिपत्तये कविमाह्वाययामास । अन्येद्युरपरेद्युः । पुरौकसः पौरान् । सन्निपात्य समवेतान् कृत्वा । प्रस्तुतस्य प्रतिज्ञातस्य प्रतिपत्तये प्रवृत्तये करणायेत्यर्थः । आह्वाययामास आह्वानं कारयामास । आनिनायेत्यर्थः । भ्रातृभिरिति शेषः ॥

स्वरसंस्कारवत्[1]येव पुत्राभ्यां स[2]ह सीतया ।
ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः ॥ ७६ ॥

प्रका—स्वरेति । पुत्राभ्यामित्युपलक्षणे तृतीया । अथ पुत्राभ्यामुपलक्षितया तदा स्वरसंस्काराभ्यामुपेतया ऋचा इव दृश्यमानया सीतया सह मुनिः सूर्यमिव उदर्चिषं राममुपस्थितः सङ्गत इत्यर्थः । स्वर उदात्तादिः । संस्कारो निरपभ्रंशोच्चारणम् । उदर्चिषमित्युदयावस्था सूर्यस्य द्योत्यते । अत एवोपस्थानयोग्यतापि । उपस्थानञ्च स्तुतिः । अत्र वाक्ययोर्थोपमायामेकेनैवेवशब्देन भवितव्यम् । प्रत्युपमानपदार्थं वा बहुभिः । न तु द्वाभ्यामिति दोषदर्शी । वल्लभस्तु पुत्राभ्यां हेतुभूताभ्यां स्वरसंस्कारवत्येव सीतयेति व्याचष्ट । तदसत् । यत उत्प्रेक्ष्यमाणेन स्वरसंस्कारवत्त्वेन नातिशयः कश्चित्सीतायाः । स्वरसंस्कारवत्या ऋचा सादृश्यमिवशब्देन द्योत्यते प्रथमेन । द्वितीयेन तु रामस्य सूर्यसादृश्यम् । स्वरसंस्कारयोस्तु पुत्रोपमानयोरपि तद्धितवृत्तितिरोभूतत्वादिवशब्दसम्बन्धो न घटत इति न बह्विवशब्दप्रयोगः ॥

पदा—स्वरेति । मुनिः पुत्राभ्यां सह स्वरसंस्कारवत्या ऋचा इव सीतया उदर्चिषं सूर्यमिव राममुपस्थितः । स्वरा उदात्तादयः संस्कारः शब्दसाधुत्वं, निरपभ्रंशोच्चारणमित्यर्थः । उदर्चिषमूर्ध्वगतार्चिषम् । अनेनोदयावस्था सूर्ये द्योत्यते । अत एवोपस्थानयोग्यतापि । उपस्थितः सङ्गतोऽभूत् ॥

१ त्यासौ । २ मथ ।

काषायपरिवीतेन स्वपदार्पितचक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७ ॥

प्रका—काषायेति । परिवीतेन परिहितेन । शान्तेन प्रशमवता ॥

पदा—काषायेति । सा शान्तेन वपुषा एव शुद्धा इति अन्वमीयत । शान्तेन शमप्रधानेन । अन्वमीयत अनुमिताभूत् । जनैरिति शेषः । शान्तत्वमेवाह—काषायेत्यादिना । कषायेण रक्तं काषायं तेन परिवीतेन आच्छादितेन काषायवस्त्रावृतेनेत्यर्थः । स्वस्य पदे एवार्पिते चक्षुषी नयने ॥

जनास्तदालोकपथात्प्रतिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखास्सर्वे फलिता इव शालयः ॥ ७८ ॥

प्रका—जना इति । प्रतिसंहृतं निवर्तितम् ॥

पदा—जना इति । जनाः तदालोकपथात्प्रतिसंहृतचक्षुषः अवाङ्मुखाः तस्थुः । तस्या आलोकपथाद्दर्शनमार्गात्प्रतिसंहृतं निवर्तितं चक्षुर्यैः । अवाङ्मुखा अधोमुखाः । फलिताः शालय इव । उपमया सर्वेषामपि युगपदधोमुखत्वं ध्वन्यते ॥

तां दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः ।
"कुरु निस्संशयं वत्से! स्ववृत्ते लोक"मित्यशात् ॥ ७९ ॥

प्रका—तामिति । भर्तुर्दृष्टिविषये लोकं निस्संशयं कुर्वित्यन्वयः । अशात् । शास्तेस्तिपो हल्ङ्यादिलोपः । "झलां जशोऽन्ते" इति सस्य जश्त्वे, चर्त्वम् ॥

पदा—तामिति । मुनिः आस्थितविष्टरः वत्से! त्वं भर्तुर्दृष्टिविषये स्ववृत्ते लोकं निस्संशयं कुरु इति अशात् । आस्थितविष्टरः विष्टरमधिष्ठायेत्यर्थः । स्ववृत्त इति विषयसप्तमी । अशात् शासितवान् । शास्तेस्तिपो हल्ङ्यादिलोपः । "झलां जशोऽन्त" इति जश्त्वम् ॥

अथ वाल्मीकिशिष्येण पुण्यमावर्जितं पयः ।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ ८० ॥

प्रका—अथेति । सत्यामवितथाम् ॥

पदा—अथेति । अथ सीता वाल्मीकिशिष्येण आवर्जितं पय आचम्य सत्यां सरस्वतीमुदीरयामास । आवर्जितमानीतम् । आचम्य स्त्रीजनोचितमाचमनं कृत्वा । सत्यामवितथाम् । पुण्यं तीर्थेभ्यस्समाहृतम् ॥

* 6

वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वम्भरे! देवि! मामन्तर्धातुमर्हसि ॥ ८१ ॥

**प्रका**—वाङ्मन इति । व्यभिचारो द्रोहः । यथाशब्दः पदार्थानतिवृत्तौ । तथा तेन सत्येन । निर्वेदादियमुक्तिः ॥

**पदा**—वाङ्मन इति । मे वाङ्मनःकर्मभिः पत्यौ व्यभिचारः न यथा, तथा विश्वम्भरे देवि त्वं मामन्तर्धातुमर्हसि । पत्याविति विषयसप्तमी । व्यभिचारो द्रोहः, वञ्चनमिति यावत् । यथाशब्दः पदार्थानतिवृत्तौ । तथा तेन सत्येन । निर्वेदादियमुक्तिः ॥

एवमुक्ते तया साध्व्या रन्ध्रात्सद्योभवाद्भुवः ।
शातहूदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥ ८२ ॥

**प्रका**—एवमिति । साध्व्येति । कथमेवं न स्यादिति भावः । शातहूदं वैद्युतम् ॥

**पदा**—एवमिति । साध्व्या तया एवमुक्ते भुवः सद्योभवाद्रन्ध्रात्प्रभामण्डमुद्ययौ । साध्व्या पतिव्रतया । तदभिहितं कथमन्यथा स्यादिति भावः । शातहूदं ज्योतिरिव । शतहूदा विद्युत्तत्सम्बन्धि । उत्प्रेक्षया ज्योतिषो दुर्निरीक्षत्वं द्योत्यते ॥

तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी ।
समुद्रवसना साक्षा[१] प्रादुरासीद्वसुन्धरा ॥ ८३ ॥

**प्रका**—तत्रेति । प्रभामण्डले । भगवत्या भुवो विग्रहावलम्बने तत्प्रभावात्समुद्रस्यैव वसनताप्राप्तिरित्यवसेयम् । साक्षा अपत्यस्नेहात् । वसुन्धरेति । लिङ्गैरनुमितयथास्वरूपेत्यर्थः ॥

**पदा**—तत्रेति । तत्र वसुन्धरा प्रादुरासीत् । तत्र प्रभामण्डले । लिङ्गैरनुमितत्वाद्वसुन्धरेत्युक्तम् । नागस्यानन्तस्य फणैरुत्क्षिप्ते सिंहासने निषेदुषी अवस्थिता । समुद्रा एव वसनं यस्याः । विग्रहावलम्बे हि वसनेन भवितव्यम् । साक्षा अपत्यदुःखानुसन्धानादिति भावः ॥

सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम् ।
मा मेति व्याहरत्येव तस्मिन् पातालमभ्यगात् ॥ ८४ ॥

१ देवी ।

प्रका—सेति। भर्तृप्रणिहितेक्षणामिति "जननान्तरेऽपि त्वमेव भर्ते"ति यदुक्तम्, तदनुसन्धानं द्योतयति। तस्मिन् रामे॥

पदा—सेति। सा सीतामङ्कमारोप्य तस्मिन् मा मा इति व्याहरत्येव पाताळमभ्यगात्। तस्मिन् रामे। भर्तरि प्रणिहिते निहिते ईक्षणे यया। अनेन "यथा मे जननान्तरेऽपि त्वमेव भर्ता" इति यदुक्तं तस्यानुसन्धानन्द्योतयति॥

धरायां तस्य संरंभं सीताप्रत्यर्पणैषिणः।
गुरुर्विधिबलापेक्षी शमयामास धन्विनः ॥ ८५ ॥

प्रका—धरायामिति। संरंभं रोषम्। गुरुर्वसिष्ठः वाल्मीकिर्वा। विधिबलापेक्षी बलवान् विधिः, किमत्र क्रियते, नायं पौरुषस्य तेऽवसरः इत्युपन्यस्येत्यर्थः। धन्वी धनुर्धरः व्रीह्यादित्वादिनिः॥

पदा—धरायामिति। गुरुः तस्य धरायां संरम्भं शमयामास। गुरुर्वसिष्ठो वाल्मीकिर्वा। संरम्भं क्रोधम। सीताप्रत्यर्पणैषिणः सीताप्रत्यर्पणेच्छोः। विधिबलमपेक्षितुं शीलमस्येति तथा। बलवान् विधिर्नायन्तत्र पौरुषस्यावसरः, पौरुषाणां विधिबलसापेक्षत्वादित्याद्युपन्यस्येत्यर्थः। धन्विनः। धनुश्शब्दाद्व्रीह्यादित्वादिनिः॥

ऋषीन् विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान्।
रामः सीतागतं स्नेहं विदधे तदपत्ययोः ॥ ८६ ॥

प्रका—ऋषीनिति। पुरस्कृतान् पूजितान्। सीतेत्यादि। तत्प्रसूताविति द्विगुणस्नेहोऽभूदित्यर्थः॥

पदा—ऋषीनिति। रामः यज्ञान्ते ऋषीन् सुहृदश्च विसृज्य सीतागतं स्नेहं तदपत्ययोर्विदधे। तस्यास्सीताया अपत्ययोः पुत्रयोः। कुशलवयोरुपरि द्विगुणस्नेहोऽभूदित्यर्थः। पुरस्कृतान् पूजितान्। उभयविशेषणमिदम्। ऋषिसुहृदो यथार्हं पूजयित्वेत्यर्थः॥

युधाजितश्च सन्देशात्स देशं सिन्धुकूलजम्।
[2]जेतुं सपुत्राय ददौ भरताय धृतप्रजः ॥ ८७ ॥

प्रका—युधाजित इति। केकयपतेः। सिन्धुकूलजं देशं गान्धारविषयम्। जेतुं जित्वा आत्मसात्कुर्विति सपुत्राय पुत्रयोस्ते राज्यमस्त्वित्युक्त्वेत्यर्थः। धृतप्रजः स-

१ नामकम्। २ ददौ दत्तप्र वाय। ३ भृ।

न्तानवृद्धिकरः। सिन्धुनामकमिति क्वचित्पाठः। सिद्धमात्मकमिति, दत्तप्रभावायेति च पाठे आत्मकं सिद्धमपि देशं भरताय गन्धर्वाक्रान्तत्वाज्जेतुं ददावित्यर्थः। अन्यथा स्ववाचकं स्यात्। दत्तः प्रभावो यस्मै। प्रभुशक्तिं दत्त्वेत्यर्थः। "स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्" इति सिंहः॥

पदा—युधाजित इति। स युधाजितः सन्देशात्सिन्धुनामकं देशं भरताय ददौ। युधाजित् केकयाधिपतिर्भरतमातुलः। तस्य सन्देशान्नियोगात्। सिन्धुनामकं युधाजितो राज्यं प्रबलतरगन्धर्वाक्रान्तमभूत्। ततस्ताञ्जेतुमसमर्थस्य युधाजितो नियोगाद्रामस्तज्जयसमर्थाय भरताय ददावित्यर्थः। दत्तः प्रभावः प्रभुशक्तिर्यस्मै। प्रभुशक्तिं दत्त्वेत्यर्थः। "स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्" इत्यमरः। धृता प्रजा सन्ततिर्येन। सन्तानवृद्धिकर इत्यर्थः। इत्थं सति सन्तानवृद्धिर्भविष्यतीति मत्वेति यावत्॥

भरतस्तत्र गन्धर्वान्युधि निर्जित्य केवलम्।
आतोद्यं ग्राहयामास समत्याजयदायुधम् ॥८८॥

प्रका—भरत इति। युधि प्रकाशयुद्धेनेत्यर्थः। केवलमद्वितीयम्। आतोद्यं वीणादि॥

पदा—भरत इति। भरतः तत्र युधि गन्धर्वान् निर्जित्य केवलमातोद्यं ग्राहयामास। केवलमद्वितीयम्। आतोद्यं वीणादि तद्ग्रहणमात्रतत्परांश्चकारेत्यर्थः। केवलशब्दं विवृणोति—आयुधं समत्याजयदिति॥

स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः।
अभिषिच्याभिषेकार्हौ रामान्तिकमगात्पुनः ॥८९॥

प्रका—स इति। तदाख्ययोस्तक्षशिलायां पुष्कलावत्यां च। अभिषेकार्हौ राजगुणसम्पन्नौ॥

पदा—स इति। स तक्षपुष्कलौ पुत्रौ तदाख्ययो राजधान्योरभिषिच्य पुना रामान्तिकमगात्। स भरतः। तयोरेवाख्या नाम ययोस्ते तदाख्ये। तक्षशिलायां पुष्कलावत्यां चेत्यर्थः। अभिषेकार्हौ सकलराजगुणसम्पन्नावित्यर्थः॥

अङ्गदश्चन्द्रकेतुश्च लक्ष्मणोऽप्यात्मसम्भवौ।
शासनाद्रघुनाथस्य चक्रे कारापथेश्वरौ ॥९०॥

प्रका—अङ्गदमिति। कारापथो नाम जनपदः। काकपथेति वा पाठः॥

१ ता

पदा—अङ्गदमिति । लक्ष्मणः अपि अङ्गदश्चन्द्रकेतुश्च आत्मसम्भवौ रघुनाथस्य शासनात्तारापथेश्वरौ चक्रे । न केवलं भरतशत्रुघ्नौ, लक्ष्मणोऽपि रामशासनात् पुत्रौ तारापथविषयाधिपती चकार ॥

इति[1] रोपितपुत्रास्ते जननीनां जनेश्वराः ।
भर्तृलोकप्रपन्नानां[2] निवापान्विदधुः क्रमात् ॥९१॥

प्रका—इतीति । रोपिताः स्थापिताः । भर्तृलोकेति । साध्वीनां भर्तृसालोक्यस्यागमसिद्धत्वात् । निवापाञ्छ्राद्धान् ॥

पदा—इतीति । इति रोपितपुत्राः ते जनेश्वराः भर्तृलोकं प्रपन्नानां जननीनां निवापान् क्रमाद्विदधुः । इति पूर्वोक्तप्रकारेण । रोपिताः स्थापिताः पुत्राः यैः । जनेश्वराः लोकपालनजागरूका राजानः । निवापान् श्राद्धान् । क्रमात् शास्त्रोक्तक्रमेणैवेत्यर्थः ॥

उपेत्य मुनिवेषोऽथ कालः प्रोवाच राघवम् ।
रहस्संवादिनौ पश्येदावां यस्तं त्यजेरिति ॥९२॥

प्रका—अथ सम्पादितसमग्रलोकतन्त्रस्य विभोः स्वधामप्राप्तिं वर्णयितुमुपक्रमते—उपेत्येति । रहःसंवादिनौ विविक्ते सम्भाषमाणौ । त्यजेः हन्या इत्यर्थः ॥

पदा—अथ कृतकृत्यस्य भगवतः स्वरूपप्राप्तिं वर्णयितुमुपक्रमते—उपेत्येति । अथ कालः मुनिवेषः उपेत्य राघवं प्रोवाच । कालोऽन्तकः । मुनेर्वेष इव वेषो यस्य । कथमुवाचेत्यत्राह—यः रहःसंवादिनौ आवां पश्येत्तं त्यजेः इतीति । रहस्संवादिनौ रहसि सम्भाषमाणावित्यर्थः ॥

तथेति प्रतिपन्नाय विवृतात्मा नृपाय सः ।
आचख्यौ दिवमध्यास्स्व शासनात्परमेष्ठिनः ॥९३॥

प्रका—तथेति । प्रतिपन्नाय अङ्गीकृतवते । विवृतात्मा कालोऽहमित्युक्त्वा । परमेष्ठिनो ब्रह्मणः । इतिशब्दोऽध्याहर्तव्यः ॥

पदा—तथेति । स तथा इति प्रतिपन्नाय नृपाय विवृतात्मा आचख्यौ । प्रतिपन्नाय अङ्गीकृतवते त्वदुक्तं सर्वं तथैवेत्युक्तवत इत्यर्थः । विवृतः प्रकाशितः आत्मा

१ स्वारो । २ कं

स्वरूपं येन । कालोऽहमित्यभिप्रायेत्यर्थः । आचख्यौ उवाच । किमुवाचेत्यत्राह—दिवमिति । त्वं परमेष्ठिनः शासनाद्दिवमध्यास्स्व । परमेष्ठिनः ब्रह्मणः शासनान्नियोगात् । शरीरिणामायुर्नियामको ब्रह्मा, अहन्तु तन्नियोगकारीत्यर्थः ॥

विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणोऽभिनत् ।
भीतो दुर्वाससः शापाद्रामसन्दर्शनार्थिनः ॥ ९४ ॥

प्रका—विद्वानिति । जानन् । द्वाःस्थो द्वारि नियुक्तः । समयं रहःसंवादिनावित्यादिनोक्तम् । अभिनद् आत्मन उपगमनेन ॥

पदा—विद्वानिति । द्वाःस्थः लक्ष्मणः विद्वानपि तयोस्समयमभिनत् । द्वास्थः द्वारि नियुक्तः विद्वान् जानन्नपि तयोः कालरामयोः समयं संविदं रहस्संवादिनौ पश्येदित्यन्नोक्तमित्यर्थः । अभिनद् बिभेद । आत्मन उपगमनेनेति शेषः । समयस्वरूपविदुषस्तस्य कथमेवं प्रवृत्तिः? अत आह—दुर्वाससः शापाद्भीत इति । शापशङ्कायां हेतुमाह—रामसन्दर्शनार्थिनः दुर्वाससः प्रवेशारम्भे तस्मात् पूर्वमेव स्वयं प्रविश्येत्यर्थः ॥

स गत्वा सरयूतीरं देहत्यागेन योगवित् ।
चकाराऽवितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः ॥ ९५ ॥

प्रका—स इति । लक्ष्मणः । योगविद् योगेन त्यक्तशरीर इत्यर्थः ॥

पदा—स इति । स सरयूतीरं गत्वा देहत्यागेन पूर्वजन्मनः भ्रातुः प्रतिज्ञामवितथां चकार । स लक्ष्मणः । शरीरत्यागो हि वध इति भावः । योगविद्योगाभ्यासेन त्यक्तशरीर इत्यर्थः ॥

तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि ।
राघवः शिथिलन्तस्थौ भुवि धर्मस्त्रिपादिव ॥ ९६ ॥

प्रका—तस्मिन्निति । आत्मचतुर्भागे । चतुर्थो भागश्चतुर्भागः । सङ्ख्याशब्दस्त्वंशवाचिना समस्यमानः पूरणप्रत्ययं विनापि तमेवार्थं ब्रवीतीत्यनुसन्धेयम् । यथा "त्रिभागशेषासु" इति कुमारसम्भवे । शतांशः सहस्रांश इति दर्शनात् । अधितस्थुषि अधिष्ठानादित्यर्थः । अननुभूतभ्रातृविरहदूयमानो रामो देवरहस्यञ्चोपलभ्य स्वधामप्राप्तिं प्रति त्वरितो भूलोकतन्त्रे शिथिलोद्यमस्तस्थौ यथा धर्मस्त्रेतायान्त्रिभिः पादैः शिथिलन्तिष्ठति तथेत्यर्थः ॥

पदा—तस्मिन्निति । तस्मिन्नात्मचतुर्भागे प्राक् नाकमधितस्थुषि राघवः भुवि शिथिलन्तस्थौ । आत्मनश्चतुर्भागे । चतुर्थभागे । सङ्ख्यावाचिनश्शब्दा अंशवाचिशब्देन समस्यमानाः पूरणप्रत्ययं विनापि तमेवार्थमभिदधति । शतांशस्सहस्रांश इत्यादिप्रयोगदर्शनात् । उक्तञ्च कुमारसम्भवे "त्रिभागशेषासु निशासु" इति । तस्मिन् लक्ष्मणे । शिथिलं मन्दोद्यमम् । इतः पूर्वं कदाचिदप्यननुभूतभ्रातृवियोगो रामः परमेष्ठिनस्सन्देशमप्यनुसन्दधानः स्वपदप्राप्तये पर्युत्सुको भूभारोद्धरणे मन्दोद्यमस्तस्थावित्यर्थः । धर्मः त्रिपादिव यथा त्रेतायां धर्मस्त्रिपादत्वाच्छिथिलं तिष्ठति तथेत्यर्थः ॥

सन्निवेश्य कुशावत्यां रिपुनागाङ्कुशङ्कुशम् ।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥९७॥

ततः प्रतस्थे स्थिरधीस्सानुजोऽग्निपुरस्सरः ।
अन्वितः पतिवात्सल्याद्गृहवर्जमयोध्यया ॥९८॥

प्रका—सन्निवेश्येति । रिपुनागाङ्कुशमित्यधृष्यगुणा उक्ताः । सतामित्यादि तु आभिगामिकगुणानामुपलक्षणम् । श्रावत्यां चेति वा पाठः । तत इति सन्दानितवाक्यादौ योज्यम् । शिथिलावस्थानन्तरमित्यर्थः । उदगिति वा पाठः । स्थिरा धीर्व्यवसायो यस्य । सानुजः । तथाध्यवसितैरनुजैस्सह । अन्वितोऽनुगतः । गृहाणां वर्जः परिहारो यत्रेति क्रियाविशेषणम् । वृजेर्धातोर्भावे घञ् । इदं क्त्वार्थे णमुलन्तमिति न भ्रमितव्यम् । णमुलधिकारे वृजेरदर्शनात् ॥

पदा—सन्निवेश्येति । अत्र स इति कर्तृपदमध्याहर्तव्यम् । स कुशं कुशावत्यां, लवं श्रावत्याञ्च सन्निवेश्य सानुजः उदक् प्रतस्थे । उदङ्मुखः प्रस्थितवान् । रिपूणामेव नागानाम् अङ्कुशम् । अनेनाधृष्यतागुण उक्तः । सूक्तैः सतां जनिताश्रुलवं शोभनैरुक्तैरुक्तिभिर्जनिताः कारिताः आस्रलवाः हर्षाश्रुबिन्दवो येन । अभिगम्यगुणानामुपलक्षणञ्चैतत् । इदन्तु विशेषणद्वयं विशेष्यद्वयेऽपि योजनीयम् । स्थिरा धीर्व्यवसायो यस्य । अग्निरग्निहोत्राग्निः पुरस्सरो यस्य पतिवात्सल्यादयोध्यया गृहवर्जमन्वितः । अयोध्यया अयोध्यावासिना जनेन । गृहाणां वर्जः परिहारो यत्रेति क्रियाविशेषणम् । वृजेर्धातोर्भावे घञ् । न तु क्त्वार्थे णमुलन्तम् । णमुलधिकारे वृजेरदर्शनात् ॥

जगृहुस्तस्य वृत्तज्ञाः[1] पदवीं हरिराक्षसाः ।
कदम्बमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः ॥९९॥

१ चित्त ।

प्रका—जगृहुरिति । तमनुजग्मुरित्यर्थः । तस्य वृत्तज्ञाः तद्वृत्तान्तं विदित्वेत्यर्थः । कदम्बेति । स्वामिविरहशोकाश्रुभिर्निवेद्यमानामित्यर्थः ॥

पदा—जगृहुरिति । हरिराक्षसाः तस्य वृत्तज्ञाः पदवीं जगृहुः । वानरराक्षसाश्च तस्य वृत्तान्तं विदित्वा तमनुजग्मुरित्यर्थः । कदम्बमुकुळस्थूलैः प्रजाश्रुभिः अभिवृष्टाम् । कदम्बो वृक्षविशेषः । तस्य मुकुळवत् स्थूलैः प्रजानामश्रुभिः । स्वामिविरहशोकोद्भवैरिति शेषः । अभिवृष्टां सिक्ताम्, अश्रुसेकेन निवेद्यमानामित्यर्थः । अत्र कदम्बमुकुळोपमानेनाश्रूणामविच्छेदप्रसरो ध्वन्यते ॥

उपस्थितविमानेन तेन भक्तानुकम्पिना ।
चक्रे त्रिदिवनिःश्रेणिस्सरयूरनुयायिनाम् ॥ १०० ॥

प्रका—उपस्थितेति । मानुषभावमुत्सृज्य विमानारूढेनेत्यर्थः । सरयूस्त्रिदिवनिःश्रेणिश्चक्र इति । पौरादीन् सरयूविगाहनेन त्यक्तशरीरांस्त्रिदिवमनयदित्यर्थः । निश्रेणिरारोहणयन्त्रम् ॥

पदा—उपस्थितेति । उपस्थितविमानेन भक्तानुकम्पिना तेन सरयूः अनुयायिनां त्रिदिवनिःश्रेणिः चक्रे । निश्श्रेणिरारोहणयन्त्रम् । मानुषभावमुत्सृज्य विमानमारूढेन भक्तानुग्रहशीलेन तेन भगवता सर्वेषामपि स्वानुयायिवर्गाणां सरयूविगाहमात्रं स्वर्गप्राप्तिसाधनतया विहितमित्यर्थः ॥

यद्गो प्रतरकल्पोऽभूत्सम्मर्दस्तत्र मज्जताम् ।
अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥ १०१ ॥

प्रका—यदिति । गोप्रतरकल्प इति । गवामवतरणेऽन्योन्याग्रगमनाय यस्सम्मर्दस्तत्सदृश इत्यर्थः । मज्जतामनुगमनौत्सुक्येन । तदाख्यया गोप्रतर इत्याख्यया । भुवि पप्रथे विख्यातम् ॥

पदा—यदिति । तत्र मज्जतां गोप्रतरकल्पः सम्मर्दः अभूद् यद् अतः तीर्थं तदाख्यया भुवि पप्रथे । गोप्रतरेण सदृशो गोप्रतरकल्पः । गवां प्रतरो गोप्रतरः । प्रतरोऽवतरणम् । गवामवतरणेऽन्योन्याग्रगमनाय यस्सम्मर्दस्तत्सदृश इत्यर्थः । सम्मर्दः सम्बाधः । तीर्थमवतरणमार्गः, तदाख्यया गोप्रतराख्यया । पप्रथे ख्यातमभूत् । पावनं विशेषतश्शुद्धिकरम् ॥

स विभुर्विबुधांशेषु प्रतिपन्नात्ममूर्तिषु ।
त्रिदशीभूतपौराणां स्वर्गान्तरमकल्पयत् ॥ १०२ ॥

प्रका—स इति । विबुधांशेषु सुग्रीवादिषु । मूर्तिरंशिरूपम् । स्वर्गान्तरं सम्मर्दो माभूदिति ॥

पदा—स इति । स विभुः विबुधांशेषु प्रतिपन्नात्ममूर्तिषु त्रिदशीभूतपौराणां स्वर्गान्तरमकल्पयत् । विबुधानां सूर्यादीनाम् अंशेषु सुग्रीवादिषु । प्रतिपन्नाः प्राप्ताः आत्मनो मूर्तयो यैः तेषु सूर्यादिसायुज्यमुपगतेष्वित्यर्थः । त्रिदशत्वं प्राप्तेभ्यः पौरेभ्यः स्वर्गान्तरं कल्पितवान् । तत्र सम्मर्दो माभूदिति विचिन्त्येति शेषः ॥

निर्वर्त्यैवं दशमुखशिरश्छेदि कार्यं सुराणां
विष्वक्सेनः स्वतनुमविशत्सर्वलोकप्रतिष्ठाम् ।
लङ्कानाथं पवनतनयञ्चोभयं स्थापयित्वा
कीर्तिस्तम्भद्वयमिव गिरौ दक्षिणे चोत्तरे च ॥ १०३ ॥

प्रका—भगवच्चरितमनुवादेनोपसंहरति—निर्वर्त्येति । एवमिति षट्सर्गीप्रतिपादितप्रकारेण । दशमुखशिरश्छेदि तत्प्रधानम् । प्रतिष्ठामास्पदम् । दक्षिणे त्रिकूटे । उत्तरे हिमवति गन्धमादने वा । कीर्तिस्तम्भद्वयमिवेति । अमरत्वदानेन यावत्कल्पमात्मकीर्तिप्रथकौ कृत्वेत्यर्थः ॥

इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां पञ्चदशः सर्गः ॥

पदा—भगवच्चरितमुपसंहरति । निर्वर्त्येति । विष्वक्सेनः एवं सुराणां कार्यं निर्वर्त्य लङ्कानाथं पवनतनयञ्च कीर्तिस्तम्भद्वयमिव दक्षिणे उत्तरे च गिरौ स्थापयित्वा स्वतनुमविशत् । "विष्वक्सेनो जनार्दन" इत्यमरः । एवं षट्सर्गोक्तप्रकारेण । लङ्कानाथो विभीषणः । कीर्तिस्तम्भद्वयमिवेत्युपमया तयोरमरत्वदानं यावत्कल्पमात्मकीर्तिप्रकथनकौतुकञ्च भगवतो ध्वन्यते । दक्षिणो गिरिस्त्रिकूटः । उत्तरो हिमवान् गन्धमादनो वा । दशमुखशिरश्छेदस्य एवंशब्दान्तर्भावेपि पुनर्वचनन्तस्य प्राधान्यद्योतनार्थम् । सप्तानां लोकानां प्रतिष्ठामास्पदम् । "प्रतिष्ठा कृत्यमास्पदम्" इत्यमरः ॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ रघुवंशव्याख्यायां
पदार्थदीपिकायां पञ्चदशः सर्गः ॥

---

# षोडशः सर्गः ।

अथेतरे सप्त रघुप्रवीरा ज्येष्ठं पुरोजन्मतया गुणैश्च ।
चक्रुः कुशं रत्नविशेषभाजं सौभ्रात्रमेषां हि कुलानुसारि ॥ १ ॥

प्रका—अथ तदूर्ध्वं वंशप्रवृत्तिं दर्शयितुमुपक्रमते—अथेति । इतरे लवतक्षपुष्कलाङ्गदचन्द्रकेतुशत्रुघातिसुबाहवः । सप्तेति न्यूनाधिकसङ्ख्याव्यवच्छेदार्थम् । सप्तापीत्यर्थः । ज्येष्ठमतिशस्तम् । "त्रिषु ज्येष्ठोऽतिशस्तेऽपी"ति सिंहः । रत्नविशेषभाजं राजार्हेषु स्वामिनम् । सौभ्रात्रं, युवादित्वादण् ॥

पदा—अथ तदूर्ध्वं वंशपरम्परां वर्णयितुमुपक्रमते—अथेति । अथ इतरे सप्त रघुप्रवीराः कुशं रत्नविशेषभाजं चक्रुः । इतरे लवतक्षपुष्कलाङ्गदचन्द्रकेतुशत्रुघातिसुबाहवः । नैकस्य तत्र विमतिरिति दर्शयितुं सप्तेत्युक्तम् । सप्तापीत्यर्थः । रत्नविशेषं राजार्हद्रव्यं भजत इति तथा । पुरोजन्मतया गुणैश्च ज्येष्ठमतिशस्तम् । "त्रिषु ज्येष्ठोतिशस्तेपी" इत्यमरः । एषां सौभ्रात्रं कुलानुसारि हि । सुभ्रातृभावं सौभ्रात्रम् । युवादित्वादण् । न हि रघूणां कुले भ्रातॄणां कुत्रापि परस्परविरोध इति भावः । अत्रार्थान्तरन्यासः ॥

ते सेतुवार्तागजबन्धमुख्यैरभ्युच्चिताः[1] कर्मभिरप्यवन्ध्यैः ।
अन्योन्यदेशप्रविभागसीमां वेलां समुद्रा इव न व्यतीयुः ॥ २ ॥

प्रका—त इति । सेतुर्जलासेधः । वार्ता कृष्यादिः । गजबन्धो हस्तिवनकर्म । अत्र कामन्दकः—"कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरधनादानं शून्यानाञ्च निवेशनम् । अष्टवर्गमिमं साधु स्वस्थवृत्तोऽपि वर्धयेत्" इति । अभ्युच्चिताः सम्पन्नशक्तयः । अभ्युच्छ्रिता इति पाठे अपि स एवार्थः । अभ्युत्थिता इति पाठे सोद्यमाः । अवन्ध्यैः दैवपौरुषयोगात्फलपर्यन्तैः । सीमाम् । "डाबुभाभ्यामन्यतरस्याम्" ॥

पदा—त इति । ते सेतुवार्तागजबन्धमुख्यैरवन्ध्यैः कर्मभिरभ्युच्छ्रिता अपि अन्योन्यदेशप्रविभागसीमां न व्यतीयुः, सेतुर्जलासेधः, वार्ता कृष्यादिः, गजबन्धो हस्तिवनकर्म, सेतुवार्तागजबन्धप्रमुखैरित्यर्थः । अत्र कामन्दकः "कृषिर्वणिक्पथो दुर्गं सेतुकुञ्जरबन्धनम् । खन्याकरवनादानं शून्यानाञ्च निवेशनम् अष्टवर्गमिदं साधु स्वस्थवृत्तो विवर्धयेत्" इति । अवन्ध्यैः दैवपौरुषयोगात्फलपर्यन्तैः । अभ्युच्छ्रितास्सम्पन्नशक्तयः ।

[1] अ्युच्छ्रिताः ।

अन्योन्यस्य यो देशप्रविभागः तस्य सीमां मर्यादाम् । "डाबुभाभ्यामन्यतरस्या"मिति डाप् । न व्यतीयुः नातिक्रम्य जग्मुः । समुद्रः वेलामिव । न हि समुद्रास्समन्ततः समागतैस्सरिज्जलैरभ्युच्छ्रिता अपि वेलामतिक्रामन्ति ॥

चतुर्भुजांशप्रभवस्स तेषां दानप्रवृत्तेरनुपारतानाम् ।
सुरद्विपानामिव सामयोनिर्भिन्नोऽष्टधा विप्रससार वंशः ॥ ३ ॥

प्रका—चतुर्भुजेति । दानशब्दः श्लिष्टः । सुरद्विपा दिग्गजा ऐरावतादयोऽष्टौ ॥

पदा—चतुर्भुजेति । तेषां चतुर्भुजांशप्रभवस्स वंशः अष्टधा भिन्नः विप्रससार । तेषां कुशादीनाम् । चतुर्भुजो हरिः तस्यांशेभ्यः प्रभव उद्भवो यस्य । विप्रससार प्रसृतोऽभूत् । पुत्रपौत्रपरम्परया ववृध इत्यर्थः । सुरद्विपानां सामयोनिः इव । वंश इत्यनुषङ्गः । सुरद्विपा ऐरावतादयोऽष्टौ दिग्गजाः । सामवेदान्मतङ्गजास्सम्भूताः । अत्र पालकाप्यः "सूर्यस्याण्डकपालेऽथ समानीय प्रजापतिः । हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत । गायतो ब्रह्मणस्तस्य समुत्पेतुर्मतङ्गजा" इति । यथाष्टानां सुरद्विपानां वंशोऽष्टधा प्रसृतस्तथा कुशादीनामित्यर्थः । दानप्रवृत्तेरनुपारतानामिति । अर्थिजनवाञ्छापूरणान्मदजलप्रवृत्तेश्च कचिदप्यनिवृत्तानाम् ॥

अथार्धरात्रे स्तिमितप्रदीपे शय्यागृहे सुप्तजने विबुद्धः ।
कुशः प्रवासस्थकलत्रवेषामदृष्टपूर्वां वनितामपश्यत् ॥ ४ ॥

प्रका—तत्र कुशचरितं वर्णयति—अथेति । अर्धरात्र इति कालस्य जनसम्पातायोग्यत्वेन, स्तिमितप्रदीप इति गृहस्यानिवृतद्वारत्वेन, शय्यागृह इति तस्यासंविदितजनागोचरत्वेन च तद्दर्शनस्यासम्भावितत्वं ध्वन्यते । रात्रेरर्धमर्धरात्रः । "अर्धं नपुंसकम्" इति समासः । "अहःसर्वैकदेश" इति समासान्तः । असम्भावितत्वेन च या स्वप्नशङ्का तन्निरासायाह—विबुद्धः । अत्रापि विशब्देन विपर्यासशङ्कां निरस्यति । देशकालविशेषाभ्यां सुप्तपरिजनत्वेन च अभिगन्त्री सा विविक्ते कार्यवेदनार्थिनीति गम्यते । ततश्चास्य कार्यवितर्कः । प्रवासस्थकलत्रवेषामिति सम्बन्धवितर्कहेतुः । प्रवासस्थः प्रोषितः तस्य कळत्रं भार्या तस्येव वेषो यस्याः । अनेनानुकम्पनीयत्वमपि व्यज्यते । अदृष्टपूर्वामिति स्वरूपवितर्कहेतुः । स च त्रिविधो वितर्कः का त्वमित्यादिना प्रकाशयिष्यते । वनितामित्यनौचित्यशङ्काया बीजम् । सा च वशिनामित्यादिना प्रकाशयिष्यते ॥

पदा—तत्र कुशचरितमेव वर्णयति—अथेति अथ कुशः अर्धरात्रे शय्यागृहे अदृष्टपूर्वां वनितामपश्यत् । रात्रेरर्धमर्धरात्रः । "अर्धं नपुंसकम्" इति समासः । "अहःसर्वैकदेश" इत्यादिना समासान्तः । अदृष्टपूर्वां पूर्वमदृष्टाम् । स्तिमितः प्रदीपो यस्मिन् । अनेन शय्यागृहस्याविवृतद्वारत्वं द्योत्यते । सुप्ता जना यस्मिन्नित्यर्धरात्रविशेषणम् । अनेन तदानीं जनसञ्चारयोग्यता निरस्ता । प्रकर्षेण बुद्धः । अनेन स्वप्नशङ्का निरस्ता । प्रशब्देन तु विपर्यासशङ्कापि । अन्यथाज्ञानं हि सम्यगवगमाभावे हि भवति । प्रवासस्थः प्रोषितस्तस्य कलत्रं भार्या तस्या वेष इव वेषो यस्याः । अनेनानुकम्पनीयत्वं व्यज्यते ॥

सा साधुसाधारणपार्थिवर्धेः स्थित्वा पुरस्तात्पुरुहूतभासः ।
जेतुः परेषां जयशब्दपूर्वं तस्याञ्जलिं बन्धुमतो बबन्ध ॥ ५ ॥

प्रका—सेति । साधवस्सन्तः तत्साधारणी पार्थिवर्धिर्यस्य । अनेनाभिगमनीयत्वमुक्तम् । पुरस्तात्स्थित्वेति प्रगल्भेति द्योत्यते । पुरुहूतभास इति तत्सन्निधौ सर्वस्यापि साध्वसं सम्भवतीति द्योत्यते । अतो विरोधध्वनिः । परेषां जेतुरिति जयाशिषस्सत्यत्वं, बन्धुमत इति तस्यैतदर्थसाधनक्षमतां द्योतयति । जयशब्दाञ्जली स्वाम्युपस्थानसमुचितौ स्वामिभावं द्योतयतः ॥

पदा—सेति । सा तस्य पुरस्तात् स्थित्वा जयशब्दपूर्वमञ्जलिं बबन्ध । जयशब्दः पूर्वो यत्रेति क्रियाविशेषणम् । जयशब्दोच्चारणाञ्जलिबन्धाभ्यां स्वाम्युपस्थानसमुचिताभ्यां त्वमेव स्वामीति व्यज्यते । साधवस्सज्जनास्तेषां साधारणी पार्थिवर्धी राजसम्पद्यस्य । अनेनाभिगम्यगुणा उक्ताः । पुरुहूतभासः देवेन्द्रसमानतेजसः । अनेनाधृष्यगुणाः । परेषां जेतुः । तस्यायं जयशब्दो यथार्थ इति भावः । बन्धुमत इत्यनेन स्वकार्यसाधकोऽयमिति द्योत्यते ॥

अथानपोढार्गळमप्यगारं छायामिवादर्शतलं प्रविष्टाम् ।
सविस्मयो दाशरथेस्तनूजः प्रोवाच पूर्वार्धविसृष्टतल्पः ॥ ६ ॥

प्रका—अथेति । अनपोढा अनुत्सारिता अर्गळा कवाटरोधी तिरश्चीनो दण्डो यस्य । छायामिव । यथाच्छायाया अदर्शतलप्रवेशे सन्निधेरन्यत् प्रयत्नान्तरन्नापेक्षणीयम्, तथेत्यर्थः । दाशरथेस्तनूज इत्यसाध्वसत्वं द्योत्यते । पूर्वार्धविसृष्टतल्प इत्यसम्भ्रमतां विस्मयस्य द्योतयति ॥

पदा—अथेति। अत्र तामित्यध्याहार्यम्। अथ दाशरथेस्तनूजः सविस्मयः तां प्रोवाच। विस्मयहेतुमाह—अनपोढार्गळमप्यगारं प्रविष्टामिति। अनपोढा अनुत्सारिता अर्गळा कवाटरोधी तिरश्चीनो दण्डो यस्य। अविवृतद्वारमित्यर्थः। आदर्शतलं छायामिव। आदर्शो दर्पणं तस्य तलं प्रदेशः। न हि छायाया दर्पणतलप्रवेशे सन्निधानादन्यत् प्रयत्नान्तरमस्तीति भावः। पूर्वार्धेन विसृष्टः तल्पो येन। उपधानस्थितेन करेण शिरो धृत्वेत्यर्थः। अनेनासम्भ्रमत्वं द्योत्यते॥

लब्धान्तरा सावरणेऽपि गेहे योगप्रभावो न च लक्ष्यते ते।
बिभर्षि चाकारमनिर्वृतानां मृणालिनी हैममिवोपरागम् ॥७॥

का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणन्ते।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥८॥

प्रका—लब्धेति। लब्धावकाशा। त्वमिति शेषः। सावरणे सकवाटघटने। योगप्रभावे सति किमसम्भाव्यमित्याह—योगप्रभावो न च लक्ष्यते ते। चो विरोधे। स कथन्न लक्ष्यते इत्याह— बिभर्षि चेति। योगिनामार्त्यसम्भवात्। चो यस्मादर्थे। तत्कथमिदमित्यर्थः। प्रभावेन चेति पाठे स च तेऽवकाशलाभो योगप्रभावेनेति लक्ष्यते ज्ञायत इत्यर्थः। बिभर्षि चेति चशब्दो विरोधं द्योतयति। प्रभावेन च लक्ष्यसे त्वमिति पाठे लब्धान्तरत्वाद्योगप्रभावेन चोपलक्षिता भवसीत्यर्थः। मृणाळिनी शब्दः कमलोत्पत्तिस्थानपरः। उपरागो विच्छायत्वम्। का त्वमिति। शुभ इति अप्राकृतस्तवाकार एवायमभिजनं द्योतयति। तस्मात् सम्भाव्या माननीया चासीत्यर्थः। देवी मानुषी वेत्यादिजातिविकल्पगर्भः प्रथमः प्रश्नः। आचक्ष्व यासि यत्परिग्रहो यदर्थिनी वा। तत्र चरमप्रश्नविषयं विशेषमाह—मत्वेति। पापस्यानाख्येयत्वं द्योत्यते। प्रवृत्तिरिच्छा॥

पदा—लब्धेति। अत्र त्वमित्यध्याहार्यम्। त्वं सावरणे अपि गेहे लब्धान्तरा। भवसीति शेषः। सावरणे घटितकवाटे लब्धान्तरा लब्धावकाशा। अहो विस्मय इत्यर्थः। ननु योगप्रभावे सति किमसम्भाव्यम्? अत आह—ते योगप्रभावः न लक्ष्यते च। योगो योगाभ्यासः तस्य प्रभावः शक्तिः। चो विरोधे। कुतो न लक्ष्यते इत्यत्राह—त्वमनिर्वृतानामाकारं बिभर्षि चेति। अनिर्वृतानां दुःखितानाम्। प्रवासस्थकळत्रवेषामित्युक्तत्वात्। चो यस्मादर्थे। मृणाळिनी हैममुपरागमिव इति। मृणाळिनी कमलिनी। उपरागो विच्छायत्वम्। यथा कमलिनी हिमागमे परिम्लानसरोजा भवति तथेत्यर्थः। स्पष्टोऽयं विकार इत्युपमया लक्ष्यते। केति। शुभे त्वं का।

हे गुणवति त्वं दैवी वा मानुषी वासीत्यर्थः। कस्य परिग्रहः वा। परिग्रहो भार्या। ते मदभ्यागमकारणं वा किम्? केन कारणेन मामुपागतासि। त्वं मत्वा आचक्ष्व। पापस्यानाख्येयत्वाद्विचार्य वदेत्यर्थः। पापस्यानाख्येयत्वमेव स्फुटयति—वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्तीति। वशिनां जितेन्द्रियाणाम्। परस्त्रीषु विमुखी प्रवृत्तिरिच्छा यस्य॥

**तमब्रवीत्सा गुरुणानवद्या या नीतपौरा स्वपदोन्मुखेन।**
**तस्याः पुरः सम्प्रति वीतनाथां जानीहि राजन्नधिदेवतां माम्** ॥९॥

**प्रका**—तमिति। गुरुणा तवेति शेषः। अनवद्या मरतकाद्यनुपहतापीत्यर्थः। नीतपौरा कारुणिकतयेति शेषः। स्वपदोन्मुखेनेति त्यागहेतुः। अधिदेवतामधिष्ठात्रीं तदभिमानिनीं देवताम्॥

**पदा**—तमिति। सा तमब्रवीत्। किमित्यत्राह—गुरुणेत्यादिभिः परमात्ममूर्तिमित्यन्तैः श्लोकैः। राजन् या स्वपदोन्मुखेन गुरुणा नीतपौरा, त्वं मां तस्याः पुरः अधिदेवतां जानीहि। स्वपदं प्रत्युन्मुखेन अभिमुखेन गुरुणा। तवेति शेषः। नीताः पौराः पुरवासिनो यस्याः। अधिदेवतामधिष्ठात्रीं देवताम्। अनवद्या निर्दोषा, सर्वलक्षणसम्पन्नेत्यर्थः। सम्प्रति वीतनाथां विगतनाथाम्॥

**वस्वौकसाराममिभूय साहं सौराज्यबद्धोत्सवया विभूत्या।**
**समग्रशक्तौ त्वयि सूर्यवंश्ये सति प्रपन्ना करुणामवस्थाम्** ॥१०॥

**प्रका**—वस्वौकसारामिति। अळकाम्। "पुरी वस्वौकसारास्य विमानं पुष्पकाऽस्त्रियाम्" इति यादवः। अमरावतीमिति वल्लभः। सौराज्येति। सौराज्येनाविच्छिन्नप्रवृत्तोत्सवया। सति सत्यपीत्यर्थः। परिमितशक्तावपि कस्मिंश्चित्सूर्यवंश्ये सत्यपि नेदमुचितमिति भावः। करुणां दयनीयाम्॥

**पदा**—वस्वौकसारामिति। तत्र स्थितेत्यध्याहार्यम्। सौराज्यबद्धोत्सवया विभूत्या वस्वौकसाराममिभूय स्थिता सा अहं सूर्यवंश्ये समग्रशक्तौ त्वयि सति करुणामवस्थां प्रपन्ना। सौराज्यं सुराजत्वं तेन बद्धोत्सवया नित्यप्रवृत्तोत्सवया वस्वौकसारामळकाम्। "पुरी वस्वौकसारास्य विमानं पुष्पकोऽस्त्रियाम्" इति यादवः। समग्राः सम्पूर्णाः शक्तयः प्रभावोत्साहमन्त्रजा यस्य। करुणां दयनीयाम्। "करुणा तु स्त्रियाञ्चित्तवृत्तौ क्लिष्टेषु जन्तुषु धार्मिकस्य, त्रिषु पुनः करुणाविषये तथा" इति केशवः। प्रपन्ना प्राप्ता॥

विशीर्णतल्पाट्टशतो निवेशः पर्यस्तसालः प्रभुणा विना मे ।
विडम्बयत्यस्तनिमग्नसूर्यं दिनान्तमुग्रानिलभिन्नमेघम् ॥ ११ ॥

प्रका—तामवस्थां प्रतिपादयति—विशीर्णेति । विशीर्णतल्पान्यट्टशतानि यत्र । अट्टः क्षौमगृहम् । निवेशः आश्रयः सन्निवेशो वा । पर्यस्तसालः पतितप्राकारः । विना विनाभूतः ॥

पदा—विशीर्णेति । प्रभुणा विना विशीर्णतल्पाट्टशतः पर्यस्तसालः मे निवेशः अस्तनिमग्नसूर्यमुग्रानिलभिन्नमेघं दिनान्तं विडम्बयति । प्रभुणा स्वामिना विना विनाभूतः विरहित इत्यर्थः । विशीर्णतल्पान्यट्टशतानि क्षौमशतानि यत्र । पर्यस्ताः पतिताः सालाः प्रकारा यत्र । "वप्रसालं प्राकारमाहु"रिति हलायुधः । निवेशः सन्निवेशः आश्रयो वा । अस्ते अस्ताचले निमग्नः अन्तर्भूतः सूर्यो यस्मिन् । उग्रेण अनिलेन भिन्ना विक्षिप्ता मेघा यस्मिन् । विडम्बयति अनुकरोति । सन्ध्यासमये मेघानान्नानावर्णत्वाद् क्षौमगृहेण प्राकारेण च साम्यमित्यवसेयम् ॥

निशासु भास्वत्कलनूपुराणां यस्सञ्चरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥ १२ ॥

प्रका—निशास्विति । भास्वत् कलञ्च नूपुरं यासाम् । सञ्चरः सञ्चारविषयः । "गोचरसञ्चर" इति निपातः । नदन्मुखमेवोल्का ज्वलिताग्नित्वात्तया विचितमन्विष्टमामिषं याभिः । प्रदीपिताग्रं काष्ठमुल्का । अथवोल्काशब्देन ज्वाला लक्ष्यते । वाह्यते गम्यते । वहेरन्यो वाहिरिति धातुरस्तीत्युपदेशः । शिवाभिर्गोमायुभिः ॥

पदा—निशास्विति । यः निशासु अभिसारिकाणां सञ्चरः अभूत् । स राजपथः शिवाभिः वाह्यते । "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" इति सिंहः । सञ्चरः सञ्चारविषयः । "गोचरसञ्चर" इति निपातः । राजपथो राजमार्गः । शिवाभिः गोमायुभिः । वाह्यते गम्यते । वहेरन्यो वाहिरिति धातुरस्तीत्युपदेशः । भास्वन्ति दीप्तिमन्ति कलानि मधुराणि नूपुराणि यासाम् । नदद्भिः मुखैरेवोल्काभिः प्रदीपिताग्रैः काष्ठैः विचितमन्विष्टमामिषम् । गोमायूनान्नदतां मुखानि ज्वलितानलानीति प्रसिद्धिः ॥

आस्फालितं यत् प्रमदाकराग्रैर्मृदङ्गधीरध्वनिमन्वगच्छत् ।
वन्यैरिदानीं महिषैस्तदम्भः शृङ्गाहतं क्रोशति दीर्घिकाणाम् ॥ १३ ॥

प्रका—आस्फालितमिति । धाराध्वनिमिति पाठे धारा करणविशेषः । क्रोशति फूत्कुरुते ॥

पदा—अस्फालितमिति । यत् प्रमदाकराग्रैरास्फालितं मृदङ्गधीरध्वनिमन्वगच्छत्, दीर्घिकाणां तदम्भः इदानीं वन्यैः महिषैः शृङ्गाहतं क्रोशति । अस्फालितमाहतम् । मृदङ्गानां धीरं गम्भीरं ध्वनिम् । अन्वगच्छद् अनुकरोति स्म । क्रोशति शब्दायते । इदानीमन्यादृशः शब्दो जायत इत्यर्थः ॥

सोपानमार्गेषु च येषु रामा निक्षिप्तवत्यश्चरणान् सरागान् ।
सद्योहतन्यङ्कुभिरास्रदिग्धं व्याघ्रैः पदं तेषु निधीयते मे ॥ १४ ॥

प्रका—सोपानेति । रागोऽलक्तकः । सद्यः समनन्तरम् । न्यङ्कुर्हरिणः । "आस्रन्तु रुधिराश्रुणोः" इति केशवः । एषु च परिवृत्तिरलङ्कारः ॥

पदा—सोपानेति । मे येषु सोपानमार्गेषु रामाः सरागान् चरणान् निक्षिप्तवत्यः, तेषु व्याघ्रैः आस्रदिग्धं पदं निधीयते । सरागान् अलक्तकरससहितान् । आस्रैः रुधिरैः दिग्धं सिक्तम् । "आस्रन्तु रुधिराश्रुणोः" इति केशवः । सद्यः तत्क्षणमेव हता न्यङ्कवो यैः । परिवृत्तिरलङ्कारः ॥

चित्रद्विपाः पद्मवनावतीर्णाः करेणुभिर्दत्तमृणालभङ्गाः ।
नखाङ्कुशाघातविभिन्नकुम्भाः संरब्धसिंहप्रहृतं वहन्ति ॥ १५ ॥

प्रका—चित्रेति । एवम्भूता आलेख्यगजाः गजभ्रान्तिकुपितसिंहप्रहृताः सन्तः नखाङ्कुशाघातविभिन्नकुम्भा भवन्तीत्यर्थः ॥

पदा—चित्रेति । चित्रद्विपाः संरब्धसिंहप्रहृतं वहन्ति । संरब्धस्य साक्षाद्गज एवायमिति बुद्ध्या कुपितस्येत्यर्थः । प्रहृतं प्रहारः । पद्मवनेषु कमलसमूहेषु अवतीर्णाः कृतावगाहाः । करेणुभिः दत्तमृणालभङ्गाः । करेणवः करिण्यः । भग्नो मृणालः मृणालभङ्गः । नखैरेवाङ्कुशैराघातेन आहननेन विभिन्नाः कुम्भा येषाम् ॥

स्तम्भेषु योषित्प्रतियातनानामुत्क्रान्तवर्णक्रमधूसराणाम् ।
स्तनोत्तरीयाणि भवन्ति सङ्गान्निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥ १६ ॥

प्रका—स्तम्भेष्विति । प्रतियातना प्रतिकृतिः । उत्क्रान्तो नष्टो वर्णक्रमो वर्णविन्यासः । तनूत्तरीयाणीति वा पाठः । सङ्गात् संश्लेषात् ॥

पदा—स्तम्भेष्विति । स्तम्भेषु योषित्प्रतियातनानां फणिभिः विमुक्ताः निर्मोकपट्टाः सङ्गात् स्तनोत्तरीयाणि भवन्ति । प्रतियातना प्रतिकृतिः । "प्रतिकायश्च प्रति-

कृतिमाहुः प्रतियातनां प्रतिच्छायाम्'' इति हलायुधः। निर्मोकाः सर्पत्वचः। पट्टाः पट्टवस्त्राणि। सङ्गात्संश्लेषात्। उत्क्रान्तो नष्टो वर्णक्रमो वर्णविन्यासो यासाम्। अत एव धूसराणाम् ॥

कालान्तरश्यामसुधेषु नक्तमितस्ततो रूढतृणाङ्कुरेषु।
त एव मुक्तागुणशुद्धयोऽपि हर्म्येषु मूर्छन्ति न चन्द्रपादाः ॥ १७ ॥

प्रका—कालान्तरेति। त एव ये पूर्वमभिव्याप्तवन्तः। गुणानां शुद्धिर्धावल्यम्। मूर्छन्ति ''संमूर्छनमभिव्याप्ति''रिति सिंहः। तत्र हेतुः—कालान्तरेत्यादि विशेषणद्वयम् ॥

पदा—कालान्तरेति। ते चन्द्रपादाः एव नक्तं हर्म्येषु न मूर्छन्ति। चन्द्रपादाः चन्द्ररश्मयः नक्तं रात्रौ नाभिव्याप्नुवन्ति। ''संमूर्छनमभिव्याप्तिः'' इत्यमरः। ये रात्रौ मामभिव्याप्य स्थिताः त एवेत्यर्थः। मुक्तागुणशुद्धय अपि मुक्तागुणो मौक्तिकदाम तस्य शुद्धिरिव शुद्धिर्धावल्यं येषाम्। व्याप्त्यभावे हेतुः—कालान्तरेत्यादि विशेषणद्वयम्। कालान्तरेण कालविशेषेण श्यामा कृष्णवर्णा सुधा येषाम्। इतस्ततःप्ररूढतृणाङ्कुरेषु। ''अङ्कुरोऽभिनवोद्भिदि'' इत्यमरः ॥

आवर्ज्य शाखास्सदयञ्च यासां पुष्पाण्युपात्तानि विलासिनीभिः।
वन्यैः पुलिन्दैरिव वानरैस्ताः क्लिश्यन्त उद्यानलता मदीयाः ॥ १८ ॥

प्रका—आवर्ज्येति। पुलिन्दैरिव वानरैरिति। पुलिन्दैः वानरैश्चेत्यर्थः। वन्द्यः पुलिन्दैरिवेति पाठे वन्दीव्याधा यथा अनुचितं कदर्थयन्तीत्यर्थः ॥

पदा—आवर्ज्येति। विलासिनीभिः यासां शाखाः सदयमावर्ज्य पुष्पाण्युपात्तानि, मदीयास्ता उद्यानलता वन्यैः पुलिन्दैरिव वानरैः क्लिश्यन्ते च। शाखा अग्रभागान्। वन्यैर्वनभवैः। पुलिन्दैः किरातादिभिः। पुलिन्दैर्वानरैश्चेत्यर्थः। क्लिश्यन्ते पीड्यन्ते ॥

रात्रावनाविष्कृतदीपभासः कान्तामुखश्रीवियुता दिवाऽपि।
तिरस्क्रियन्ते क्रिमितन्तुजालैर्विच्छिन्नधूपप्रसरा गवाक्षाः ॥ १९ ॥

प्रका—रात्राविति। अनाविष्कृता अप्रकाशिता दीपभासो यैः क्रिमिर्लूता। धूमोऽगरुप्रभवः ॥

पदा—रात्राविति। गवाक्षाः क्रिमितन्तुजालैः लूतातन्तुवितानैः तिरस्क्रियन्ते आच्छाद्यन्ते। किञ्चेत्याह—रात्रावित्यादिना। रात्रावनाविष्कृतदीपभासः अप्रकाशित-

दीपशोभाः, दिवा कान्तामुखश्रीवियुताः अपि युवतिजनवदनसुषमाविरहिताश्च। विच्छिन्नो विनष्टः धूपप्रसरोऽगरुप्रभवो धूमप्रसरो यत्र। संस्कृतो धूमो धूपः ॥

**वृक्षेशया यष्टिनिवासभङ्गान्मृदङ्गशब्दापगमादलास्याः।**
**प्राप्ता दवोल्काहतशेषबर्हाः क्रीडामयूरा वनबर्हिणत्वम् ॥ २० ॥**

**प्रका**—वृक्षेशया इति। "अधिकरणे शेतेः"। "शयवासवासिष्वकालात्" इत्यलुक्। यष्टिर्मयूरनिवासाय गृहेषु स्थाप्यते। मृदङ्गेति। मृदङ्गध्वनौ मेघध्वनिशङ्कया मयूरा नृत्यन्तीति ॥

**पदा**—वृक्ष इति। क्रीडामयूरा वनबर्हिणत्वं प्राप्ताः। कथमित्यत्राह—वृक्ष इत्यादिना। यष्टिनिवासभङ्गाद्वृक्षेशयाः। निवासार्था यष्टिर्यष्टिनिवासः। यष्टिरेव निवासो वासस्थानमिति कर्मधारयः। वृक्षेशया वृक्षवासिनः। "अधिकरणे शेतेः"। "शयवासवासिष्वकालादि"ति सप्तम्या अलुक्। मृदङ्गशब्दापगमादलास्या नृत्तविरहिताः। मृदङ्गशब्दश्रवणे हि मेघनादशङ्कया मयूरा नृत्यन्ति, न तु तदपगमे। दवोल्कया वनाग्न्यलातेन आहतास्ताडिताः शेषाश्च बर्हा येषाम् ॥

**बलिक्रियावर्जितसैकतानि स्नानीयसंसर्गमनाप्नुवन्ति।**
**उपान्तवानीरगृहाणि दृष्ट्वा शून्यानि दूये सरयूजलानि ॥ २१ ॥**

**प्रका**—बलिक्रियेति। स्नानीयं स्नानसाधनं गन्धचूर्णादि। तादृशानि सरयूजलानि शून्यानि तत्समीपवानीरलतागृहाणि च दृष्ट्वा तप्य इत्यर्थः। उपान्तवानीरगृहेष्विति पाठे शून्यत्वन्तद्गतमवसेयम् ॥

**पदा**—बलिक्रियेति। चशब्दोऽर्थाद्द्रष्टव्यः। अहं सरयूजलानि बलिक्रियावर्जितसैकतानि स्नानीयसंसर्गमनाप्नुवन्ति, उपान्तवानीरगृहाणि शून्यानि च दृष्ट्वा दूये। बलिक्रियया वर्जितानि सैकतानि येषु। "सैकतं सिकतामय"मित्यमरः। स्नानीयैः स्नानसाधनभूतैर्गन्धचूर्णादिभिः संसर्गमनाप्नुवन्ति च। तदुपान्तवर्तीनि वानीरगृहाणि कामुकनिवासशून्यानि च दृष्ट्वा दुःखिता भवामीत्यर्थः ॥

**तदर्हसीमां वसतिं विसृज्य मामभ्युपेतुं कुलराजधानीम्।**
**हित्वा तनुं कारणमानुषीं तां यथा गुरुस्ते परमात्ममूर्तिम् ॥ २२ ॥**

**प्रका**—एवं स्वदशां निवेद्य स्वार्थमाह—तदिति। कुलराजधानीमिति कुशावतीत्यागेन स्वाभ्युपगमे हेतुः। उपमया च हेतुत्वमुपपादितम्। कारणेन मानुषीम्। परमा चासावात्ममूर्तिश्चेति कर्मधारयः ॥

पदा—इत्थं स्वदशान्निवेद्य स्वार्थमेवार्थयते—तदिति । तत्त्वमिमां वसतिं विसृज्य कुलराजधानीं मामभ्युपैतुमर्हसि । कुशावतीपरित्यागे स्वाभ्युपगमे च हेतुः कुलराजधानीमिति । कुलोचितां राजधानीमित्यर्थः । ते गुरुः कारणमानुषीं तां तनुं हित्वा परमात्ममूर्तिं यथा । गुरुः पिता । कारणेन मानुषीं मानुषसम्बन्धिनीम् । परमामुत्कृष्टामात्मनो मूर्तिं शरीरम् । यथाशब्द इवार्थे । स चोपमावाचकः । उपमयापि युक्तत्वमेव प्रतिपादितम् ॥

तथेति तस्याः प्रणयं प्रतीतः प्रत्यग्रहीत्प्राग्रसरो रघूणाम् ।
पूरप्यभिव्यक्तमुखप्रसादा शरीरबन्धेन तिरोबभूव ॥ २३ ॥

प्रका—तथेति । प्रणयं याच्ञाम् । प्रतीतो हृष्टः । न तु कृच्छ्रेण दाक्षिण्यादित्यर्थः । प्रत्यग्रहीत् प्रतिशुश्राव । अभिव्यक्तमुखप्रसादा कृतार्थम्मन्यतया । शरीरबन्धेन तिरोबभूव । आत्मना तु सन्निहितैवेति भावः ॥

पदा—तथेति । रघूणां प्राग्रसरः तस्याः प्रणयं तथा इति प्रत्यग्रहीत् । प्राग्रसरोऽधिपतिः । प्रणयो याच्ञा प्रार्थनेति पर्यायाः । प्रत्यग्रहीत् प्रतिशुश्राव । प्रतीतो हृष्टः । न तु कृच्छ्रादित्यर्थः । पूः अपि शरीरबन्धेन तिरोबभूव । शरीरमात्रेण तिरोहिताभूत् । आत्मना तु सन्निहितैवेति भावः । अभिव्यक्तो विस्पष्टो मुखप्रसादो यस्याः । कृतार्थताबुद्ध्येति भावः ॥

तदद्भुतं संसदि रात्रिवृत्तं प्रातर्द्विजेभ्यो नृपतिश्शशंस ।
श्रुत्वा त एनं कुलराजधान्या साक्षात्पतित्वे वृतमभ्यनन्दन् ॥ २४ ॥

प्रका—तदिति । द्विजेभ्यो वसिष्ठादिभ्यः साक्षात् प्रत्यक्षीभूय । अभ्यनन्दन्नुत्साहयामासुरित्यर्थः ॥

पदा—तदिति । नृपतिः तद्रात्रिवृत्तं प्रातः द्विजेभ्यः शशंस । द्विजेभ्यो वसिष्ठादिभ्यः । अद्भुतं श्रोतॄणामपि विस्मयकरम् । त एनं कुलराजधान्या साक्षात्पतित्वे वृतं श्रुत्वा अभ्यनन्दन्, साक्षात्प्रत्यक्षीभूय । पतित्वे भर्तृभावे । अभ्यनन्दन्नभिनन्दयामासुः । गमनार्थमेव प्रोत्साहयामासुरित्यर्थः ॥

कुशावतीं श्रोत्रियसात्स कृत्वा यात्रानुकूलेऽहनि सावरोधः ।
अनुद्रुतो वायुरिवाभ्रवृन्दैः सैन्यैरयोध्याभिमुखः प्रतस्थे ॥ २५ ॥

प्रका—कुशावतीमिति । श्रोत्रियसात् । "तदधीनवचन" इति सातिप्रत्ययः । तथाकरणञ्च तस्याः सम्माननाय । इतराणि तु विशेषणानि गन्तव्यदेशस्थित्यभिप्रायाणि ॥

पदा—कुशावतीमिति । स कुशावतीं श्रोत्रियसात्कृत्वा यात्रानुकूलेऽहनि अयोध्याभिमुखः प्रतस्थे । श्रोत्रियसात् । "तदधीनवचने चेति" सातिः । श्रोत्रियाधीनां विधायेत्यर्थः । तस्याः शोच्यत्वपरिहारार्थं मङ्गलार्थञ्चेदम् । सावरोधः सान्तःपुरजनः । सैन्यैरनुद्रुतः । "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः । अनुद्रुतोऽनुगतः । वायुरभ्रवृन्दैरिव । यथा वायुरभ्रवृन्दैरनुगतो भवति तथेत्यर्थः । सैन्यानान्तदनुगमने को विस्मय इत्युपमया ध्वन्यते ॥

सा केतुमालोपवना बृहद्भिर्विहारशैलानुगतेव नागैः ।
सेना रथोदारगृहा प्रयाणे तस्याभवज्जङ्गमराजधानी ॥ २६ ॥

प्रका—सेति । केतुमालोपवनेति रथोदारगृहेति चावयवरूपकम् । सेना जङ्गमराजधानीत्यवयविरूपकम् । नागैर्विहारशैलानुगतेवेत्युत्प्रेक्षा तु तदङ्गम् । अनेन प्रकरणेनास्य शून्यनिवेशने प्रभुशक्तिर्द्योत्यते ॥

पदा—अथास्य शून्यनिवेशने प्रभुशक्तिन्दर्शयति—सेत्यादिना । सा सेना तस्य प्रयाणे जङ्गमराजधानी अभवत् । जङ्गमा चासौ राजधानी चेति तथा । केतुमाला केतुसमूह एव उपवनं यस्याः । बृहद्भिर्नागैः विहारशैलानुगता इव । विहारशैलाः क्रीडाशैलाः तैरनुगतेव । रथा एव उदारा उत्कृष्टा गृहा यस्याः । अत्र सेना राजधानीत्यवयविरूपकम् । केतुमालोपवनेति रथोदारगृहेति चावयवरूपकम् । विहारशैलानुगतेवेत्युत्प्रेक्षा तु रूपकाङ्गमिति विभागः ॥

तेनातपत्रामलमण्डलेन प्रस्थापितः पूर्वनिवासभूमिम् ।
बभौ बलौघः शशिनोद्गतेन वेलामुदन्वानिव नीयमानः ॥ २७ ॥

प्रका—तेनेति । आतपत्रमेवामलं मण्डलं यस्य ॥

पदा—तेनेति । तेन पूर्वनिवासभूमिं प्रस्थापितः बलौघः बभौ । पूर्वनिवासभूमिरयोध्या । उद्गतेन शशिना वेलां नीयमान उदन्वानिव । उद्गतेन उदितेन । उपमया बलौघस्य महत्त्वं तदधीनत्वञ्च द्योत्यते । आतपत्रमेवामलं मण्डलं यस्य ॥

तस्य प्रयातस्य वरूथिनीनां पीडामपर्याप्तवतीव सोढुम् ।
वसुन्धरा विष्णुपदं द्वितीयमध्यारुरोहेव रजश्छलेन ॥ २८ ॥

प्रका—तस्येति । वरूथिनीनामिति कर्तरि षष्ठी । छलेनेत्यपह्नवः ॥

पदा—तस्येति । वसुन्धरा प्रयातस्य तस्य वरूथिनीनां पीडां सोढुमपर्याप्तवती

रजश्छलेन द्वितीयं विष्णुपदमध्यारुरोहेव। वरूथिनीनामिति कर्तरि षष्ठी। वरूथिनीकर्तृकां पीडामित्यर्थः। अपर्याप्तवती असमर्था। द्वितीयं विष्णुपदमाकाशम्। रजश्छलेन रजोव्याजेन। अत्रापह्नुतिः। इवेत्युत्प्रेक्षा। तयोश्च संसृष्टिः॥

उद्यच्छमाना गमनाय पश्चात्पुरोनिवेशे[१] पथि वा व्रजन्ती।
सा यत्र सेना ददृशे नृपस्य तत्रैव सामग्र्यमतिश्चकार ॥ २९ ॥

प्रका—उद्यच्छमानेति। पश्चात्कुशावत्यां गमनायोद्यमं कुर्वन्तीत्यर्थः। "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदम्। पुरः स्कन्धावारे निवेशे निवासायेत्यर्थः। उद्यच्छमानेत्यनुषङ्गः। वाशब्दः सर्वशेषः। एवं व्यवस्था सेना तास्ववस्थासु यत्र यत्र येन येन ददृशे, तत्र तत्र तस्य तस्यात्रैव संमग्रा सेनेति बुद्धिं चकारेत्यर्थः॥

पदा—उद्यच्छमानेति। नृपस्य सा सेना यत्र ददृशे तत्र एव सामग्र्यमतिं चकार। राज्ञः सा सेना यत्र यत्र येन केनापि जनेन दृष्टाभूत्, तत्र तत्र द्रष्टृणामत्रैव सर्वा सेना इति मतिमतनोदित्यर्थः। सेनाया बहुत्वमनेनोक्तम्। अन्यथा कथं सैन्यशून्यजनपदोपपत्तिरिति भावः। सामग्र्यमतिविधानप्रकारमाह—उद्यच्छमानेति। पश्चाद्गमनाय उद्यच्छमाना पश्चात्कुशावत्यां गमनाय उद्यच्छमाना उद्यमं कुर्वाणा। एवशब्दस्सर्वत्रापि योजनीयः। "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदम्। केचिदपि जना न गता गन्तुमारभन्त एवेति मतिं चकारेत्यर्थः। एवमन्यत्रापि पुरो निवेशाय उद्यच्छमानेत्यनुषङ्गः, पुरः स्कन्धावारप्रदेशे निवेशाय निवासाय पथि व्रजन्ती एव गच्छन्ती॥

तस्य द्विपानां मदवारिसेकात् खुराभिघाताच्च तुरङ्गमाणाम्।
रेणुः प्रपेदे पथि पङ्कभावं पङ्कोऽपि रेणुत्वमियाय भूयः ॥ ३० ॥

प्रका—तस्येति। रेणुः, जातावेकवचनम्। भूयः पुनरपीत्यर्थः। पथि स्थितो रेणुर्मदवारिसेकात् खुराभिघाताच्च यथाक्रमं पङ्कत्वं रेणुत्वञ्चावाप। तथा पङ्कोऽपि खुराभिघातान्मदवारिसेकाच्च रेणुत्वं पङ्कत्वञ्चावापेत्यर्थः। अथवा प्रथमस्य पादस्य तृतीयेन द्वितीयस्य चतुर्थेन चान्वयः। भूयः बहुवारम्॥

पदा—तस्येति। पथि रेणुः तस्य द्विपानान्मदवारिसेकात्पङ्कभावं प्रपेदे। तुरङ्गमाणां खुराभिघातात्पङ्कः भूयः अपि रेणुत्वञ्चियाय। इत्थं बहुशो जातमिति भावः। पथि वर्तमानो रेणुरित्यर्थः। जात्येकवचनम्॥



[१] निवेशाय।

मार्गैषिणी सा कटकान्तरेषु वैन्ध्येषु सेना बहुधा विभिन्ना ।
चकार रेवेव महाविरावा बद्धप्रतिश्रुन्ति गुहामुखानि ॥ ३१ ॥

प्रका—मार्गैषिणीति । कटको नितम्बः । रेवा नर्मदा ॥

पदा—मार्गैषिणीति । वैन्ध्येषु कटकान्तरेषु मार्गैषिणी बहुधा विभिन्ना सा सेना गुहामुखानि बद्धप्रतिश्रुन्ति चकार । वैन्ध्येषु विन्ध्यसम्बन्धिषु । कटकान्तरेषु नितम्बभेदेषु । मार्गैषिणी मार्गाभिलाषिणी । अत एव बहुधा विभिन्ना । बद्धा प्रतिश्रुत् प्रतिध्वानं यत्र; रेवा नर्मदेव । महान् विरावः शब्दो यस्याः । विन्ध्याटवीषु मार्गस्य दुर्ग्रहत्वादित्थमुक्तिः ॥

स धातुभेदारुणयाननेमिः प्रभुः प्रपातध्वनिमिश्रतूर्यः ।
व्यलङ्घयद्विन्ध्यमुपायनानि पश्यन् पुळिन्दैरुपपादितानि ॥ ३२ ॥

प्रका—स इति । धातुभेदो गैरिकसम्पर्कः । प्रपातो निर्झरः । तूर्यं वादित्रध्वनिः ॥

पदा—स इति । स प्रभुः विन्ध्यं व्यलङ्घयत् लङ्घितवान् । धातुभेदेन गैरिकसम्पर्केण अरुणा अरुणायमाना यानानां रथानां नेमिर्यस्य । प्रपातो निर्झरस्तस्य ध्वनिभिर्मिश्रं तूर्यं वादित्रध्वनिर्यस्य । पुळिन्दैरुपपादितानि उपायनानि पश्यन् । पुळिन्दो वनचरः । उपपादितानि आनीतानि ॥

तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥ ३३ ॥

प्रका—तीर्थ इति । तदीये गाङ्गे । गजसेतुबन्धादिति प्रतीपगमनहेतुः । अयत्नानि पुरुषप्रयत्नानपेक्षव्यापाराणीत्यर्थः । नभ इति उड्डयमाना इत्यर्थः ॥

पदा—तीर्थ इति । गङ्गां तदीये तीर्थे उत्तरतस्तस्य हंसा अयत्नबालव्यजनीबभूवुः, तदीये गङ्गासम्बन्धिनि । तीर्थे अवतरणस्थाने । अयत्नबालव्यजनीबभूवुः पुरुषव्यापारनिरपेक्षचामरतामवापुः । अभूततद्भावे च्विः । गजसेतुबन्धात् प्रतीपगां प्रतीपगामिनीम् । नभसो लङ्घनेन प्राप्त्या लोलाश्चञ्चलाः पक्षा येषाम् । हंसपक्षाणां श्वेतत्वमुड्डयने चञ्चलत्वञ्च बालव्यजनताप्राप्तौ हेतुः ॥

स पूर्वजानां कपिलेन रोषाद्भस्मावशेषीकृतविग्रहाणाम् ।
सुरालयप्राप्तिनिमित्तमम्भस्त्रैस्रोतसं सोल्लुलितं ववन्दे ॥ ३४ ॥

प्रका—स इति। पूर्वजानां सगराणाम्। सोल्लुलितमुल्ललनसहितम्। गजादिक्षोभादित्यर्थः। नौलुलितमिति पाठे स्वसेनानौभिः क्षुभितम्। इदमपि सापराधत्वं वन्दननिमित्तम्॥

पदा—स इति। स त्रैस्रोतसमम्भः ववन्दे। त्रैस्रोतसं गाङ्गम्। वन्दने च हेतुद्वयमस्ति। तत्राद्यमाह—कपिलेन रोषाद्भस्मावशेषीकृतविग्रहाणां पूर्वजानां सुरालयप्राप्तिनिमित्तमिति। पूर्वजानां सगरपुत्राणाम्। द्वितीयमाह—नौलुलितमिति। नौभिः क्षुभितम्। अयमपराधो मे क्षम्यतामिति भावः॥

इत्यध्वनः कैश्चिदहोभिरन्ते कूलं समासाद्य कुशः सरय्वाः।
वेदिप्रतिष्ठान् विततध्वराणां यूपानपश्यच्छतशो रघूणाम् ॥ ३५॥

प्रका—इतीति। वेदिप्रतिष्ठान् तदानीमप्यलुप्तवेदिकानित्यर्थः। विततध्वराणां यज्ञशीलानामित्यर्थः॥

पदा—इतीति। कुशः इति कैश्चिदहोभिरध्वनः अन्ते सरय्वाः कूलं समासाद्य रघूणां शतशः यूपानपश्यत्। इति यात्रानुकूलेत्याद्युक्तप्रकारेण। वेदिः प्रतिष्ठा आस्पदं येषाम्। "प्रतिष्ठा कृत्यमास्पद"मिति सिंहः। तदानीमप्यलुप्तवेदिप्रदेशानित्यर्थः। विततो व्याप्तोऽध्वरो येषाम्। यज्ञशीलानामित्यर्थः॥

आधूय शाखाः कुसुमद्रुमाणां स्पृष्ट्वा च शीतान् सरयूतरङ्गान्।
तं क्लान्तसैन्यं कुलराजधान्याः प्रत्युज्जगामोपवनान्तवायुः ॥ ३६॥

प्रका—आधूयेति। क्लान्तसैन्यमिति सेवावसरकथनम्। आधूयेत्यादि सेवाङ्गम्॥

पदा—आधूयेति। कुलराजधान्याः उपवनान्तवायुः कुसुमद्रुमाणां शाखाः आधूय सरयूतरङ्गान् स्पृष्ट्वा च तं प्रत्युज्जगाम। कुसुमप्रधानाः वृक्षाश्चम्पकादयः। अनेन सौरभ्यमुक्तम्। आधूयेत्यनेन मान्द्यमपि। शीतान् शीतलात्। क्लान्तसैन्यमित्यनेन सेवावसर उक्तः। पुरप्रवेशे हि वायोरभिगमनं सुनिमित्तम्॥

अथोपशल्ये रिपुमग्नशल्यस्तस्याः पुरः पौरसखः स राजा।
कुलध्वजस्तानि चलध्वजानि निवेशयामास बली बलानि ॥ ३७॥

प्रका—अथेति। रिपुमग्नशल्य इति तैरनिवार्यव्यवसायत्वमुक्तम्। शल्यं लक्षणया दुःखं, शरादि वा। पौरसखः कुशावतीपौरसुहृत् इत्यर्थः। तत्रत्यानाममर्त्य-

भूयङ्गतत्वात् । कुलध्वज इत्यभिगम्यत्वम् । चलध्वजत्वन्तु निवेशनार्थमितस्ततो धावत्सु रथादिषु तत्समयसम्भवि । राजविशेषणैरस्य दुर्गनिवेशनयोग्यता व्यज्यते ॥

पदा—अथेति । अथ स राजा तानि बलानि तस्याः पुरः उपशल्ये निवेशयामास । ग्रामान्ते स्थापयामास । रिपुषु मग्नाः शल्याः शरा यस्य निष्प्रतिद्वन्द्व इत्यर्थः । पौराणां सखा कुशावतीपौरानुगत इत्यर्थः । न ह्ययोध्यायां केचित्सन्ति । नीतपौरैरित्युक्तत्वात् । कुले ध्वजवत्प्रधानभूतः । चला ध्वजा येषाम् । बली महाबलः ॥

तां शिल्पिसङ्घाः प्रभुणा नियुक्तास्तथागतां सम्भृतसाधनत्वात् ।
पुनर्नवीचक्रुरपां विसर्गान्मेघा निदाघग्लपितामिवोर्वीम् ॥ ३८ ॥

प्रका—तामिति । तथागतां शून्यामित्यर्थः । सम्भृतसाधनत्वात उर्व्यपि वृष्ट्या सस्यादिसम्पदा नवीभवति ॥

पदा—तामिति । शिल्पिसङ्घाः । प्रभुणा नियुक्ताः तथागतां तां सम्भृतसाधनत्वात् पुनर्नवीचक्रुः । शिल्पिनस्तक्षाणः । तथागतां शून्यामित्यर्थः । सम्भृतसाधनत्वात्सम्पादितवृक्षादिशिल्पिसाधनत्वात । नवीचक्रुः पूर्वसंस्थानानतिक्रमेण नवतामात्रं वितेनुः । मेघाः अपां विसर्गान्निदाघग्लपितामुर्वीमिव । निदाघेन ग्रीष्मेण ग्लपितां ग्लानिं प्रापिताम् । तृणमात्रेणापि रहितत्वमत्र ग्लानिः । यथा मेघाः पृथिवीं जलविसर्गेण सस्यादिसम्पन्नां कुर्वन्ति तथेत्यर्थः ॥

ततः सपर्यां सपशूपहारां पुरः परार्ध्यप्रतिमागृहायाः ।
उपोषितैर्वास्तुविधानविद्भिर्निर्वर्तयामास रघुप्रवीरः ॥ ३९ ॥

प्रका—तत इति । पशूपहारः छागादिप्रोक्षणम् । पुरः पुर्याः । परार्ध्यानि प्रशस्तानि । उपोषितैः कृतोपवासैः वास्तुविधानं गृहादिकर्म । "वेश्मभूर्वास्तुरस्त्रिया"मिति सिंहः । तद्विद्भिः स्थपतिभिरित्यर्थः ॥

पदा—तत इति । ततः रघुप्रवीरः उपोषितैर्वास्तुविधानविद्भिः तस्याः पुरः सपर्यां निर्वर्तयामास । उपोषितैः कृतोपवासैः । वास्तुविधानं गृहादिकर्म । "वेश्मभूर्वास्तुरस्त्रिया"मिति सिंहः । तद्विद्भिः स्थपतिभिरित्यर्थः । सपर्यां वास्तुपूजाम् । पशोरुपहारः प्रोक्षणादिसंस्कारः तत्सहितां छागाद्यालम्भनोपेतामित्यर्थः । परार्ध्यानि प्रशस्तानि प्रतिमागृहाणि देवतायतनानि यस्याम् ॥

तस्याः स राजोपपदं निशान्तं कामीव कान्ताहृदयं प्रविश्य ।
यथार्हमन्यैरनुजीविलोकं सम्भावयामास गृहैस्तदीयैः ॥ ४० ॥

प्रका—तस्या इति। राजोपपदं निशान्तं राजगृहम्। "निशान्तवस्त्यसदन-भवने"ति सिंहः। उपमयात्र अन्योन्यशोभाजननादि ध्वन्यते॥

पदा—तस्या इति। स कामी कान्ताहृदयमिव तस्या राजोपपदं निशान्तं प्रविश्य तदीयैरन्यैर्गृहैरनुजीविलोकं यथार्हं सम्भावयामास। राजोपपदं निशान्तं राजगृहम्। "निशान्तवस्त्यसदनभवनागारमन्दिर"मित्यमरः। अनुजीविनः सेवकाः। यथार्हमिति क्रियाविशेषणम्। योग्यतानतिक्रमेण। कामी कान्तागृहमिवेत्युपमया परस्परशोभाजननादयो द्योत्यन्ते॥

सा मन्दुरासंश्रयिभिस्तुरङ्गैश्शालागृहस्तम्भगतैश्च नागैः।
पूरावभासे विपणिस्थपण्या सर्वाङ्गनद्धाभरणेव नारी ॥ ४१ ॥

प्रका—सेति। शाला हस्तिगृहम्। अन्यत्र तूपचारात्। शालागृहमिति शिंशपावृक्षवत्। अत्र संश्रयिभिरिति ताच्छीलिकेन णिनिना गतैरिति कर्तरि क्तप्रत्ययेन च शुभं सूचितम्। अत्र योगयात्रावचनं "परिग्रहारोहणबन्धनादौ यद्यानुकूल्यन्तु रथोत्तमानाम्। राज्ञः शुभं स्यात्करिणान्तथैव, विपर्यये तद्विपरीतमाहु"रिति। 'शालावती'-त्यादि च पठन्ति॥

पदा—सेति। सा पूः मन्दुरासंश्रयिभिस्तुरङ्गैश्शालागृहस्तम्भगतैः नागैश्च आबभासे। "वाजिशाला तु मन्दुरे"त्यमरः। शाला हस्तिगृहम्। गृहशब्दप्रयोगस्तु शिंशपावृक्षादिवद्द्रष्टव्यः। "विपणिः पण्यवीथिके"त्यमरः। विपणिस्थानि पण्यानि विक्रेयवस्तूनि यस्याम्। सर्वाङ्गनद्धाभरणा नारीव। सर्वेष्वङ्गेषु नद्धानि निबद्धानि आभरणानि यस्याः॥

वसन् स तस्यां वसतौ रघूणां पुराणशोभामधिरोपितायाम्।
न मैथिलेयः स्पृहयाम्बभूव भर्त्रे दिवो नाप्यलकेश्वराय ॥ ४२ ॥

प्रका—वसन्निति। न स्पृहयाम्बभूव बहुमन्यत॥

पदा—वसन्निति। रघूणां तस्यां वसतौ वसन् स मैथिलेयः दिवः भर्त्रे न स्पृहयाम्बभूव। अलकेश्वराय अपि। न स्पृहयाम्बभूवेत्यनुषङ्गः। "स्पृहेरीप्सित" इति सम्प्रदानत्वाच्चतुर्थी। अलकेश्वरत्वप्राप्तिं देवेन्द्रत्वप्राप्तिमपि नाचकाङ्क्ष। तावुभौ न बहुमन्यतेत्यर्थः। पुराणशोभामधिरोपितायां प्रापितायाम्॥

अथास्य रत्नग्रथितोत्तरीयमेकान्तपाण्डुस्तनलम्बहारम्।
निश्वासहार्यांशुकमाजगाम घर्मः प्रियावेषमिवोपदेष्टुम् ॥ ४३ ॥

प्रका—इत्थं दुर्गनिवेशप्रकरणार्थ उक्तः। अथास्य कार्यार्थं प्रकरणान्तरमुपक्रमते—अथेति। अस्यैतदुपभोगार्थमित्यर्थः। अथवा अस्य प्रिया इत्यन्वयः। रत्नं मौक्तिकं शीतलत्वात्तत्कालोचितम्। तेन ग्रथितमुत्तरीयं यत्र। यौवने स्तनपाण्डुत्वस्य कविषु सिद्धत्वान्नित्यं गात्रिकाच्छादितत्वात् तत्कालोचितचन्दनादिविलेपाच्चैकान्तपाण्डुत्वम्। अंशुकमर्थादन्तरीयम्। घर्मो ग्रीष्मः। प्रियाः वेषमिति द्विकर्मक उपदिशतिः। न्यासकारेण "ब्रुवीत्यर्थग्रहण"मित्युक्तमित्युक्तचरमेव। तास्तत्कालेऽन्यानुपदिष्टमेव तं वेषमगृह्णन्नित्यर्थः॥

पदा—अथेति। अथ घर्मः आजगाम। घर्मो ग्रीष्मः। अस्य प्रिया वेषमुपदेष्टुमिव। वेषोऽलङ्कारः। "ब्रुविशासि"त्यर्थग्रहणमिति न्यासकारेणोक्तत्वादुपदिशतिर्द्विकर्मकः। वेषमेव विशिनष्टि—रत्नमित्यादिना। रत्नैरर्थान्मौक्तिकैर्ग्रथितमुत्तरीयं यत्र। मौक्तिकानां शीतलत्वात्तत्कालोचितत्वाच्चैतत्। एकान्तेन नियमेन पाण्डुषु स्तनेषु लम्बा हारा यत्र। यौवने स्तनपाण्डुत्वस्य कविप्रसिद्धत्वादनवरतचन्दनालिप्तत्वाच्च नियमेन पाण्डुत्वम्। निश्वासेन हार्यमंशुकं यत्र। सूक्ष्मत्वमत्र हेतुः। तच्चोष्णभयात्। एतादृशस्य वेषस्य ग्रीष्मागमन एव जातत्वमुत्प्रेक्षाहेतुः॥

अगस्त्यचिह्नादयनात्समीपं दिगुत्तरा भास्वति सन्निवृत्ते।
आनन्दशीतामिव बाष्पवृष्टिं हिमस्रुतिं हैमवतीं ससर्ज ॥४४॥

प्रका—अगस्त्येति। अयनं मार्गः। हिमस्रुतिमातपविलीनावश्यायस्रुतिम्। अगस्त्यचिह्नादित्यनेनागस्त्यस्येव तन्मार्गगतस्य भास्वतोऽप्यनिवृत्तिभावना ध्वन्यते। सा चोत्प्रेक्षामुपकरोति॥

पदा—अगस्त्येति। उत्तरा दिक् भास्वति अगस्त्यचिह्नादयनात्समीपं सन्निवृत्ते हैमवतीं हिमस्रुतिं ससर्ज। अयनान्मार्गात्। हैमवतीं हिमवत्सम्बन्धिनीम्। आतपविलीनस्य हिमवतस्तुषारस्रुतिमित्यर्थः। ससर्ज विससर्ज। आनन्दशीतां बाष्पवृष्टिमिव। आनन्दबाष्पो हिमशीतलो भवति। यथा दक्षिणां दिशं प्रति प्रस्थितस्यागस्त्यस्य कदाचिदप्यनागमनं, तथा तन्मार्गगतस्य मद्भर्तुरादित्यस्याऽपि किं भवेदेति शङ्काऽनेन ध्वन्यते। सा चोत्प्रेक्षामुपकरोति॥

प्रवृद्धतापो दिवसोऽतिमात्रमत्यर्थमेव क्षणदा च तन्वी।
उभौ विरोधक्रियया विभिन्नौ जायापती सानुशयाविवास्ताम् ॥४५॥

प्रका—प्रवृद्धेति। तन्वीति। राज्युरयिनां राशीनामरपत्वात्। विरोधः, प्रातिकूल्यन्तस्य क्रिया तत्करणं तेन। विभिन्नौ पृथगवस्थितौ। अतिमात्रं प्रवृद्धतापो

दिवसोऽत्यर्थमेव तन्वी क्षणदा चोभौ विरोधक्रियया विभिन्नौ सानुशयौ जायापती इवास्ता-मित्यन्वयः। तथाभूतौ जायापती इव रात्रिदिवसौ तापतनुत्वाभ्यां युक्तौ बभूवतुरित्यर्थः ॥

पदा --- पवृद्धेति । अतिमात्रं प्रवृद्धतापः दिवसः अत्यर्थमेव तन्वी क्षणदा च उभौ विरोधक्रियया विभिन्नौ सानुशयौ जायापती इव स्थितौ आस्ताम् । रात्रिभवानां राशीनामल्पनाडिकात्वात्तन्वी । विरोधस्य क्रियया करणेन । विभिन्नौ पृथगवस्थितौ । सानुशयौ पश्चात्तापसहितौ । रात्रिदिवसौ तापतनुत्वाभ्यां युक्तत्वात्तथाविधौ जायापती इव बभूवतुरित्यर्थः ॥

दिने दिने शैवलवन्त्यधस्तात्सोपानपर्वाणि विमुञ्चदम्भः ।
उद्दण्डपद्मं गृहदीर्घिकाणां नारीनितम्बद्वयसं बभूव ॥ ४६ ॥

प्रका — दिन इति । शैवलवत्त्वमगाधत्वेन पूर्वमक्षुण्णत्वात् । अत एव सोपा-नपर्वणामधस्तादित्यधस्तनत्वोक्तिः । उद्दण्डं जलादुपरि स्थितनाळं पद्मं यस्य । प्रमाणे द्वयसच् ॥

पदा — दिने दिन इति । गृहदीर्घिकाणामम्भः नारीनितम्बद्वयसं बभूव । ना-रीनितम्बप्रमाणमभूत् । प्रमाणे द्वयसच् । दिने दिने अधस्तात्सोपानपर्वाणि विमुञ्चत् सोपानाविच्छेदात्प्रतिदिनमधःप्रदेशस्थसोपानपर्वविमोचनं कुर्वदित्यर्थः । सोपानपर्वाणि वि-शिनष्टि— शैवलवन्तीति । उद्दण्डानि जलादुपरिस्थितनाळानि पद्मानि यस्य ॥

नवेषु सायन्तनमल्लिकानां विजृम्भणोद्गन्धिषु कुड्मलेषु ।
प्रत्येकनिक्षिप्तपदस्सशब्दं सङ्ख्यामिवैषां भ्रमरश्चकार ॥ ४७ ॥

प्रका— नवेष्विति । नवत्वादत्यादरः मल्लिकायास्सायन्तनत्वं तदा विकस्वर-त्वम् । मल्लिकाजात्यन्तरस्य विद्यमानत्वादियमुक्तिः । उद्गन्धिषु "उत्पूती"तीकारः । प्रौढिन्तु वक्ष्यति 'जनस्य सङ्कुचमिवेति । सङ्ख्येयस्य कुसुमत्वेन ऋत्वारम्भ उक्तः । प्रौढिन्तु वक्ष्यति 'जनस्य तस्मिन् समये विगाढ" इति ॥

पदा — नवेष्विति । सायन्तनमल्लिकानां नवेषु कुड्मळेषु सशब्दं प्रत्येकनिक्षि-प्तपदः भ्रमरः एषां सङ्ख्यां चकारेव । नवत्वेनादरातिशय उक्तः । सायन्तनास्सन्ध्या-कालभवाः तत्कालविकासिन इत्यर्थः । मल्लिकानां जात्यन्तरसम्भवादियमुक्तिः । सङ्ख्या-करणोत्प्रेक्षया कुड्मळानां सङ्ख्येयत्वमुक्तम् । तेन च ग्रीष्मस्यारम्भसमय एवायमिति सू-चितम् । प्रौढिनस्तु वक्ष्यते 'जनस्य तस्मिन् समये विगाढ' इति । विकासेनोद्गन्धिषु उद्गतगन्धेषु । "गन्धस्येदि"तीकारः ॥

स्वेदानुविद्धार्द्रनखक्षताङ्के सन्दष्टभूयिष्ठशिखं कपोले ।
च्युतन्न कर्णादपि कामिनीनां शिरीषपुष्पं सहसा पपात ॥ ४८ ॥

प्रका—स्वेदेति । सन्दष्टं लग्नम् । सहसा झटिति ॥

पदा—स्वेदेति । शिरीषं कामिनीनां कर्णात् च्युतमपि सहसा न पपात । कर्णादिति जातावेकवचनम् । सहसा झटिति । पतनाभावे हेतुमाह—कपोले सन्दष्टभूयिष्ठशिखमिति । सन्दष्टो लग्नो भूयिष्ठा बह्व्यः शिखा यस्य । सन्दष्टत्वे हेतुमाह—स्वेदानुविद्धार्थनखक्षताङ्क इति । स्वेदैरनुविद्धमार्द्रमभिनवञ्च नखक्षतमेवाङ्को लाञ्छनं यस्य ॥

यन्त्रप्रवाहैश्शिशिरैः परीतान्रसेन धौतान्मलयोद्भवस्य ।
शिलाविशेषानधिशय्य निन्युर्धारागृहेष्वातपमृद्धिमन्तः ॥ ४९ ॥

प्रका—यन्त्रेति । यन्त्रप्रवाहैः जलोदञ्चनयन्त्रप्रवर्तितैः पूरैः । शिलाविशेषांश्चन्द्रकान्तमौक्तिकादीन् । धारागृहन्नाम चतुस्तम्भमदृश्यप्रभवाभिर्निष्यन्दिनीभिर्जलधाराभिः परिवृतं मण्डपम् ॥

पदा—यन्त्रेति । ऋद्धिमन्तः धारागृहेषु शिलाविशेषान् अधिशय्य आतपन्निन्युः । ऋद्धिमन्तो धनिनः । धारागृहन्नाम अदृश्यप्रभवाभिर्निष्यन्दमानाभिश्च जलधाराभिः परिवृतः चतुस्तम्भः मण्डपविशेषः । शिलाविशेषान् चन्द्रकान्तमौक्तिकादीन् । शिशिरैर्यन्त्रप्रवाहैः परीतान् । यन्त्रः जलोदञ्चनयन्त्रः । तेन प्रवर्तितो जलप्रवाहो यन्त्रप्रवाहः । मलयोद्भवस्य चन्दनस्य रसेन धौतान् क्षालितान् ॥

स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु ।
कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम्[1] ॥ ५० ॥

प्रका—स्नानेति । मुक्तेष्वसंयमितेषु । अनुधूपवासमिति पश्चादर्थेऽव्ययीभावः । वसन्तेति सहकारिसापेक्षत्वमुक्तम् । केशेष्विति निमित्तसप्तमी । तथाविधकेशदर्शनेन पटुर्जात इत्यर्थः ॥

पदा—स्नानेति । वसन्तात्ययमन्दवीर्यः कामः अङ्गनानां केशेषु पदं लेभे । वसन्तकालगमनेन मन्दवीर्यः सहायाभावादिति भावः । केशेष्विति निमित्तसप्तमी । पदं स्थानम् । एतादृशं केशं सहायमुपलभ्य निजमेव पदं लेभ इत्यर्थः । स्नानेनार्द्रत्वान्मुक्तेष्वसंयमितेषु । अनुधूपवासं विन्यस्तसायन्तनमल्लिकेषु । अनुधूपवासमिति पश्चादर्थेऽव्ययीभावः । वासो नाम सुगन्धताविधानम् ॥

१ पद ।

आपिञ्जराबद्धरजःकणत्वान्मञ्जर्युदारा रुरुचेऽर्जुनस्य ।
दग्ध्वापि देहं गिरिशेन रोषात्खण्डीकृता ज्येव मनोभवस्य ॥५१॥

प्रका—आपिञ्जरेति । आबद्धं सञ्जातम् । उदारा महती ॥

पदा—आपिञ्जरेति । अर्जुनस्य मञ्जरी आपिञ्जराबद्धरजःकणत्वाद्रुरुचे । अर्जुनो वृक्षविशेषः । आपिञ्जरा आबद्धाःसञ्जाताश्च । रजःकणा यस्याः । उदारा महती । गिरिशेन देहं दग्ध्वा अपि रोषात् खण्डीकृता मनोभवस्य ज्या इव । देहे दग्धेऽपि रोषस्याशान्तत्वान्मौर्वी च शतशः खण्डिता इति भावः । मञ्जर्या उद्दीपनत्वमुत्प्रेक्षाहेतुः ॥

मनोज्ञगन्धं सहकारभङ्गं पुराणशीधुं नवपाटलञ्च ।
सम्बध्नता कामिजने स्वदोषास्सर्वे निदाघावधिना प्रमृष्टाः ॥५२॥

प्रका—मनोज्ञेति । सर्वेशेषश्चेदं विशेषणम् । सहकारभङ्गः सहकारमञ्जरीच्छेदः । पुराणः पर्युषितः । "पक्वैस्त्विक्षुरसैरस्त्री शीधु"रिति यादवः । सम्बध्नता त्रितयमन्योन्यं घटयता कामिनां किमिव नोपकृतमित्यर्थः । जन इति विषयसप्तमी । स्वदोषाः तृट्सन्तापादयः । अवधिः कालः ॥

पदा—मनोज्ञेति । सहकारभङ्गं पुराणशीधुं नवपाटलञ्च सम्बध्नता निदाघावधिना कामिजने सर्वे स्वदोषाः प्रमृष्टाः । सहकारभङ्गं सहकारमञ्जरीच्छेदम् । पुराणः पर्युषितश्शीधुः पुराणशीधुः । "पक्वैस्त्विक्षुरसैरस्त्रीशीधु" इति यादवः । सम्बध्नता एतत्त्रयं परस्परं सङ्घटयता । निदाघावधिना निदाघकालेन । कामिजन इति विषयसप्तमी । स्वदोषास्तृट्सन्तापस्वेदकरत्वादयः । वसन्ते हि शीधौ सहकारमञ्जरीं निधाय पीयते, न पाटलपुष्पम् । तदानीं तदभावात् । तस्मादेतत्त्रितयं परस्परं संयोजयता निदाघकालेन कामिजने किञ्चिन्नोपकृतमिति भावः । मनोज्ञगन्धमिति विशेषणं सर्वत्र योजनीयम् ॥

जनस्य तस्मिन् समये विगाढे बभूवतुर्द्वौ सविशेषकान्तौ ।
तापापनोदक्षमपादसेवौ स चोदयस्थो नृपतिः शशी च ॥५३॥

प्रका—जनस्येति । विगाढे प्रौढे । सविशेषं सातिशयम् । नायकस्य सविशेषकान्तत्वं तत्कालनेपथ्यविशेषरचनयेत्यवसेयम् । पादशब्देन चरणश्च विवक्षितः । उदयशब्देनाभ्युदयश्च ॥

पदा—जनस्येति । तस्मिन् समये विगाढे जनस्य द्वौ सविशेषकान्तौ बभूवतुः । विगाढे प्रवृद्धे । सविशेषं सातिशयं यथा भवति, तथा कान्तौ । "विशेषस्तु

ना भेदेऽतिशय" इति केशवः। कौ तावित्यत्राह— उदयस्थः स नृपतिः शशी चेति। उदयशब्दोऽभ्युदयवाची च। नृपतेस्तत्कालोचितनेपथ्यविरचनं द्विशेषकान्तत्वम्। तापापनोदे सन्तापहरणे क्षमा शक्ता पादसेवा चरणसेवा रश्मिसेवा च ययोः॥

अथोर्मिमालोन्मदराजहंसे रोधोलतापुष्पवहे सरय्वाः।
विहर्तुमिच्छा वनितासखस्य तस्याम्भसि ग्रीष्मसुखे बभूव ॥५४॥

**प्रका—**अथेति। सरय्वा अम्भसीत्यन्वयः। सुखेऽनुकूले॥

**पदा—**अथेति। अथ तस्य सरय्वा अम्भसि विहर्तुमिच्छा बभूव। तत्र हेतुमाह— ऊर्मिमालेत्यादिना। ऊर्मिमालासु उन्मदा उद्भूतमदाः राजहंसाः यस्य। रोधसिया लतास्तासां पुष्पाणि वहतीति तथा। वनितासखस्येत्यनेन ताभिस्सह विहारोऽपि विवक्षितः। ग्रीष्मेण सुखेऽनुकूले॥

स तीरभूमौ विहितोपकार्यामानायिभिस्तामपकृष्टनक्राम्।
विगाहितुं श्रीमहिमानुरूपं प्रचक्रमे चक्रधरप्रभावः ॥५५॥

**प्रका—**स इति। विहितोपकार्यामिति विहारानन्तरस्थित्यर्थम्। आनायिभिर्जालिकैः। "आनायः पुंसि जालं स्या"दिति सिंहः। अत्र कौटल्यः "मत्स्यग्राहविशुद्धमुदकमवगाहेते"ति। श्रीमहिमानुकूलं विभूतिप्रभावयोस्सदृशम्। अनेन जलक्रीडोपयोगिसमग्रद्रव्यसम्भरणमुक्तम्। चक्रधरप्रभाव इत्ययत्ननिर्वर्तितलोकतन्त्रतया क्रीडायामधिकार उक्तः॥

**पदा—**स इति। स श्रीमहिमानुरूपं तां विगाहितुं प्रचक्रमे। श्रीरैश्वर्यम्। महिमा प्रभावः। तयोरनुरूपं सदृशम्। क्रियाविशेषणञ्चैतत्। तीरभूमौ विहितोपकार्यां विरचितराजगृहाम्। विहारानन्तरस्थित्यर्थञ्चेदम्। आनायिभिः जालवद्भिः "आनायः पुंसि जालं स्या"दित्यमरः। अत्र कौटल्यः "मत्स्यग्राहविशुद्धमुदकमवगाहेते"ति। अपकृष्टा उत्सरिता नक्रा यस्याः। चक्रधरो विष्णुस्तस्य प्रभाव इव प्रभावो यस्य। अनायासनिवर्तितलोकतन्त्रत्वाद्विहाराधिकारीत्यर्थः॥

सा तीरसोपानपथावतारादन्योन्यकेयूरविघट्टिनीभिः।
सनूपुरक्षोभपदाभिरासीद्विग्नहंसा सरिदङ्गनाभिः ॥५६॥

**प्रका—**सेति। विविग्नहंसा भयचलितहंसा। ताः क्षुभिताभरणशोभिनीर्दृष्ट्वा सरिदपि स्वभूषणक्षोभं व्यधादिवेत्युत्प्रेक्षाध्वनिः॥

१ द्विद्वि।

पदा—सेति । सा सरिद् अङ्गनाभिरुद्विग्नहंसा आसीत् । अङ्गनाभिरिति हेतौ तृतीया । उद्विग्ना भयचलिता हंसा यस्याम । तीरसोपानपथावतारद् अन्योन्यकयूरवि-घट्टिनीभिः । सोपानपथावतरणे परस्परसम्मर्दवशात्परस्परमङ्गदमङ्घट्टयन्तीभिः । सनूपुर-क्षोभपदाभि नूपुरक्षोभसहितपदाभिः । क्षोभो गमनवशाच्चाञ्चल्यम् । तास्तथा दृष्ट्वा सरि-दपि स्वाभरणक्षोभं भयादिवेत्युत्प्रेक्षाध्वनिः ॥

परस्पराक्षेपणतत्पराणां तासां नृपो मज्जनरागदर्शी ।
नौसंश्रितः पार्श्वचरीं किरातीमुपात्तबालव्यजनां बभाषे ॥५७॥

प्रका—परस्परेति । आक्षेपणमाकर्षणम् । मज्जनरागो मज्जनाभिलाषः । किरा-तीं चामरग्राहिणीम् । "किरातस्त्वभिधेयवत्स्वल्पकायेऽथ रभसो भूनिम्बे पुंस्यथीतवान् । स्त्रियाञ्चामरवाहिन्यामन्त्यजात्यन्तरे द्वयो"रिति केशवः । उपात्तबालव्यजनामिति जल-क्रीडायामप्रवृत्तत्वेन निकटस्थत्वे हेतुः ॥

पदा—परस्परेति । नृपतिः नौसंश्रितः तासां मज्जनरागदर्शी पार्श्वचरीमुपात्त-बालव्यजनां किरातीं बभाषे । मज्जनरागो मज्जनाभिलाषः । किरातीं चामरवाहिनीम् । "किरातस्त्वभिधानवत् । स्वल्पकायेऽथ रभसो भूनिम्बे पुंस्यथीतवान् स्त्रियाञ्चामरवाहि-न्यामन्त्यजात्यन्तरे द्वयोः" इति केशवः । परस्परमभ्युक्षणे तत्पराणाम् । राजा जलक्री-डायां प्रवृत्तोऽपि तासां विहारदर्शनविलोभ्यमाननयनो वीजनं समाप्य समीपे बालव्य-जनं हस्ते कृत्वाऽवस्थितां किरातीमाबभाष इत्यर्थः ॥

पश्यावरोधैश्शतशो मदीयैर्विगाह्यमानो गलिताङ्गरागैः ।
सन्ध्योदयस्साभ्र इवैष वर्णं पुष्यत्यनेकं सरयूप्रवाहः ॥५८॥

प्रका—पश्येति । अनेकमित्यङ्गरागाणामनेकवर्णत्वात् । अभ्राणामच्छानच्छ-तादिभेदात्, तद्गतस्सन्ध्यारागोऽपि भिन्नप्रकारो भवतीति साभ्र इति विशेषणम् ॥

पदा—पश्येति । एष सरयूप्रवाहः साभ्रस्सन्ध्योदय इव अनेकं वर्णं पुष्यति प्राप्नोति । अभ्राणां केषाञ्चिदच्छत्वात्केषाञ्चिदनच्छत्वात्केषाञ्चिदीषदच्छत्वाच्च तद्गतस-न्ध्यारागोऽपि बहुविधं वर्णं प्राप्नोति इति साभ्र इति विशेषणम् । सरयूप्रवाहाणाञ्च बहु-विधवर्णावगाहे हेतुमाह—अवरोधैरित्यादिना । मदीयैः शतशः अवरोधैर्विगाह्यमानः । गलिताङ्गरागैः । अङ्गरागाणामनेकवर्णत्वात्सरयूप्रवाहस्यानेकवर्णत्वम् ॥

विलुप्तमन्तःपुरसुन्दरीणां यदञ्जनं नौलुलिताभिरद्भिः ।
तद्बध्नतीभिर्मदरागशोभां विलोचनेषु प्रतिमुक्तमासाम् ॥५९॥

१ राम्युक्षण ।

प्रका—विलुप्तमिति । हृतम् । नौलुठिनत्वमुत्तरङ्गत्वेनाञ्जनहरणे सामर्थ्यमुपपादयति । बध्नतीभिः कुर्वतीभिः । मदेन या रागशोभा ताम् । अञ्जनस्यापि कार्यभूतां कुर्वतीभिरद्भिः तदेवाञ्जनं प्रतिमुक्तमर्पितमिवासीदित्युत्प्रेक्षा । केचित्तु "असंशयन्यस्तमुपान्तरक्तता"मित्यादि च भारविवचनन्दृष्टवन्तोऽञ्जनस्य शोभाकरत्वमेवास्ति, न तु रागकरत्वमिति मन्यन्ते ॥

पदा—विलुप्तमिति । नौलुठिताभिरद्भिरन्तःपुरसुन्दरीणां यदञ्जनं विलुप्तं, मदरागशोभां बध्नतीभिस्तदासां विलोचनेषु प्रतिमुक्तम् । नौभिर्लुठिताभिः चालिताभिः अनेनोत्तरङ्गत्वादञ्जनहरणसामर्थ्यमुक्तम् । विलुप्तं हृतम् । मदेन या रागशोभा रागेण शोभा, तां बध्नतीभिः कुर्वतीभिः । अञ्जनस्यापि कार्यभूतां रागशोभां कुर्वतीभिः अद्भिस्तदेवाञ्जनमासां नेत्रेषु प्रत्यर्पितमिवासीदिति द्योतकशून्येयमुत्प्रेक्षा ॥

एता गुरुश्रोणिपयोधरत्वादात्मानमुद्वोढुमशक्नुवत्यः ।
गाढाङ्गदैर्बाहुभिरप्सु बालाः क्लेशोत्तरं रागवशात्प्लवन्ते ॥ ६० ॥

प्रका—एता इति । गुरुश्रोणिपयोधरत्वादित्यात्मनो विशेषणम् । न तु बालानाम् । द्वापोऽश्रवणात् । अङ्गदस्य गाढत्वं प्रतिसारितत्वाज्जलसम्बन्धाद्वा । रागो जलक्रीडाविषयः ॥

पदा—एता इति । एता बाला गाढाङ्गदैर्बाहुभिः रागवशादप्सु क्लेशोत्तरं प्लवन्ते । बाहूनां गाढाङ्गदत्वं पतनभयादूर्ध्वप्रसारितत्वात् । रागो जलक्रीडाविषयः । क्लेशोत्तरं क्लेशसहितम् । कुतः? गुरुश्रोणिपयोधरत्वात्, आत्मानमुद्वोढुमशक्नुवत्यः । आत्मनः श्रोणिपयोधरयोर्गौरवात् ॥

अमी शिरीषप्रसवावतंसाः प्रभ्रंशिनो वारिविहारिणीनाम् ।
पारिप्लवाः स्रोतसि निम्नगायाः शैवाललोलान् जनयन्ति मीनान् ॥ ६१ ॥

प्रका—अमी इति । शैवाललोलान् शैवालग्रहणव्याकुलान् । जनयन्ति कुर्वन्ति । स्वयं शैवालानुकारित्वाच्चलत्वाच्चेत्यर्थः । अत्र भ्रान्तिमानलङ्कारः "भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शिने" इति ॥

पदा—अमी इति । वारिविहारिणीनां प्रभ्रंशिनः शिरीषप्रसवावतंसाः अमी निम्नगायाः स्रोतसि पारिप्लवाः मीनान् शैवाललोलान् जनयन्ति । जलविहरणशीलतया प्रभ्रंशिनः शिरीषपुष्परूपाः शिरोलङ्काराः नदीप्रवाहे चञ्चलास्सन्तो मीनान् शैवालग्रहणव्याकुलान् कुर्वन्ति । शिरीषप्रसवानां स्वतः शैवालानुकारित्वाज्जलोपरि चञ्चलत्वाच्च तेषु शै-

बालबुद्ध्या तद्ग्रहणव्याकुलान् कुर्वन्तीत्यर्थः । अत्र भ्रान्तिमानलङ्कारः "भ्रान्तिमानन्यसंवित्तत्तुल्यदर्शने" ॥

आसां जलास्फालनतत्पराणां मुक्ताफलस्पर्द्धिषु शीकरेषु ।
पयोधरोत्सर्पिषु शीर्यमाणः संलक्ष्यते नच्छिदुरोऽपि हारः ॥ ६२ ॥

प्रका—आसामिति । पयोधरोत्सर्पिषु सत्स्विति शेषः । छिदुरः छेदनशीलः । "विदिभिदिच्छिदेः कुरच्" । कर्मकर्तरि प्रत्ययः । "छिदुरादयः कर्मकर्तरि चे"ति वामनः । स्वयमेवच्छिद्यमान इत्यर्थः । नच्छिदुरोऽच्छिदुरः । नैकशब्दवत् । अच्छिदुरोऽपि शीर्यमाणतया लक्ष्यत इत्यर्थः । अथवा केळिरभसच्छिदुरः, अत एव शीर्यमाणोऽपि तथा न लक्ष्यत इत्यर्थः ॥

पदा—आसामिति । मुक्ताफलस्पर्द्धिषु शीकरेषु जलास्फालनतत्पराणामासां पयोधरोत्सर्पिषु हारः छिदुरः अपि शीर्यमाणः न संलक्ष्यते । जलस्यास्फालनमाहननम् । इदञ्च पयोधरोत्सर्पणे हेतुः । एतच्चच्छिदुरस्यापि हारस्य शीर्यमाणत्वेनास्फुरणे हेतुः । छिदुरः छेदनशीलः । "विदिभिदिच्छिदेः कुरच्" । कर्मकर्तरि च प्रयोगः । "भिदुरादयः कर्मकर्तरि चे"ति वामनः । क्रीडारभसात्स्वयमेवच्छिद्यमान इत्यर्थः । अथवा अच्छिदुर एव नच्छिदुरः नैकशब्दवत् । अच्छिदुरोऽपि शीर्यमाणो लक्ष्यत इत्यर्थः ॥

आवर्तशोभा नतनाभिकान्तेर्भङ्गो भ्रुवां द्वन्द्वचराः स्तनानाम् ।
जातानि रूपावयवोपमानान्यदूरवर्तीनि विलासिनीनाम् ॥ ६३ ॥

प्रका—अवर्तेति । भङ्गस्तरङ्गः । द्वन्द्वचराश्चक्रवाकाः । रूपं शरीरम् । यानि पुरा दूरवर्तीनि विलासिनीनां प्रसिद्धानि शरीरावयवोपमानानि, तान्यद्य तेषामदूरवर्तीनि जातानीत्यर्थः । कस्य कस्य किञ्चिमित्याह—आवर्तशोभेत्यादि । दूरावयवोपमानानीति पठन्ति ॥

पदा—आवर्तेति । विलासिनीनां रूपावयवोपमानानि अदूरवर्तीनि जातानि । यानि पुरा विलासिनीनां शरीरावयवोपमानद्रव्याणि दूरवर्तितया प्रसिद्धानि, तानीदानीं समीपवर्तीनि जातानीत्यर्थः । कस्य कस्य किञ्चिमित्यत्राह—आवर्तेति । आवर्तशोभा नतनाभिकान्तेः समीपवर्तिनी, जातेति शेषः । भङ्गः भ्रुवाम् । भङ्गस्तरङ्गः । द्वन्द्वचराः स्तनानाम् । द्वन्द्वचराश्चक्रवाकाः ॥

तीरस्थलीबर्हिभिरुत्कलापैः प्रस्निग्धकेकैरभिनन्द्यमानम् ।
श्रोत्रेषु सम्मूर्छति रक्तमासां गीतानुगं वारिमृदङ्गवाद्यम् ॥ ६४ ॥

प्रका—तीरेति। बर्हिणान्तथाभावो मेघध्वनिप्रतीत्या। रक्तं रागयुतं, सुखश्रव्यमित्यर्थः। सम्मूर्छति अन्यथा चलायमानायां श्रोत्रप्रवृत्तौ नाभिव्याप्नुयात्। गीतानुगं गीतानुसारि। वार्येव मृदङ्गो वारिमृदङ्गः तेन वाद्यं वादनीयमक्षरजातं वारिमृदङ्गवाद्यम्। "वाद्यन्तु क्लीबमातोद्ये त्रिषु तैर्वादनीयके" इति केशवः॥

पदा—तीरेति। आसां वारिमृदङ्गवाद्यं श्रोत्रेषु सम्मूर्छति। वार्येव मृदङ्गो वारिमृदङ्गः तेन वाद्यं वादनीयमक्षरजातमत्र वारिमृदङ्गवाद्यमुच्यते। "वाद्यन्तु क्लीबमातोद्यं त्रिषु तैर्वादनीयके" इति केशवः। सम्मूर्छति अभिव्याप्नोति। तीरस्थलीबर्हिभिः अभिनन्द्यमानम्। मेघध्वनिप्रतीतिरत्र हेतुः। उत्कलापैरुल्क्षिप्तशिखण्डैः। प्रस्निग्धा मधुराः केका येषाम्। रक्तं रागयुक्तम्, सुखश्रव्यमित्यर्थः। गीतानुगं गीतानुसारि। गीताक्षराणामेव वाद्यमानत्वादित्थमुक्तम्। अत एव वारिमृदङ्गवाद्यमित्यक्षराणां ग्रहणम्॥

सन्दष्टवस्त्रेष्वबलानितम्बेष्विन्दुप्रकाशान्तरितोडुकल्पाः।
अमी जलापूरितसूत्रमार्गा मौनं भजन्ते रशनाकलापाः ॥ ६५॥

प्रका—सन्दष्टेति। वस्त्राणामार्द्रत्वात्सूक्ष्मत्वाच्च सन्दंशः। जलापूरितेति मौनहेतुः। सूत्रमार्गो मणिरन्ध्रम्। रशनाकलापाः काञ्चीभूषणानि। "कलापस्तु पुमानयम्। काञ्ची तूणीसमूहेषु भूषणे बर्हिबर्हके" इति केशवः। अथवा रशनायास्समूहविशेषवाचित्वादित्थमुक्तिः॥

पदा—सन्दष्टेति। अमी रशनाकलापा जलापूरितसूत्रमार्गा मौनं भजन्ते। कलापो भूषणम्। सूत्रमार्गो मणिरन्ध्रम्। किङ्किणीरन्ध्राणां जलापूरितत्वान्मौनम्। सन्दष्टवस्त्रेषु अबलानितम्बेषु इन्दुप्रकाशान्तरितोडुकल्पाः। वस्त्राणां सूक्ष्मत्वादार्द्रत्वाच्च नितम्बेषु सन्दंशः। तत्र वर्तमानत्वाच्चन्द्रातपान्तरितनक्षत्रतुल्याः॥

एताः करोत्पीडितवारिधारा दर्पात्सखीभिर्वदनेषु सिक्ताः।
वक्रेतराग्रैरलकैस्तरुण्यश्चूर्णारुणान् वारिलवान् वमन्ति ॥ ६६॥

प्रका—एता इति। वारिसेकाद्रक्षितमुखमण्डना वयमिति दर्पात् सखीजनं प्रति करोत्पीडितवारिधाराः पुनस्ताभिस्सखीभिर्निश्चयित्वा वदनेषु सिक्तास्सत्य एता जलसेकऋजुकृताग्रैरलकैश्चूर्णारुणान् वारिलवान्मुञ्चन्तीत्यर्थः॥

पदा—एता इति। दर्पात्करोत्पीडितवारिधाराः तरुण्य एतास्सखीभिर्वदनेषु सिक्ता वक्रेतराग्रैरलकैश्चूर्णारुणान् वारिलवान् वमन्ति। वारिसेकाद्रक्षितमुखमण्डना वयं, यूयन्तु न तथा इति दर्पात्सखीजनं प्रति कराभ्यामुत्पीडिता वारिधारा याभिस्तास्तथा।

पुनश्च ताभिस्सखीभिर्वञ्चयित्वा वदनेष्वेव सिक्तास्सत्यो जलसेकादृजुकृताग्रैरळकैरळकचूर्णा-हणान् वारिलवान् वमन्ति । एतासामळकाग्राज्जलकणाः पतन्तीत्यर्थः ॥

उद्बद्धकेशश्च्युतपत्रलेखो विश्लेषिमुक्ताफलपत्रवेष्टः ।
मनोज्ञ एव प्रमदामुखानामम्भोविहाराकुलितोऽपि वेषः ॥ ६७ ॥

प्रका—उद्बद्धेति । उद्ग्रथितकेशः । च्युता गळिता । विश्लेषी कर्णपाशात्, मुक्ताफलपत्रवेष्टो मौक्तिकताटङ्को यस्य ॥

पदा—उद्बन्धेति । प्रमदामुखानां वेषः अम्भोविहाराकुलितः अपि मनोज्ञ एव । आकुलितत्वं मनोज्ञत्वञ्च विशेषणैरह उद्बन्धेति । ऊर्ध्वं बन्धो यस्येति विग्रहः । उद्ग्रथितकेशः । च्युता गळिता पत्रलेखा यस्य । विश्लेषी कर्णपाशाद्विश्लेषवान् मुक्ताफलपत्रवेष्टो मौक्तिकताटङ्कः यस्य ॥

ततो नृपेणाधिगताः स्त्रियस्ता भ्राजिष्णुना सातिशयं विरेजुः ।
प्रागेव मुक्ता नयनाभिरामाः प्राप्येन्द्रनीलं किमुतोन्मयूखम् ॥ ६८ ॥

प्रका—एवमुद्दीपनवर्गानुसन्धानोद्दीपितरतेर्नेतुः स्वयं विहारमाह—तत इति । इन्द्रनीलोपमया तस्य पितृसवर्णत्वमुक्तम् । प्रागेवेत्यादि प्रतिवस्तुभूतं वाक्यद्वयात्मकमेकं वाक्यम् ॥

पदा—तत इति । ततः नृपेण अधिगताः ताः स्त्रियः सातिशयं विरेजुः । अधिगतास्सङ्गताः । नावमेवारुह्य समीपं प्राप्तेनेत्यर्थात् । भ्राजिष्णुना शोभाशीलेन । मुक्ताः प्राक् एव नयनाभिरामाः; उन्मयूखमिन्द्रनीलं प्राप्य किमुत । उन्मयूखम् उद्भूत-मयूखम् । इन्द्रनीलोपमया तस्य पितृसमानवर्णत्वमुक्तम् ॥

वर्णोदकैः काञ्चनशृङ्गसंस्थैस्तमायताक्ष्यः प्रणयादसिञ्चन् ।
तथागतः सोऽतितरां बभासे सधातुनिष्यन्द इवाद्रिराजः ॥ ६९ ॥

प्रका—वर्णेति । वर्णोदकं कुङ्कुमादिमिश्रणात्तद्वर्णमुदकम् । शृङ्गं जलविक्षेप-साधनम् । तथागतो वर्णोदकसिक्ततनुः ॥

पदा—वर्णेति । आयताक्ष्यः तं काञ्चनशृङ्गसंस्थैर्वर्णोदकैः प्रणयादसिञ्चन् । काञ्चनमयेषु शृङ्गेषु जलविक्षेपसाधनेषु संस्थितैः । कुङ्कुमादिमिश्रत्वात्तद्वर्णमुदकं वर्णोद-कम् । तथागतः सः अतितरां विरेजे । तथागतः वर्णोदकसिक्ततनुः । सधातुनिष्यन्दः अद्रिराज इव । धातुद्रवसहितो निष्यन्दो यस्य ॥



१ न्ध । २ शश्च्युत ।

तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरान्ताम् ।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्वाननुयातलीलः ॥ ७० ॥

प्रका—तेनेति । आकाशगङ्गायां रतिः क्रीडा यस्य ॥

पदा—तेनेति । अवरोधप्रमदासखेन तां सरिद्वरां विगाहमानेन तेन अप्सरोभिः वृतः आकाशगङ्गारतिः मरुत्वान् अनुयातलीलः । आसीदिति शेषः । आकाशगङ्गायां रतिः क्रीडा यस्य ॥

स नौविमानादवतीर्य रेमे विलोलमाल्यः सह ताभिरप्सु ।
स्कन्धावलम्बोद्धृतपद्मिनीकः करेणुभिर्वन्य इव द्विपेन्द्रः ॥ ७१ ॥

प्रका—विहारमासेवमानस्यातिप्रसङ्गमाह—स इति । नावो विमानरूपणं रामणीयकातिशयार्थम् । अवतीर्येति । इतःपूर्वं नौगतस्यैव विहार इति सूचयति । स्कन्धावलम्बा स्कन्धावलम्बिनी उद्धृता च पद्मिनी यस्य । वन्य इति विशृङ्खलत्वादि व्यङ्ग्यम् ॥

पदा—स इति । स नौविमानादवतीर्य ताभिः सह अप्सु रेमे । नावो विमानत्वरूपणं रमणीयत्वातिशयार्थम् । विलोला माला यस्य । वन्यः द्विपेन्द्रः स्कन्धावलम्बोद्धृतपद्मिनीकः करेणुभिः इव । स्कन्धावलम्बा स्कन्धावलम्बिनी उद्धृता च पद्मिनी पद्मं येन ॥

यत्कुम्भयोनेरधिगम्य रामः कुशाय राज्येन समन्दिदेश ।
तदस्य जैत्राभरणं विहर्तुरज्ञातपातं सलिले ममज्ज ॥ ७२ ॥

प्रका—यदिति । जैत्रं जयसाधनम् ॥

पदा—यदिति । रामः यत्कुम्भयोनेः अधिगम्य कुशाय राज्येन समं दिदेश, विहर्तुः तस्य तद् जैत्राभरणम् अज्ञातपातं सलिले ममज्ज । जैत्रं जयसाधनम् ॥

स्नात्वा यथाकाममसौ सदारस्तीरोपकार्यां गतमात्र एव ।
दिव्येन शून्यं वलयेन बाहुमुपोढनेपथ्यविधिर्ददर्श ॥ ७३ ॥

प्रका—स्नात्वेति । मात्रैवशब्दाभ्यां प्रसाधनादिव्यापारान्तरव्यवधानं व्यवच्छिद्यते । उपोढनेपथ्यविधिर्निकटीभूताकल्पविधिरिति स्मरणे हेतुः ॥

पदा—स्नात्वेति । असौ सदारः । यथाकामं स्नात्वा तीरोपकार्यां गतमात्र एव बाहुं दिव्येन वलयेन शून्यं ददर्श । प्रसाधनादिकार्यान्तरव्यवच्छेदार्थं मात्रशब्दैवशब्दौ ।

उपोढो निकटीभूतो नेपथ्यविधिराकल्पविधिर्यस्य। अलङ्कारप्रसङ्गादलङ्कारभूतस्य वलयस्य स्मरणमिति भावः॥

जयश्रियः संवननं यतस्तदामुक्तपूर्वं गुरुणा च यस्मात्।
सेहेऽस्य न भ्रंशमतो न लोभात्स तुल्यपुष्पाभरणो हि धीरः ॥ ७४ ॥

प्रका—जयेति। संवननम्। "वशक्रिया संवनन"मिति सिंहः। गुरुणा पित्रा। लोभात् किन्नेत्याह—स तुल्येति। अत्र हेतुः—धीर इति॥

पदा—जयेति। तज्जयश्रियः संवननं यतः, गुरुणा आमुक्तपूर्वञ्च यस्मात्, स अतः अस्य भ्रंशं न सेहे। लोभान्न। संवननं वशीकरणसाधनम्। "वशक्रिया संवनन"मित्यमरः। गुरुणा पित्रा। गुरुदत्तत्वमपि गौरवे हेतुः। ननु किन्न लोभात् नेत्याह—स तुल्यपुष्पाभरणो हीति। तत्र हेतुः—धीर इति॥

ततः समाज्ञापयदाशु सर्वानानायिनस्तद्विचये नदीष्णान्।
वन्ध्यश्रमास्ते सरयूं विगाह्य तमूचुरम्लानमुखप्रसादाः ॥ ७५ ॥

प्रका—तत इति। नदीपूर्वात्स्नातेः "आतोऽनुपसर्गे कः" इति कप्रत्ययः। "निनदीभ्यां स्नातेः कौशले" इति षत्वम्। अम्लानेति पाठे स्वनष्टच्छायत्वेन भविष्यदभ्युदयसूचनमिति वल्लभः॥

पदा—तत इति। ततः स तद्विचये सर्वान् आनायिनः आशु समाज्ञापयत्। तस्य विचये अन्वेषणे। आनायिनो जालिकान्। नदीशब्दपूर्वात् "ष्णा शौचे" इत्यस्माद्धातोः "आतोऽनुपसर्गे कः" इति कप्रत्ययः। "निनदीभ्यां स्नातेः कौशल" इति षत्वम्। ते सरयूं विगाह्य वन्ध्यश्रमाः तमूचुः। वन्ध्यश्रमाः निष्फलश्रमाः। अम्लानो मुखप्रसादो येषाम्। वलयलाभाभावेऽपि तस्य परमार्थज्ञानान्मुखप्रसादः॥

कृतः प्रयत्नो न च देव! लब्धं मग्नं पयस्याभरणोत्तमन्ते।
नागेन नूनं कुमुदेन लौल्यादुपात्तमन्तर्ह्रदवासिना तत् ॥ ७६ ॥

प्रका—कृत इति। चकार एकवाक्यसूचनार्थः। यत्ने कृतेऽपि न लब्धमित्यर्थः। पयस्येव मग्नस्य लाभानुपपत्त्याऽर्थान्तरकल्पनं—नागेनेति। स च सन्निकृष्टो लोलुश्चेत्यर्थः। फणिनो हि रत्नप्रिया इति हि प्रसिद्धिः॥

पदा—कृत इति। देव! प्रयत्नः कृतः। प्रकृष्टो यत्नोऽस्माभिः कृतः। पयसि मग्नन्ते आभरणोत्तमं न लब्धञ्च। यत्ने कृतेऽपि न लब्धमित्यर्थः। मुखप्रसादसूचित-

मर्थमाह—तदन्तर्ह्रदवासिना कुमुदेन नागेन लोभादुपात्तं नूनमिति। कुमुद इति नागस्य तस्य नाम। अत्र सन्निहितस्स एव तस्यापहर्तेति मन्यामह इत्यर्थः। रत्नप्रिया भुजङ्गा इति च प्रसिद्धम् ॥

ततस्स कृत्वा धनुराततज्यं धनुर्धरः कोपविलोहिताक्षः।
गारुत्मतं तीरगतस्तरस्वी भुजङ्गनाशाय समाददेऽस्त्रम् ॥ ७७ ॥

प्रका—तत इति। तीरगत इति उपकार्याया विनिष्क्रान्त इत्यर्थः। तरस्वी बली ॥

पदा—तत इति। ततः तीरगतः स धनुः आततज्यं कृत्वा भुजङ्गनाशाय गारुत्मतमस्त्रं समाददे। तीरगतः उपकार्यायास्तीरप्रदेशं गत इत्यर्थः। गरुत्मान् देवताऽस्येति गारुत्मतम्। धनुर्धरः एकधनुर्धर इत्यर्थः। कोपेन विलोहिते अक्षिणी यस्य। तरस्वी बलवान् ॥

तस्मिन् ह्रदः संहितमात्र एव क्षोभात्समाविद्धतरङ्गहस्तः।
रोधांसि भिन्दन्नवपातमग्नः करीव वन्यः परुषं ररास ॥ ७८ ॥

प्रका—तस्मिन्निति। अस्त्रे संहितमात्र एवेति आकर्षणादिक्रियानन्तर्यं व्यवच्छिद्यते। क्षोभाद्रोधांसि भिन्दन्नित्यन्वयः। समाविद्धा उदस्ताः। अवपातो गजग्रहणगर्तः। "अवपातस्तु हस्त्यर्थो गर्तश्छन्नस्तृणादिने"ति यादवः ॥

पदा—तस्मिन्निति। तस्मिन् संहितमात्र एव ह्रदः परुषं ररास। तस्मिन्नस्त्रे। मात्रशब्दैवशब्दाभ्यामाकर्षणादिक्रियान्तरं व्यवच्छिनत्ति। ररास शब्दितवान्। अवपातमग्नः वन्यः करीव। अवपातो गजग्रहणगर्तः। "अवपातस्तु हस्त्यर्थो गर्तश्छन्नस्तृणादिना" इति यादवः। क्षोभाद्रोधांसि भिन्दन्। क्षोभश्चाञ्चल्यं कोपश्च। समाविद्धा उदस्ताः तरङ्गहस्ता येन ॥

तस्मात्समुद्रादिव मथ्यमानादुद्वृत्तनक्रात्सहसोन्ममज्ज।
लक्ष्म्येव सार्धं सुरराजवृक्षः कन्यां पुरस्कृत्य भुजङ्गराजः ॥ ७९ ॥

प्रका—तस्मादिति। उद्वृत्तनक्रादित्युपमाङ्गम् ॥

पदा—तस्मादिति। भुजङ्गराजः कन्यां पुरस्कृत्य तस्मादुन्ममज्ज। कन्यां स्वसुतां कुमुद्वतीम्। सुरराजवृक्षो मथ्यमानात्समुद्राल्लक्ष्म्या सार्धमिव। सुरराजानां वृक्षः कल्पतरुः। उद्वृत्ता अस्त्रप्रभावान्मथनाच्च व्याकुला नक्रा यस्मिन् ॥

१ स्यभिन्न।

विभूषणप्रत्युपहारहस्तमुपस्थितं वीक्ष्य विशाम्पतिस्तम् ।
सौपर्णमस्त्रं प्रतिसञ्जहार प्रह्वेष्वनिर्बन्धरुषो हि सन्तः ॥ ८० ॥

प्रका—विभूषणेति । विभूषणञ्च तत्प्रत्युपहारश्चेति विभूषणप्रत्युपहारः । स हस्ते यस्य । प्रतिविधानरूप उपहारः प्रत्युपहारः । अनिर्बन्धरुष इति बहुव्रीहिगर्भो बहुव्रीहिः ॥

पदा—विभूषणेति । विशाम्पतिः तं विभूषणप्रत्युपहारहस्तमुपस्थितं वीक्ष्य सौपर्णमस्त्रं प्रतिसञ्जहार । विभूषणञ्च तत् प्रत्युपहारश्चेति विभूषणप्रत्युपहारः । स हस्ते यस्य । प्रतिविधानरूप उपहारः प्रत्युपहारः । सुपर्णोऽस्य देवतेति सौपर्णम् । "सुपर्णः पन्नगाशनः" इत्यमरः । सन्तः प्रह्वेष्वनिर्बन्धरुषः हि । प्रह्वेषु प्रणतेषु । अनिर्बन्धा निर्बन्धरहिता रुट् कोपो येषाम् । नितरां बन्धो निर्बन्धः । स्थिरतेति यावत् ॥

त्रैलोक्यनाथप्रभवं प्रभावात्कुशं द्विषामङ्कुशमस्त्रविद्वान् ।
मानोन्नतेनाप्यभिवन्द्य मूर्ध्ना सुधावसिक्तं कुमुदो बभाषे ॥ ८१ ॥

प्रका—त्रैलोक्येति । प्रभावाद्द्विषामङ्कुशमित्यन्वयः । अस्त्रविद्वान् तदस्त्रबलाभिज्ञः । सुधावसिक्तं सुधया आलोकेन नृपं सिञ्चन्तमित्यर्थः । सुधा नागानामशनम् । मूर्धाभिषिक्तमिति वा पाठः । अत्र कर्तृकर्मविशेषणानि वन्दनमुपपादयन्ति । अङ्कुशवस्त्विति प्रसिद्धपाठः । स च दूषितो महिम्ना वल्लभेन च ॥

पदा—त्रैलोक्येति । कुमुदः मूर्ध्ना कुशमभिवन्द्य बभाषे । तस्य मूर्ध्नः को विशेष इत्यत आह—मानोन्नतेनापीति । इतः परत्र कुत्राप्यनतेनापीत्यर्थः । कर्तृकर्मविशेषणैर्वन्दनीयत्वमेवोपपादयति । त्रैलोक्येति । त्रैलोक्यनाथात्प्रभव उद्भवो यस्य । प्रभावाद्द्विषामङ्कुशमङ्कुशवदहङ्कारहरम् । अस्त्रविद्वान् अस्त्रबलाभिज्ञः । मूर्धाभिषिक्तं चक्रवर्तिनम् ॥

अवैमि कार्यान्तरमानुषस्य विष्णोः सुताख्यामपरान्ततनुं त्वाम् ।
सोऽहं कथं नाम तवाचरेयमाराधनीयस्य धृतेर्विघातम् ॥ ८२ ॥

प्रका—अवैमीति । अन्तरशब्दो विशेषपर्यायः । स इति तथा जानन् । धृतिः प्रीतिः ॥

पदा—अवैमीति । अहन्त्वां कार्यान्तरमानुषस्य विष्णोः सुताख्यामपरान्ततनुमवैमि । कार्यान्तरात्कार्यविशेषाद्धेतोर्मानुषस्य दशग्री निग्रहस्य मनुष्यमात्रसाध्यत्वादाह-

१ मूर्धाभिषि ।

तमानुषवेषस्य । त्वं साक्षाद्विष्णुरेव "यस्माज्जातस्स एव स" इति वचनादिति भावः। सोऽहं तव धृतेर्विघातं कथं नामाचरेयम् । स तथाविजानन्नित्यर्थः । धृतेः प्रीतेः। "धृङ् प्रीता"विति धातुः । "स्त्रियां क्तिन्" । आराधनीयस्य पूज्यस्य ॥

करामिघातोत्थितकन्दुकेयमालोक्य बाला तु कुतूहलेन ।
[1]ओघात्पतज्ज्योतिरिवान्तरिक्षादादत्त जैत्राभरणं त्वदीयम् ॥ ८३ ॥

प्रका—कुतस्तर्हि प्राप्तमेतदाभरणमित्याह—करेति । इयन्त्वादत्तेत्यन्वयः। तु-शब्देन तस्याः पुनरुचितमेतदिति द्योतयति । इयन्तु कन्दुकानुसारिदृष्टिः प्रवाहादधो भ्रश्यत्त्वदीयं जैत्राभरणं बाल्यात्किमेतदिति कुतूहलेनाग्रहीद् अन्तरिक्षाच्च्युतन्नक्षत्रमिवे-त्यर्थः ॥

पदा—करेति । इयं बाला त्वदीयं जैत्राभरणमालोक्य कुतूहलेन आदत्त । कुतूहलेन किमेतमिति कौतुकात् । कराभिघातेन कराभिहननेन उत्थितमुद्गतं कन्दुकं यस्याः । कन्दुकानुसारेणोर्ध्वं विक्षिप्तचक्षुरित्यर्थः । अन्तरिक्षाज्ज्योतिरिव ओघात्पतत् । यथाऽन्तरिक्षान्नक्षत्रं पतति, तथा जलप्रवाहात्पतत् । उपमया कुतूहलहेतुरुक्तः ॥

तदेतदाजानुविलम्बिना ते ज्याघातरेखास्थिरलाञ्छनेन ।
भुजेन रक्षापरिघेण भूमेरुपैतु योगं पुनरंसलेन ॥ ८४ ॥

प्रका—तदिति । ज्याघातरेखैव स्थिरं लाञ्छनं यस्य । परिघ आयुधविशेषः, अर्गळा वा । अंसळेन पीवरेण । विशेषणानि तस्यैतद्योगयोग्यताहेतवः ॥

पदा—तदिति । तदेतत्पुनः ते करेण योगमुपैतु । यदनया बाल्यादुपात्तं, तज्जैत्राभरणम् । पुनः पुनरपीत्यर्थः । यस्मादज्ञानादेवोपात्तं तस्माद्वा । ज्याघातरेखैव स्थिरं लाञ्छनं यस्य । परिघ आयुधविशेषः अर्गळा वा । अंसळेन पीवरेण । अयमेव बाहुरेतदाभरणक्षम इति विशेषणैर्द्योत्यते ॥

इमां स्वसारञ्च यवीयसीं मे कुमुद्वतीं नार्हसि नानुमन्तुम् ।
आत्मापराधं नुदतीञ्चिराय शुश्रूषया पार्थिव ! पादयोस्ते ॥ ८५ ॥

प्रका—एतदपि त्वया न प्रत्याख्येयमित्याह—इमामिति । मे स्वसारमित्य-भिजनोक्तिः । यवीयसीमिति वयोऽनुरूपत्वम् । अतिशयेन युवतिर्यवीयसी । "स्थूल-दूरे"त्यादिना गुणो यणादिपरलोपश्च । नुदतीमनुमन्तुमर्हसीत्यन्वयः ॥

१ जला।

पदा—इमामिति। पार्थिव! त्वं मे स्वसारमिमां कुमुद्वतीं ते पादयोः चिराय शुश्रूषया आत्मापराधं नुदतीमनुमन्तुं न नार्हसि च। चिरकालकृतेन तव चरणपरिचरणेन निजापराधं परिहरन्तीमनुमन्तुमत्यर्थमर्हसि चेत्यर्थः। यवीयसीमतिशयेन युवतिम्। "स्थूलदूरे"त्यादिना गुणो वलोपश्च। अनेन वयोनुरूपत्वमुक्तम्॥

इत्यूचिवानुपहृताभरणः क्षितीशं
श्लाघ्यो भवान् स्वजन इत्यभिभाषितारम्।
[1]तं योजयां विधिवदास समेतबन्धुः
कन्यामयेन कुमुदः कुलभूषणेन ॥८६॥

प्रका—इतीति। स्वजनो बन्धुः। आसेति व्यवहितप्रयोगश्चिन्त्यः। विधिवद्यथाशास्त्रम्। समेतबन्धुरिति विवाहधर्मः॥

पदा—इतीति। कुमुदः इति ऊचिवान् उपहृताभरणः तं नृपतिं योजयामास। आसेति व्यवहितानुप्रयोगश्चिन्त्यः। भवान् श्लाघ्यः स्वजन इति अभिभाषितारम्। स्वजनो बन्धुः। समेतबन्धुत्वं विवाहाङ्गम्॥

तस्याः स्पृष्टे मनुजपतिना साहचर्याय हस्ते
मङ्गल्योर्णावलयिनि पुरः पावकस्योच्छिखस्य।
दिव्यस्तूर्यध्वनिरुदचरद्व्यश्नुवानो दिगन्तान्
गन्धोदग्रं तदनु ववृषुः पुष्पमाश्चर्यमेघाः ॥८७॥

प्रका—तस्या इति। साहचर्यायेति प्राजापत्यो विवाह उक्तः। "सह धर्मं चरतेति प्राजापत्य" इत्याश्वलायनः। मङ्गल्योर्णावलयिनि मङ्गलार्थकौतुकवलयिनि। "ऊर्णा भ्रूमध्यगावर्ते तन्तौ मेषादिलोमनि"ति यादवः। आश्चर्यत्वं पुष्पवर्षित्वात्। अत्र पूर्वार्धे विशेषणैः पाणिग्रहणस्याविकलत्वं सन्तानप्रवृत्तिहेतुभूतमुक्तम्। सन्तानप्रवृत्तिश्च भाविनी दिव्यतूर्यवर्षाभ्यां सूच्यते॥

पदा—तस्या इति। मनुजपतिना साहचर्याय उच्छिखस्य पावकस्य पुरः तस्याः हस्ते स्पृष्टे दिव्यः तूर्यध्वनिः उदचरत्। मनुजपतिर्नरपतिः। साहचर्याय सहधर्मचरणाय। अनेन प्राजापत्योऽयं विवाह इति सूचितम्। "सह धर्मं चरत इति प्राजापत्य" इत्याश्वलायनगृह्यम्। मङ्गल्योर्णावलयिनि मङ्गल्यार्थकौतुकतन्तुवलयिनि। "ऊर्णा भ्रूमध्यगावर्ते तन्तौ मेषादिलोमनि"ति यादवः। तदनु आश्चर्यमेघाः पुष्पं ववृषुः। मेघा-

१ संयो।

नामाश्चर्यत्वं पुष्पवर्षित्वम् । गन्धेनोदग्रमुत्कृष्टम् । अत्र मुनिमितैरचिरेण सन्तानोद्भवः, तस्य दिव्यत्वञ्च सूचितम् ॥

इत्थन्नागस्त्रिभुवनगुरोरौरसं मैथिलेयं
लब्ध्वा बन्धुं तमपि च कुशः पञ्चमन्तक्षकस्य ।
एकश्शङ्कां पितृवधरिपोरत्यजद्वैनतेया-
च्छान्तव्यालामवनिमपरः पौरकान्तश्शशास ॥ ८८ ॥

प्रका—इत्थमिति । "औरसो धर्मपत्नीज" इति याज्ञवल्क्यः । अत्रोपपादकं मैथिलेयमिति । तक्षकस्य पञ्चममित्यत्र कथा मृग्या । पितृवधरिपोः गरुडस्य पितरं काश्यपं दष्टवांस्तक्षक इति प्रसिद्धमिति दक्षिणावर्तः । अहिवररिपोरिति पाठो वल्लभस्य। शान्तव्यालामुपरतप्रजापीडनसर्पाम् । पौरशब्दः प्रजोपलक्षणम् । प्रजाक्षेमप्रधान इत्यर्थः। तयोरित्यध्याहारः । तयोरेको नागस्तं बन्धुं लब्ध्वा वैनतेयाच्छङ्कामत्यजदित्येकं वाक्यम्। अपरः कुश इत्यर्थात् । इत्थं योजनायां व्याकीर्णवाक्यत्वमेकापरशब्दयोर्वैयर्थ्यमध्याहारदोषश्च । तस्मात् क्त्वः श्रवणादसमाप्तेऽपि समाप्तकल्पे पूर्वार्धवाक्ये नागकुशयोर्यः समुदायो निर्दिष्टस्ततः पृथक्करणमेकापरशब्दाभ्यां क्रियते । यथा "इत्थं तयोरध्वनि दैवयोगा"दित्यादौ । तत्र तु निर्धारणे षष्ठी श्रूयते इति चेदत्रापि तथा वाक्ये विपरिणामः कर्तव्यः इत्थं बन्धुं लब्धवतोः नागस्य कुशस्य चेति ॥

**इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां षोडशः सर्गः ॥**

पदा—इत्थमिति । नागः इत्थं त्रिभुवनगुरोः औरसं मैथिलेयं, कुशस्तक्षकस्य पञ्चमं तमपि च बन्धुं लब्ध्वा एकः पितृवधरिपोः वैनतेयात् शङ्कामत्यजत् । अपरः अवनिं शान्तव्यालां शशास । त्रिभुवनगुरुर्विष्णुः "औरसो धर्मपत्नीज" इति याज्ञवल्क्यः। औरसत्वमेवोपपादयति—मैथिलेयमिति । तक्षकस्य पञ्चमं पौत्रपौत्रम् । अत्र कथा मृग्या। पितृवधरिपोः । गरुडस्य पितरं काश्यपं तक्षको दष्टवानिति प्रसिद्धमिति दक्षिणावर्तः । वल्लभः पुनरहिवररिपोरिति पाठमादृतवान् । अरुणाचलनाथेन तु किमपि नोक्तम् । शान्तव्यालां प्रजोपद्रवव्यापाररहितसर्पाम् । पौरकान्तः, पौरशब्दः प्रजानामप्युपलक्षणार्थः । प्रजाक्षेमप्रधान इत्यर्थः । शान्तव्यालत्वेन सन्तुष्ट इत्यर्थः ॥

**इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ रघुवंशव्याख्यायां पदार्थदीपिकायां षोडशः सर्गः ॥**

# सप्तदशः सर्गः ।

अतिथिन्नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥ १ ॥

प्रका—अथास्य कुमारोदयमाह—अतिथिमिति । चेतना बुद्धिः । बुद्धिप्रसादे वामनः "रात्रियामस्तुरीयः काल" इति । पुत्रस्याविकलपुरुषार्थसाधकतां वर्णयिष्यमाणामभिप्रेत्य चेतनाप्रसाद उपमानीकृतः ॥

पदा—अथास्य कुमारोदयमाह—अतिथिमिति । कुमुद्वती काकुत्स्थादतिथिन्नाम पुत्रमाप । चेतना पश्चिमाद्यामिनीयामात्प्रसादमिव । चेतना बुद्धिः । यामिन्या अन्त्यो यामो बुद्धिप्रसादकाल इति प्रसिद्धम् । अत्र वामनः—"रात्रियामस्तुरीयः काल" इति । "अपररात्रप्राप्तबुद्धिप्रसादाः कवय इव महीपाश्चिन्तयन्त्यर्थजात"मिति माघश्च ॥

स पितुः पितृमान् वंशं मातुश्चानुपमद्युतिः ।
अपुनात्सवितेवोभौ मार्गावुत्तरदक्षिणौ ॥ २ ॥

प्रका—पूर्वैश्च पूर्वराजर्षिचरितेषु खण्डशो दर्शितमपि राजविद्यासतत्त्वमेकप्रघट्टकेन व्युत्पाद्यानां हृदि निवेशयितुमस्मिन् सर्गे साकल्येन दर्शयिष्यंस्तदधिष्ठानभूतस्यातिथेः श्लोकद्वयेन विनयमाह—स इति । पितृमान् प्रशस्तपितृकः । अत्र विशेषणाभ्यां स्वाभाविकविनय उक्तः ॥

पदा—अथास्य नयशास्त्रप्रयोगं विस्तरेण वर्णयिष्यंस्तदधिष्ठानत्वेन कृतकस्वाभाविकभिन्नं विनयं वर्णयति श्लोकद्वयेन । तत्र प्रथमं स्वाभाविकं विनयमाह—स इति । सः पितुः मातुः च वंशमपुनात् शुद्धमकरोत् । "पूञ् पवने" इति धातोर्लङ् । पितृमानिति प्रशंसायां मतुप् । अनुपमा अन्योपमारहिता द्युतिः सत्त्वोत्कर्षजनिता शोभा यस्य । अनेन विशेषणद्वयेन स्वाभाविकविनय उक्तः । अत्रोपमामाह—सविता उत्तरदक्षिणावुभौ मार्गाविव । सविता सूर्यः । उत्तरमुत्तरदिग्भवम् । दक्षिणं दक्षिणदिग्भवम् । तथाभूतौ मार्गौ । उत्तरायणदक्षिणायनरूपाविति यावत् ॥

तमादौ कुलविद्यानामर्थमर्थविदां वरः ।
पश्चात्पार्थिवकन्यानां पाणिमग्राहयत्पिता ॥ ३ ॥



१ तं प्राप ।

प्रका—कृतकमाह—तमिति। कुलविद्या आन्वीक्षिक्यादयः। तमर्थमग्राहयदिति। "नीवह्योरर्थेतेश्चे"ति चकाराद्द्विकर्मकत्वम्। यथाह भारविः—"अमृतमम्बुनिधिं ममन्थ" इतीति वल्लभः। पूर्वार्धे ग्रहेर्बुद्ध्यर्थत्वात्तमिति द्वितीया। उत्तरार्धे तु तेनेत्यद्ध्याहार्यम्। "गतिबुद्धिप्रत्यवसाने"ति सूत्रे ग्रहेरनुपादानाद्द्वितीयाभाव इति दक्षिणावर्तः। परिणयनेन यौवराज्ययोग्यं वयो दर्शितम्॥

पदा—कृतकविनयमाह—तमिति। पिता तमादौ कुलविद्यानामर्थमग्राहयत्। आदौ बाल्ये। कुलोचितानां विद्याना"मान्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती"त्यादीनाम्। अग्राहयदित्यत्र ग्रहेर्बुध्यर्थत्वा"द्गतिबुद्धी"त्यादिना द्विकर्मकत्वम्। आन्वीक्षिक्यादीनामर्थं मीमांसाशास्त्रानुसारेण ज्ञापयामासेत्यर्थः। अनेन कृतको विनयः प्रतिपादितः। वक्ष्यमाणानान्नयशास्त्रानुगुणानां प्रवृत्तीनामुपपत्तिश्च दर्शिता। यौवनोचितां प्रवृत्तिमाह—पश्चादिति। पश्चात्पार्थिवकन्यानां पाणिम्। अग्राहयदित्यनुषज्यते। तेनेत्यर्थात्सिद्ध्यति। पार्थिवकन्यानां पाणिं तेन ग्राहयामासेत्यर्थः। अर्थविदां कार्यज्ञानां वरः श्रेष्ठः॥

जात्यस्तेनाभिजातेन शूरः शौर्यवता कुशः।
अमन्यतैकमात्मानमनेकं वशिना वशी ॥ ४ ॥

प्रका—जात्य इति। जात्योऽभिजातः। एकममन्यत। अतिसादृश्यादात्मानं तेनाभिन्नं बुबुध इति वल्लभः। एकान्ते वशिनेति च तस्य पाठः। दक्षिणावर्तस्य तु अनेकं वशिनेति पाठः। व्याख्यानञ्च स्वरूपेण सदृशपुत्ररूपेण चैकमप्यात्मानमनेकममन्यतेत्यर्थः इति। अनेनात्मसम्पद्वचनेन भङ्ग्या यौवराज्याभिषेक उक्तः। "आत्मसम्पन्नं सैनापत्ये यौवराज्ये वा स्थापये"दिति वचनात्॥

पदा—जात्य इति। कुशः तेनैकमात्मानमनेकममन्यत। स्वसदृशपुत्रलाभेन एकमप्यात्मानमनेकममन्यतेत्यर्थः। पुत्र आत्मसदृश एवाभूदित्यर्थः। अन्योन्यसादृश्यमेवाह—जात्य इत्यादिना। जात्योऽभिजातः। अभिजातेनाभिजात्यवता। शूरः शौर्यवान् शौर्यवता शूरेण। वशी जितेन्द्रियः। अनेनात्मसम्पन्नत्वमुक्तम्। तेन च यौवराज्याभिषेको दर्शितः। "आत्मसम्पन्नं यौवराज्ये सैनापत्ये वा स्थापयेदि"ति न्यायात्॥

स कुलोचितमिन्द्रस्य साहायकमुपेयिवान्।
जघान समरे दैत्यमजय्यन्तेन चावधि ॥ ५ ॥

प्रका—अथ त्रिभिः श्लोकैः कुशकुमुद्वत्योश्चरितमुपसंहरति—स इति। स कुशः। कुलोचितं कुलाभ्यस्तम्। साहायकं सहायकर्म। "योपधाद्गुरूपोत्तमाद्वुञ्" इति वुञ्। अवधि अहन्यत॥

पदा—स इति। स इन्द्रस्य साहायकमुपेयिवान् समरे दैत्यञ्जघान। स कुशः। साहायकं सहायकर्म। "योपधाद्गुरूपोत्तमाद्वुञ्" इति वुञ्। उपेयिवान् प्राप्तस्सन्। कुलोचितमिति साहायकविशेषणम्। कुलाभ्यस्तमित्यर्थः। अजय्यमन्यैर्जेतुमशक्यम्। "जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके" इत्यमरः। तेन अवधि च। तेन दैत्येन। अवधी अहन्यत। अवधीति हन्धातोः कर्मणि लुङि वधादेशे रूपम्। उभयोरपि समकालमेव प्राणनिर्गमो जात इति भावः॥

तं स्वसा नागराजस्य कुमुदस्य कुमुद्वती।
अन्वगात्कुमुदानन्दं शशाङ्कमिव कौमुदी ॥ ६ ॥

प्रका—तमिति। कुमुदानन्दमित्युभयविशेषणम्। "कर्मण्यण्"॥

पदा—तमिति। कुमुदस्य नागराजस्य स्वसा कुमुद्वती तमन्वगाद् अनुगतवती। कौमुदी शशाङ्कमिव। कौमुदी चन्द्रिका। कुमुदं नागराजं कैरवञ्चानन्दयतीति कुमुदानन्दः तम्। "कर्मण्यण्"॥

तयोर्दिवस्पतेरासीदेकः सिंहासनार्धभाक्।
द्वितीयापि सखी शच्याः पारिजातांशभागिनी ॥ ७ ॥

प्रका—तयोरिति। दम्पत्योः दिवस्पतेरिन्द्रस्य। अनेनाभ्युदयावसानत्वमुक्तम्॥

पदा—तयोरिति। तयोरेकः दिवस्पतेः सिंहासनार्धभागासीत्। तयोरिति निर्धारणे षष्ठी सप्तमी वा। दिवस्पतेरिन्द्रस्य। सिंहासनस्यार्धभाग् अर्धं भजतीत्यर्धभाक्। "अर्धं समेंऽशके" इत्यमरः। द्वितीया अपि शच्याः सखी। आसीदित्यनुषङ्गः। पारिजातांशस्य भागिनी भजनशीला। "सम्पृचे" इत्यादिना घिनुण्। अत्र ताच्छील्यवाचिना प्रत्ययेन पारिजातपुष्पैर्नित्यसम्बन्ध उक्तः॥

तदात्मसम्भवं राज्ये मन्त्रिवृद्धास्समादधुः।
स्मरन्तः पश्चिमामाज्ञां भर्तुः सङ्ग्रामयायिनः ॥ ८ ॥

प्रका—अथातिथेर्लाभप्रकारपुरस्सरं लब्धप्रशमनं वर्णयति—तदात्मेति । समादधुः सम्यगर्पयामासुः । पश्चिमामन्तिमामाज्ञां यद्यहं सङ्ग्रामे संस्थितस्स्यां, तदानीमयमभिषेक्तव्य इति ॥

पदा—तदात्मेति । मन्त्रिवृद्धाः तदात्मसम्भवं तस्यात्मसम्भवं पुत्रं राज्ये समादधुः सम्यगादधुः प्रतिष्ठापयामासुः । सङ्ग्रामयायिनः भर्तुः पश्चिमामाज्ञां स्मरन्तः । पश्चिमामन्त्याम् । आज्ञां यद्यहं युधि तेन निहतस्स्यां, तदानीमेवायमभिषेक्तव्य इत्येवंरूपाम् ॥

ते तस्य कल्पयामासुरभिषेकाय शिल्पिभिः ।
विमानं नवमुद्वेदि चतुस्तम्भप्रतिष्ठितम् ॥ ९ ॥

प्रका—तत्प्रकारमाह—त इति । उद्वेदि उन्नतवेदिकम् ॥

पदा—आधानप्रकारमाह—त इत्यादिना । ते तस्य अभिषेकाय शिल्पिभिः नवं विमानं कल्पयामासुः । शिल्पिभिः प्रयोज्यकर्तृभिः कारुभिः विमानं मण्डपमित्यर्थः । विमानपदप्रयोगेणौन्नत्यरमणीयत्वादयो द्योत्यन्ते । उन्नता वेदिर्यस्य तदुद्वेदि । चतुर्षु स्तम्भेषु प्रतिष्ठितमवस्थितम् । अन्तर्भावितण्यर्थो वा प्रयोगः । प्रतिष्ठापितमित्यर्थः ॥

तत्रैनं हेमकुम्भेषु सम्भृतैस्तीर्थवारिभिः ।
उपतस्थुः प्रकृतयो भद्रपीठोपवेशिनम् ॥ १० ॥

प्रका—तत्रेति । भद्रपीठं सिंहासनम् ॥

पदा—तत्रेति । प्रकृतयः तत्र भद्रपीठोपवेशिनमेनं हेमकुम्भेषु सम्भृतैः तीर्थवारिभिः उपतस्थुः । तत्र विमाने । भद्रपीठं सिंहासनम् । तत्रोपवेष्टुं शीलमस्येति तथा । सम्भृतैः सम्पादितैः । तीर्थजलमुपायनीकृत्य सिषेविरे ॥

नदद्भिः स्निग्धगम्भीरं तूर्यैराहतपुष्करैः ।
अन्वमीयत कल्याणं तस्याविच्छिन्नसन्ततेः ॥ ११ ॥

प्रका—नदद्भिरिति । पुष्करं वाद्यमुखम् । कल्याणमिति अत्र शकुनार्णववचनम् । "सूचयन्ति स्वरैर्दुःखं रूक्षैः सर्वे शकुन्तयः आहतानि च वाद्यानि स्निग्धवाचस्तु मङ्गळ"मिति । इदञ्च लब्धप्रशमनाङ्गम् । "माहाभाग्यं दर्शयेयु"रिति वचनात् । एवमुत्तरवाक्यानामपि तदङ्गत्वं शास्त्रानुसारेण द्रष्टव्यम् ॥

पदा—नदद्भिरिति । स्निग्धगम्भीरं नदद्भिः तूर्यैः तस्य कल्याणमन्वमीयत । स्निग्धं मनोहरं गम्भीरञ्च यथा भवति तथा नदद्भिः कल्याणं मङ्गळमन्वमीयत अनुमितम-

भूत्। कर्मणि लङ्। तूर्यनादेनैव हेतुना तस्य लोकोत्तरं मङ्गळं भविष्यतीति जनैरनुमितमभूदित्यर्थः। "सूचयन्ति स्वरैर्दुःखं रूक्षैः सर्वैश्शकुन्तयः। आहतानि च वाद्यानि स्निग्धवाचश्च मङ्गळ"मिति शकुनार्णववचनम्। आहतं पुष्करं वाद्यमुखं येषाम्। "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले" इति सिंहः। तूर्याहननसमय एव स्निग्धः शब्दो जात इत्यर्थः। अविच्छिन्नसन्ततेः सन्ततिविच्छेदाभावोऽप्यनुमितोऽभूदित्यर्थः। तस्य मङ्गळेषु प्राधान्यात् पृथगुपादानम्। अविच्छिन्नसन्ततीति पाठे कल्याणविशेषणम्। अविच्छिन्नपारम्पर्यं मङ्गळं सूचयामासुरित्यर्थः॥

दूर्वायवाङ्कुरप्लक्षत्वगभिन्नपुटोत्तरम्[1]।
मन्त्रिवृद्धप्रयुक्तं[2] स भेजे नीराजनाविधिम्[3] ॥ १२॥

प्रका— दूर्वेति। अभिन्नपुटः सन्दष्टपल्लवपुटतया मधूक उच्यत इत्युपदेश इति दक्षिणावर्तः। वल्लभस्तु अभिन्नपुटः कार्पास औणों वा कङ्कट इति। दूर्वादिभिरुत्तरं तत्सहितमित्यर्थः। नीराजनाविधिं पटलदीपिकाभ्रमणविधिम्। आरात्रिकदीपोपचारमिति यावत्॥

पदा—दूर्वेति। स मन्त्रिवृद्धप्रयुक्तान् नीराजनाविधीन् भेजे। प्रयुक्तान् प्रहितान्। नीराजनाविधीन् पटलदीपिकाभ्रमणविधीन्। आरात्रिकदीपोपचारानिति यावत्। भेजे अनुबभूव। दूर्वायवाङ्कुरप्लक्षत्वगभिन्नपुटोत्तरान् प्लक्षो वटः अभिन्नपुटं मधूकम्। दूर्वादिभिस्सहितानित्यर्थः॥

पुरोहितपुरोगास्तं जिष्णुं जैत्रैरथर्वभिः।
उपचक्रमिरे पूर्वमभिषेक्तुं द्विजातयः ॥ १३॥

प्रका—पुरोहितेति। जिष्णुमिति पात्रसाद्गुण्यमुक्तम्। पूर्वमिति। मन्त्र्यादिभ्य इति शेषः॥

पदा—पुरोहितेति। द्विजातयः पूर्वं जैत्रैः अथर्वभिस्तमभिषेक्तुमुपचक्रमिरे। पूर्वं बन्धुमन्त्रिभ्यः प्रागित्यर्थः। जैत्रैर्जयसाधनैः। अथर्वभिरथर्ववेदोदितैर्मन्त्रैः। पुरोहितो वसिष्ठः पुरोगोऽग्रगामी येषाम्। पुरोहितः पूर्वं, तदनु तपस्विनो विप्राः, अनन्तरं बन्धुभूता राजानः, अथ कुलक्रमागता मन्त्रिण इत्यभिषेकक्रमोऽनेन दर्शितः। जिष्णुं जयशीलम्। अनेन पात्रगुण उक्तः। तस्य जैत्रैरथर्वभिः संस्कारे भाविनं गुणविशेषं को वा वर्णयेदिति भावः॥

[1] रान्। [2] ज्ञाति। [3] क्तान्। [4] धीन्।

तस्यौघमहती मूर्ध्नि निपतन्ती व्यरोचत ।
सशब्दमभिषेकश्रीर्गङ्गेव त्रिपुरद्विषः ॥ १४ ॥

प्रका—तस्येति । ओघमहती महाप्रवाहा । अभिषेक एव श्रीरभिषेकश्रीः श्रीसाधनत्वात् ॥

पदा—तस्येति । तस्य मूर्ध्नि सशब्दं निपतन्ती अभिषेकश्रीर्व्यरोचत । अभिषेक एव श्रीः लक्ष्मीः । अभिषेकस्य श्रीसाधनत्वात् साधने साध्योपचारः । व्यरोचत शुशुभे । त्रिपुरद्विषः गङ्गा इव । मूर्ध्नि सशब्दं निपतन्तीत्यनुषङ्गः । ओघेन प्रवाहेण महती । अत्र राज्ञस्त्रिपुरान्तकोपमया दुष्टनिग्रहपरत्वं लोकोपकारशीलत्वमित्यादयो ध्वन्यन्ते । ओघमहतीत्युभयविशेषणम् । गिरीशशिरसि गङ्गाप्रपतने सशब्दत्वं महाप्रवाहत्वञ्च रामायणादिसिद्धम् ॥

स्तूयमानः क्षणे तस्मिन्नलक्ष्यत स वन्दिभिः ।
प्रवृष्ट इव पर्जन्यश्चातकैरभिनन्दितः ॥ १५ ॥

प्रका—स्तूयमान इति । क्षणे तस्मिंस्तदानीम् । प्रवृष्टमेघोपमानेन राज्ञो धनवर्षप्रतीतिः । अभिनन्दनं पूजनम् । चातकानां विरावेऽभिनन्दनमुपचरितम् । वल्लभस्तु सारङ्गैरिति पठित्वा मयूरैरिति व्याचष्ट ॥

पदा—स्तूयमान इति । स तस्मिन् क्षणे वन्दिभिः स्तूयमानः अलक्ष्यत । तस्मिन् क्षणे तदानीमित्यर्थः । स्तूयमान इति कर्मणि लटि शानच् । अलक्ष्यतेति कर्मणि लङ् । प्रवृष्टः पर्जन्यश्चातकैरभिनन्दित इव । प्रवृष्ट इति कर्तरि क्तः । पर्जन्यो मेघः । "पर्जन्यौ रसदब्देन्द्रौ" इति सिंहः । अभिनन्दित इति कर्मणि क्तः । अत्र चातकानामभिनन्दनमुपचारः । वन्दिनाञ्चातकोपमया तेषामनन्यशरणत्वं ध्वनितम् । राज्ञो मेघोपमया धनवर्षशीलत्वञ्च ॥

तस्य सन्मन्त्रपूताभिः स्नानमद्भिः प्रतीच्छतः ।
ववृधे वैद्युतस्याग्नेर्वृष्टिसेकादिव द्युतिः ॥ १६ ॥

प्रका—तस्येति । वैद्युतस्य । स हि जलेन दीप्यते ॥

पदा—तस्येति । सन्मन्त्रपूताभिः अद्भिः स्नानं प्रतीच्छतः तस्य द्युतिः ववृधे । प्रतीच्छतः प्रतिगृह्णतः । ववृधे पूर्वस्मादधिकाऽभूत् । वैद्युतस्याग्नेः वृष्टिसेकादिव । द्युतिरित्यनुषङ्गः । वैद्युतोऽग्निरशनिः । स हि जलसेकाद्वर्धते ॥

स तावदभिषेकान्ते स्नातकेभ्यो ददौ वसु ।
यावतैषां समाप्येरन्यज्ञाः पर्याप्तदक्षिणाः ॥ १७ ॥

प्रका—स इति । तावत्तत्परिमाणम् । स्नातका गृहस्थाः । इतराश्रमिणां राजप्रतिग्रहविध्यभावात् । स्नातकस्य त्वस्त्येव विधिः । "संसीदन् स्नातकः क्षुधे"ति मनुः । यावता यत्प्रमाणेन । समाप्येरन् । कर्मणि सम्भावने लिङ् । पर्याप्ताः प्रभूताः । स्नातकोऽनूचान इति वल्लभः ॥

पदा—स इति । स अभिषेकान्ते स्नातकेभ्यः तावद्वसु ददौ । स्नातका गृहस्थाः । इतराश्रमिणां राजप्रतिग्रहस्य प्रतिषिद्धत्वादित्थमुक्तम् । गृहस्थानान्तु राजप्रतिग्रहो मनुनानुज्ञातः । "संसीदन् स्नातकः क्षुधा" इति । "स्नातकस्त्वाप्लुतो व्रती" इति सिंहः । तावत्तत्परिमाणम् । यावता एषां यज्ञाः पर्याप्तदक्षिणाः समाप्येरन् । यावता यत्परिमाणेन । पर्याप्ता प्रभूता दक्षिणा येषाम् । समाप्येरन्निति णिजन्तात्कर्मणि सम्भावनायां लिङ् ॥

ते प्रीतमनसस्तस्मै यामाशिषमुदैरयन् ।
सा तस्य कर्मनिर्वृत्तैर्दूरं पश्चात्कृता फलैः ॥ १८ ॥

प्रका—त इति । वल्लभस्तु पश्चात्पश्चादिति पठित्वा पश्चात् पश्चात्काले । कर्मणा पौरुषेण । निर्वृत्तैः आशीः पश्चात्कृतेति व्याख्यातवान् । दक्षिणावर्तस्तु प्राक्तनपुण्यनिष्पन्नैः फलैः चरमकालफलदायिनी कृता । तत्फलस्याप्यावश्यकत्वादिति । दूरं पश्चादिति च पठति ॥

पदा—त इति । ते प्रीतमनसः तस्मै यामाशिषमुदैरयन्, सा तस्य कर्मनिर्वृत्तैः फलैः दूरं पश्चात्कृता । सम्प्राप्तबहुधना गृहस्थाः, 'चक्रवर्ती भव', 'सन्तानसिद्धिरस्तु' इत्यादिरूपां यामाशिषमुच्चारयामासुः, सा तस्य प्राक्तनकर्मसम्पादितैः प्रारब्धैः फलैरत्यर्थं पश्चात्कृता । कालान्तरफलप्रदा कृतेत्यर्थः । न हि ब्राह्मणाशिषो निष्फला भवन्ति । अतश्चरमकाल एव तस्याः फलम् । अथवा तस्य पौरुषेण निर्वृत्तैः फलैराशीः पश्चात्कृता अधःकृता । तेषामाशीर्वचनकृतेभ्यः फलेभ्य उत्कृष्टत्वादिति भावः । "अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा । तया तु तस्यार्धशरीरलाभात्पश्चात्कृताः स्निग्धजनाशिषोऽपि" इतिवत् । अनेन राज्ञः पुण्यसञ्चयानामानन्त्यमुक्तम् ॥

बद्धच्छेदं स बद्धानां वधार्हाणामवध्यताम् ।
धुर्याणाञ्च धुरो मोक्षमदोहञ्चादिशद्गवाम् ॥ १९ ॥

**प्रका**—बन्धेति । एवंविधेष्वेव विधिः । यदुक्तं "युवराजाभिषेके वा परराष्ट्रोपमर्दने । पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयत" इति ॥

**पदा**—बन्धेति । स बद्धानां बन्धच्छेदं, वधार्हाणामवध्यतां, धुर्याणां धुरो मोक्षं, गवामदोहञ्च आदिशत् । धुरं भारं वहन्तीति धुर्याः भारवाहकाः, गोवृषादयश्च । धुरो भारस्य । एवंविधेष्वभ्युदयेष्वेव विधिः । तदुक्तं "युवराजाभिषेके वा परराष्ट्रविमर्दने । पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयत" इति ॥

**क्रीडापतत्रिणोऽप्यस्य बन्धनस्थाः**[1] **शुकादयः ।**
**लब्धमोक्षास्तदादेशाद्यथेष्टगतयोऽभवन् ॥ २० ॥**

**प्रका**—तदेव प्रपञ्चयति—क्रीडेति । अपिशब्दस्तेषां लोभनीयत्वात्तन्मोक्षस्यासम्भावनां द्योतयति ॥

**पदा**—क्रीडेति । अस्य बन्धनस्थाश्शुकादयः क्रीडापतत्रिणोऽपि तदादेशाल्लब्धमोक्षा यथेष्टगतयोऽभवन् । क्रीडार्थाः पतत्रिणः क्रीडापतत्रिणः । पतत्रिणः पक्षिणः । यथेष्टमिच्छानुसारेण गतिर्गमनं येषाम् । अपिशब्देन तेषां लोभनीयत्वेन तन्मोक्षस्यासम्भावना द्योत्यते ॥

**ततः कक्ष्यान्तरन्यस्तगजदन्तासनं शुचि ।**
**सोत्तरच्छदमध्यास्त नेपथ्यग्रहणाय सः ॥ २१ ॥**

**प्रका**—तत इति । कक्ष्यान्तरं राजावासात् पौरस्त्यो गृहविभागः । "पुरस्तादलङ्कारभूमि"रिति कौटल्यः । शुचि प्रकृत्या शुद्धम् । अतस्तत्कालाध्यासनोचितत्वम् ॥

**पदा**—तत इति । ततः स नेपथ्यग्रहणाय कक्ष्यान्तरन्यस्तं गजदन्तासनमध्यास्त । नेपथ्यमलङ्कारः तस्य ग्रहणाय । अलङ्कारार्थमित्यर्थः । कक्ष्यान्तरे कक्ष्याभेदे न्यस्तम् । राजावासात्पौरस्त्यगृहविशेषे स्थापितमित्यर्थः । "पुरस्तादलङ्कारभूमि"रिति कौटल्यः । गजदन्तेन निर्मितमत एव शुचि नित्यधवळम् । मङ्गळक्रियायोग्यमित्यर्थः । सोत्तरच्छदमुत्तरच्छदसहितमित्यर्थः । अनेन काठिन्यपरिहारप्रकार उक्तः ॥

**तं धूपाश्यानकेशान्तं तोयनिर्णिक्तपाणयः ।**
**आकल्पसाधनैस्तैस्तैरुपसेदुः प्रसाधिकाः ॥ २२ ॥**

१ पञ्जर ।

प्रका—तमिति । धूपेनाश्यानः परिवानः केशान्तो यस्य । अन्तशब्दस्स्वरूपवाची मध्यवाची वा । एवमादौ वाक्यालङ्कारार्थोऽन्तशब्द इति वल्लभः । निर्णिक्तं शोधितम् । तैस्तैरिति । सर्वैरित्यर्थः ॥

पदा—तमिति । प्रसाधिकास्तोयनिर्णिक्तपाणयः तैस्तैराकल्पसाधनैस्तमुपसेदुः । प्रसाधिका अलङ्कर्त्र्यः । तोयेन निर्णिक्तौ शोधितौ पाणी यासाम् । तैस्तैः तत्तदवयवोचितैरित्यर्थः । आकल्पस्यालङ्कारस्य साधनैः कस्तूरीप्रभृतिभिः । उपसेदुः प्रापुः । अलञ्चक्रुरिति यावत् । अधृष्यगुणप्राधान्याद्राज्ञश्शनैश्शनैरेवाङ्गरागादिसमर्पणारम्भः इति द्योतयितुं प्राप्तिमात्रोपादानम् । धूपेन संस्कृतेन धूमेन । आश्यान ईषच्छुष्कः केशान्तो यस्य । अन्तशब्दस्स्वरूपवाची । "अन्तोऽस्त्र्यवसितौ स्वरूपे निश्चयेऽन्तिक" इति यादवः ॥

तस्य मुक्तागुणोन्नद्धं मौलिमभ्यन्तरस्रजम् ।
प्रत्यूपुः पद्मरागेण प्रभामण्डलबन्धिना ॥ २३ ॥

प्रका—तस्येति । उन्नद्धं वेष्टितम् । मौलिं केशसंहतिम् । अभ्यन्तरे स्रगस्य । अन्तर्निवेशितस्रजमित्यर्थः । प्रत्यूपुः । वपेर्लिट् । सम्प्रसारणद्वयम् । प्रत्युप्तञ्चक्रुरित्यर्थः । यद्यपि प्रतिवपनीयः पद्मरागः, तथापि करणत्वेन तस्य विवक्षितत्वात्तृतीया । यथा कुमारसम्भवे—"पर्यक्षिपत्काचिदुदारबन्ध"मिति । प्रतिशब्दयोगान्मौलिमिति द्वितीया । प्रत्यूहुरिति पाठे प्रतिवहनं सङ्गतकरणम् । सङ्गतञ्चक्रुरित्यर्थः । अथवा उह प्रपूरणे इति धातुः । प्रतिपूरयामासुरित्यर्थः । प्रभामण्डलं बध्नातीति तथा । मौलौ पद्मरागशेखरमकुर्वन्नित्यर्थः ॥

पदा—तस्येति । तस्य मुक्तागुणोन्नद्धं मौलिं पद्मरागेण प्रत्यूपुः । मुक्तागुणेन मौक्तिकदाम्ना उन्नद्धं वेष्टितम् । पद्मरागो रत्नविशेषः । तेन प्रत्यूपुः प्रत्युप्तञ्चक्रुः । वपेर्धातोर्लिट् सम्प्रसारणद्वयञ्च । अभ्यन्तरे स्रग् यस्य । प्रभामण्डलं बन्धुं शीलमस्येति तथा । अनेन केशानां परभागप्राप्तिरुक्ता ॥

चन्दनेनाङ्गरागञ्च मृगनाभिसुगन्धिना ।
समापय्य ततश्चक्रुः पत्रं विन्यस्तरोचनम् ॥ २४ ॥

प्रका—चन्दनेनेति । समापय्य "विभाषापः" इति णेरयादेशः । ततस्तत्र । अङ्गरागश्च परामृश्यते । पत्रं विन्यस्तरोचनमिति पाठः । गोरोचनया पत्रलेखाविन्यासमस्य चक्रुरित्यर्थः ॥

पदा— चन्दनेनेति । चन्दनेनाङ्गरागं समापय्य ततः विन्यस्तरोचनं पत्रं चक्रुः च । समापय्य समाप्तं कृत्वा । "विभाषाप" इति णेरयादेशः । तत इति सप्तम्यर्थे तसिः । अङ्गराग इत्यर्थः । विन्यस्ता रोचना गोरोचना यस्य । गोरोचनापत्ररेखाश्चन्दनाङ्गरागे चक्रुरित्यर्थः । मृगनाभिः कस्तूरी तेन सुगन्धिना । "गन्धस्येदि"तीत् ॥

आमुक्ताभरणस्स्रग्वी हंसचिह्नदुकूलवान् ।
आसीदतिशयप्रेक्ष्यस्स राजश्रीवधूवरः ॥ २५ ॥

प्रका—आमुक्तेति । प्रेक्ष्यो दर्शनीयः ॥

पदा—आमुक्तेति । स अतिशयप्रेक्ष्य आसीत् । अतिशयेन प्रेक्ष्यो दर्शनीयोऽभूत् । आमुक्तेत्यादीनि विशेषणानि तत्र हेतवः । आमुक्तान्यर्पितानि आभरणानि यस्य । स्रग्वीति मत्वर्थे विनिः । हंसा एव चिह्नं यस्य तादृशं दुकूलमस्यास्तीति तथा। राजश्रियो राजलक्ष्म्या एव वध्वा नवोढाया वरः । राजलक्ष्मीरिदानीमनेन वृतेति जनानां प्रीतिर्जातेति भावः ॥

नेपथ्यदर्शिनश्छाया तस्यादर्शे हिरण्मये ।
विरराज नवे सूर्ये मेरौ कल्पतरोरिव ॥ २६ ॥

प्रका—नेपथ्येति । छाया प्रतिबिम्बः । मेरुस्थायिन एव कल्पतरोस्सूर्यसङ्क्रान्तप्रतिबिम्बत्वं सम्भवन्तीति मेराविस्युक्तम् । हिरण्मयसादृश्यार्थं नवशब्दः । कल्पतरुरप्यनेकाभरणादियुक्तो भवति ॥

पदा—नेपथ्येति । नेपथ्यदर्शिनस्तस्य छाया हिरण्मय आदर्शे विरराज । छाया प्रतिबिम्बः । नवे सूर्ये मेरौ कल्पतरोरिव । हिरण्मयदर्पणसादृश्यसिद्ध्यर्थं नवशब्दोपादानम् । मेरावित्यधिकरणसप्तमी । मेरोरुन्नतत्वात्तत्र वर्तमानस्य कल्पवृक्षस्य हि छाया सूर्यसङ्क्रान्ता भवति इति मेरूपादानम् । हिरण्मयसिंहासनाधिष्ठितराजप्रतिबिम्बसादृश्यञ्च कल्पतरुप्रतिबिम्बस्य प्रतिभाति । सूर्यस्य दर्पणस्थानीयत्वं प्रतिबिम्बग्रहणसामर्थ्यञ्च प्रसिद्धम् । उक्तञ्च सौन्दर्यलहर्यां —"तवानीतं पत्या मणिमुकुरतामम्बरमणि"रित्यादौ । कल्पतरुरप्यनेकाभरणादियुक्तो भवति ॥

स राजककुदव्यग्रपाणिभिः पार्श्ववर्तिभिः ।
ययावुदीरितालोकः सुधर्मानवमां सभाम् ॥ २७ ॥

प्रका—स इति । ककुदं राजचिह्नं छत्रचामरादि । राजशब्दश्श्रेष्ठपर्यायः ।

पार्श्ववर्तिभिरासन्नैः उदीरितः आलोकयालोकयेति शब्दो यस्य। सुधर्मा देवसभा तद्वदन-वमासुरक्कृष्टाम्। सभामास्थानीम् ॥

पदा—स इति। स पार्श्ववर्तिभिरुदीरितालोकः सभां ययौ। पार्श्ववर्तिभिरा-सन्नसेवकैः। उदीरित उच्चारितः आलोकः आलोकयालोकयेति शब्दो यस्य। सभामा-स्थानमण्डपम्। राजककुदेषु राजचिह्नेषु छत्रचामरादिषु व्यग्रा व्यापृताः पाणयो येषाम्। सुधर्मा देवसभा तद्वत्ततो वाप्यनवमामुत्कृष्टाम्। महत्तरसामाजिकाधिष्ठितत्वेन विशिष्ट-तररत्नस्तम्भाद्यलङ्कृतत्वेन च महेन्द्रसभया तुल्यगुणामधिकगुणां वा ॥

वितानसहितं तत्र भेजे पैतृकमासनम्।
चूडामणिभिरुद्घृष्टपादपीठं महीक्षिताम् ॥ २८ ॥

प्रका—वितानेति। वितानमुल्लोचः। उद्घृष्टं मसृणितम् ॥

पदा—वितानेति। स तत्र पैतृकमासनं भेजे। पैतृकं पितुरागतम्। वि-तानमुल्लोचः तेन सहितम्। महीक्षितां चूडामणिभिरुद्घृष्टं पादपीठं पादनिवेशनार्थमधो-भागे स्थापितं पीठं यस्य ॥

बभौ भूयः कुमारत्वादाधिराज्यमवाप्य सः।
लेखाभावादुपारूढस्सामग्र्यमिव चन्द्रमाः ॥ २९ ॥

प्रका—बभाविति। भूयोऽधिकम्। कुमारत्वाद्युवराजत्वादित्यर्थः। लेखा-भावाल्लेखावस्थाया इत्यर्थः। एतदन्योन्यबिम्बप्रतिबिम्बभूतमपादानद्वयम् ॥

पदा—बभाविति। स कुमारत्वादाधिराज्यमवाप्य भूयो बभौ। कुमारत्वा-द्युवराजत्वात् सकाशात्। अधिराजश्चक्रवर्ती तस्य भाव आधिराज्यम्। भूयः अधिकम्। बभौ। लेखाभावात्सामग्र्यमुपारूढः चन्द्रमा इव। लेखाभावो लेखात्वं तस्मात्सकाशात्। सामग्र्यं परिपूर्णताम्। अपादानद्वयमिदं परस्परं बिम्बप्रतिबिम्बभावमनुभवति ॥

शुशुभे तेन चाक्रान्तं मङ्गलायतनं महत्।
श्रीवत्सलक्षणं वक्षः कौस्तुभेनेव कैशवम् ॥ ३० ॥

प्रका—शुशुभ इति। मङ्गळायतनं मङ्गलगृहम्। महदिति तद्विशेषणम्। श्रीवत्सलक्षणत्वञ्च सामान्यम्। स चाष्टमङ्गळेष्वेकः। यथाहुः—"दर्पणः पूर्णकुम्भश्च वृषभो युग्मचामरम्। श्रीवत्सं स्वस्तिकं शङ्खो दीपश्चैवाष्टमङ्गळ"मिति। स च श्रीदेवी-संस्थानप्रकृतिः। अन्ये तु गृहसन्निवेशविशेष इति। तथा च सज्जनः—"स्वस्तिकः

सर्वतोभद्रो वलभिद्राविळस्तथा श्रीवत्सनन्द्यावर्तादिविच्छन्दा बहवस्तयो''रिति । तदा लक्षणशब्दस्स्वरूपपर्यायः । अन्ये तु महदिति राष्ट्रं तद्विशेषणञ्च मङ्गळायतनमिति मन्यन्ते । "साधिताखिलनृपं महन्महदि"ति माघप्रयोगदर्शनात् ॥

पदा—शुशुभ इति । तेनाक्रान्तं मङ्गळायतनं शुशुभे च । आक्रान्तमधिष्ठितम् । मङ्गळायतनं मङ्गळगृहम् । तदधिष्ठानेन पूर्वस्मादधिकमशोभतेत्यर्थः । तदर्थमेव चशब्दप्रयोगः । महदिति मङ्गळायतनविशेषणम् । सन्निवेशविशेषेणैव विशिष्टं मनोहरमित्यर्थः । कौस्तुभेन कैशवं वक्ष इव । आक्रान्तमित्यनुषज्यते । कौस्तुभो रत्नविशेषः । कैशवं केशवसम्बन्धि । श्रीवत्स एव लक्षणं चिह्नं यस्य इत्युभयविशेषणम् । मङ्गळायतनपक्षे सोऽष्टमङ्गळेष्वेकः । यथाहुः—"दर्पणः पूर्णकुम्भश्च वृषभो युग्मचामरम् । श्रीवत्सं स्वस्तिकं शङ्खो दीपश्चैवाष्टमङ्गळम्" इति । केशवस्य वक्षसि तु श्रीवत्सलाञ्छनं प्रसिद्धम् ॥

प्रसन्नमुखरागन्तं स्मितपूर्वाभिभाषिणम् ।
मूर्तिमन्तममन्यन्त प्रसादमनुजीविनः ॥ ३१ ॥

प्रका—प्रसन्नेति । मुखरागो मुखवर्णः । "श्यामं रक्तं प्रसन्नञ्च तुर्यं स्वाभाविकं मुख"मिति सोमेश्वरः । मुखवर्णे मुखरागशब्दश्च तेन प्रयुक्तः—"यथा धरा हनुश्चैव मुखरागस्ततः पर"मिति । अत्रेत्थममननेऽपि मननाध्यवसायादतिशयोक्तिः ॥

पदा—प्रसन्नेति । अनुजीविनस्तं मूर्तिमन्तं प्रसादममन्यन्त । भृत्यास्तं मूर्तिमवलम्ब्यावस्थितं प्रसादमेव कल्पयामासुः । तत्र हेतुः प्रसन्नेत्यादिविशेषणद्वयम् । प्रसन्नो मुखरागो मुखवर्णो यस्य । दुःखे श्यामवर्णं भवति मुखम् । कोपे रक्तवर्णम् । प्रसादे प्रसन्नवर्णम् । अत्र सोमेश्वरः । "श्यामं रक्तं प्रसन्नञ्च तुर्यं स्वाभाविकं मुखम्" इति । स्मितपूर्वमाभिमुख्येन भाषितुं शीलमस्येति तथा ॥

स पुरं पुरुहूतश्रीः कल्पद्रुमनिभध्वजाम् ।
क्रममाणश्चकार द्यां नागेनैरावतौजसा ॥ ३२ ॥

प्रका—स इति । पुरमिति पदं पूश्शब्दप्रकृतिकम् । क्रममाणः । "अनुपसर्गाद्वे"त्यात्मनेपदम् । पुरं द्यामिव चकार । उक्तविशेषणत्रययोगात् पूर्द्यौरिवासीदित्यर्थः । अभिषिक्तेन पुरः प्रदक्षिणं कार्यमित्याचार्यः ॥

पदा—ध्वजप्रतिष्ठापनं पुरप्रदक्षिणञ्च प्रकारान्तरेणाह—स इति । नागेन

१ विश्वास ।

क्रममाणः स पुरं द्यामिवाचक्रमे, । क्रममाणः प्रदक्षिणीकुर्वन् । पुरमित्यर्थात्सिद्धयति । "अनुपसर्गाद्वे"त्यात्मनेपदम् । पूरिति पदस्य द्वितीया पुरमिति । अन्यथा स्त्रीलिङ्गत्वन्न स्यात् । स्वर्गसाम्यमेवाह—पुरुहूतश्रीरित्यादिना । पुरुहूतस्य श्रीरिव श्रीर्यस्य । नाना-विधरत्नमयत्वात्कल्पद्रुमनिभाः कल्पद्रुमसदृशा ध्वजा यस्यम् । ऐरावतौजसा ऐरवतस्यौज इवौजः प्रभावो यस्य । अभिषिक्तेन नागमविरुह्य पुरः प्रदक्षिणं कार्यमित्याहुराचार्याः ॥

तस्यैकस्योच्छ्रितं छत्रं मूर्ध्नि, तेनामलत्विषा ।
पूर्वराजवियोगौष्ण्यं कृत्स्नस्य जगतो हृतम् ॥ ३३ ॥

प्रका—तस्येति । एकस्य केवलस्य । उच्छ्रितमुत्तम्भितमित्यर्थः । तेनेति वाक्यान्तरोपक्रमः । औष्ण्यं सन्तापः । अत्राशक्यवस्त्वन्तरकरणात्मा विशेषालङ्कारः ॥

पदा—तस्येति । तस्यैकस्य मूर्ध्नि छत्रमुच्छ्रितम् । आसीदिति शेषः । एकस्य केवलस्य । "एके मुख्यान्यकेवला" इत्यमरः । अमलत्विषा तेन कृत्स्नस्य जगतः पूर्वराजवियोगौष्ण्यं हृतम् । अमला निर्मला त्विट् शोभा यस्य । सार्वभौमार्हेण सितच्छत्रेणेति सिद्ध्यति । अत एव कृत्स्नस्य जगतस्तापहरणोपपत्तिः । न स्वमण्डल-मात्रस्य । अत्राशक्यवस्त्वन्तरकरणात्मा विशेषोऽलङ्कारः । "अन्यत्प्रकुर्वतः कार्यमश-क्यस्यान्यवस्तुनः । तथैव करणञ्चे"ति ॥

धूमस्याग्नेः शिखा पश्चादुदयस्यांशवो रवेः ।
सोऽतीत्य तेजसां वृत्तिं सममेवोत्थितो गुणैः ॥ ३४ ॥

प्रका—धूमस्येति । इह सर्वस्यापि तेजसो गुणानां पश्चादेवोत्थानं भवति । तथा हि धूमस्य पश्चाद्वह्नेरर्चिरुत्तिष्ठति । उदयस्यानन्तरमेव सूर्यस्यांशवः । स पुनस्तेजसां तेजस्विनां वृत्तिमुल्लङ्घ्य गुणैस्सहैवोत्थित इत्यर्थः । व्यतिरेकालङ्कारश्चायम् । ततश्चा-स्यापि तेजस्वित्वमर्थादुक्तम् । अग्निरव्योरत्र सम्बन्धे षष्ठी । धूमोदयशब्दयोस्तु पश्चा-द्योगे "षष्ठ्यतसर्थप्रत्ययेने"ति । पञ्चम्यन्तपाठस्तु न तथा न्याय्यः । षष्ठ्या बाधित-त्वात् । उत्थितशब्देन गजारोहणात्मकमूर्ध्वकर्मोच्यते । तत्र गुणानां सहोत्थानन्नाम तत्काल एव लोके प्रख्यातत्वम् । तच्चानुरागहेतुत्वाल्लब्धप्रशमनाङ्गम् । केचित्तु जन्मनि सहभावं मन्वते । तत्तु नगरप्रदक्षिणप्रकरणस्योपक्रान्तत्वान्न सङ्गतम् ॥

पदा—धूमस्येति । शिखा धूमस्य पश्चात् । उत्तिष्ठतीति शेषः । रवेरंशव उदयस्य । पश्चादुत्तिष्ठतीति योज्यम् । रवेरुदयानन्तरमेव हि किरणप्रचारः । स

१ दयादंश ।

तेजसां वृत्तिमतीत्य गुणैस्सममेवोत्थितः । तेजसां तेजस्विनां वृत्तिं व्यापारम् । गुणैः प्रतापादिभिः । अत्रोत्थितशब्देन गजारोहणादिकमूर्ध्वकर्मोच्यते । अत्र राज्ञ इतरतेजस्विभ्यो व्यतिरेकप्रदर्शनाद्व्यतिरेकालङ्कारः ॥

तं प्रीतिविशदैर्नेत्रैरन्वयुः पौरयोषितः ।
शरत्प्रसन्नैर्ज्योतिर्भिर्विभावर्य इवोडुपम् ॥ ३५ ॥

प्रका—तमेवानुरागमाह—तमिति । प्रीतिर्भक्तिर्नरत्वभिलाषः । विशदैर्निर्मलैः । उडुपश्चन्द्रम् । ध्रुवमिति वा पाठः । ध्रुवप्रस्तावे श्रीविष्णुपुराणवचनम्—"एष भ्रमन् भ्रमयति चन्द्रादित्यादिकान् ग्रहान् । भ्रमन्तमनु तं यान्ति नक्षत्राणि च चक्रव"दित्यादि ॥

पदा—तमिति । पौरयोषितः प्रीतिविशदैः नेत्रैस्तमन्वयुः । प्रीत्या भक्त्या विशदैर्निर्मलैः । नेत्रैः करणैः । पुरप्रदक्षिणसमये पुरस्त्रीणां विलोचनानि तमेवानुजग्मुरित्यर्थः । विभावर्यः शरत्प्रसन्नैर्ज्योतिर्भिर्ध्रुवमिव । शरदा प्रसन्नैर्निर्मलैः । ज्योतिर्भिर्नक्षत्रैः । अत्र श्रीविष्णुपुराणवचनं "तारामयं भगवतश्शिशुमाराकृतेः प्रभो । दिवि रूपं हरेर्यत्तु तस्य पुच्छस्थितो ध्रुवः । एष भ्रमन् भ्रामयति चन्द्रादित्यादिकान् ग्रहान् । भ्रमन्तमनु तं यान्ति नक्षत्राणि च चक्रव"दिति ॥

अयोध्यादेवताश्चैनं प्रशस्तायतनार्चिताः ।
अनुदध्युरनुध्येयं सान्निध्यैः प्रतिमागतैः ॥ ३६ ॥

प्रका—अयोध्येति । प्रशस्तानि लोकप्रशंसामधिगतानि । "अनुध्यानमनुग्रहः" इत्युत्पलमाला । सन्निधिरेव सान्निध्यम् । अनुगृह्य च देवतास्सन्निधिं विदधुरिति यावत् ॥

पदा—अयोध्येति । अयोध्यादेवताश्च प्रतिमागतैः सान्निध्यैरेनमनुदध्युः । प्रतिमा दारुशिलादिरचितं स्वरूपं, तद्गतैस्सान्निध्यैः । सन्निधिरेव सान्निध्यम् । अनुदध्युरनुध्यानञ्चक्रुः । "अनुध्यानमनुग्रह" इत्युत्पलमाला । प्रशस्तेषु गृहेषु अर्चिताः अभिषेकप्रस्तावे विशेषेण पूजिताः । अनुध्येयमनुग्रहयोग्यम् । भक्तत्वादिति भावः । अनेन कृताभिषेकस्य तस्य तत्तद्देवालयप्राप्तिप्रणामादय उक्ताः ॥

यावन्नाश्यायते वेदिरभिषेकजलाप्लुता ।
तावदेवास्य वेलान्तं प्रतापः प्राप दुस्सहः ॥ ३७ ॥

प्रका—यावदिति । आश्यायते शुष्यति । "तदादौ चे"ति भोजसूत्रेणात्रापि निर्वाहः । तावदेवेति कालस्य भेदेऽप्यभेदकथनमतिशयोक्तिः । कोशदण्डजं तेजः प्रतापः । रिपुभयजनकस्तेजोमयश्शब्दः प्रताप इति वल्लभः ॥

पदा—यावदिति । अभिषेकजलाप्लुता वेदिः यावन्नाश्यायते, तावदेव अस्य प्रतापः वेलान्तं प्राप । अभिषेकजलेनाप्लुता सिक्ता आश्यायते ईषच्छयाना शुष्का न भवति । "तदादौ चे"ति भोजसूत्रेणात्र लट्प्रयोगो द्रष्टव्यः । वेलायास्समुद्रवेलायाः अन्तमवसानम् । दुस्सहः दुःखेन सोढुं शक्यः । पार्ष्णिग्राहादिभिरिति शेषः । अत्र कालभेदे सत्यपि तदभेदकथनादतिशयोक्तिः ॥

वसिष्ठस्य गुरोर्मन्त्रास्सायकास्तस्य धन्विनः ।
किन्तत्साध्यं यदुभये साधयेयुर्न सङ्गताः ॥ ३८ ॥

प्रका—वसिष्ठस्येति । मन्त्रास्सायकाश्चोभये सङ्गताश्शत्रुनिराकरणादि यत्साध्यं न साधयेयुस्तत्किम् । न किञ्चिदपीत्यर्थः ॥

पदा—वसिष्ठस्येति । वसिष्ठस्य गुरोर्मन्त्राः । वसिष्ठो हि मन्त्रद्रष्टा । अनेन मन्त्राणामन्यनिरपेक्षमेव हिताहितप्राप्तिपरिहारसामर्थ्यमुक्तम् । धन्विनस्तस्य सायकाः । धन्विनः एकधनुर्धरस्य । तस्य किं मन्त्राद्यपेक्षयेति भावः । उभये सङ्गता यत्साध्यन्न साधयेयुस्तत् किम् । उभये मन्त्राश्शराश्च । सङ्गता मिलिताः । तत्किम् । न किमपीत्यर्थः ॥

स धर्मस्थसखः शश्वदर्थिप्रत्यर्थिनां स्वयम् ।
ददर्श संशयच्छेद्यान् व्यवहारानतन्द्रितः ॥ ३९ ॥

प्रका—स इति । धर्मस्था धर्मशास्त्रविदः । शश्वदसकृत्, नित्यमित्यर्थः । अर्थिप्रत्यर्थिनां वादिप्रतिवादिनाम् । ददर्श निर्णीतवान् । संशयच्छेद्यान् संशयच्छेद्यवहारान् । अतन्द्रितोऽनलसः । धर्मस्थीयाधिकरणोक्तैरुपायैः प्रत्यहं धर्मस्थसख एव व्यवहारान्ददर्शेत्यर्थः । अत्र च याज्ञवल्क्यः—"व्यवहारान् स्वयं पश्येत्सभ्यैः परिवृतोऽन्वह"मिति । संशयच्छेदानिति पाठे व्यवहारान्यपदार्थको बहुव्रीहिः ॥

पदा—स इति । स धर्मस्थसखः अर्थिप्रत्यर्थिनां व्यवहारान् स्वयं शश्वद्ददर्श । सभ्यैः परिवृत इत्यर्थः । मन्वादिप्रोक्तधर्मशास्त्रविदो धर्मस्थशब्देनोच्यन्ते । तेषां सखा । अर्थिप्रत्यर्थिनां वादिप्रतिवादिनाम् । व्यवहारशब्दार्थे कात्यायनः—"परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु । वाक्यन्यायाद्व्यवस्थानं व्यवहार उदाहृत" इति । वाक्यन्यायो मी-

मांसान्यायः। शश्वन्नियमेन। ददर्श निर्णीतवानित्यर्थः। अत्र याज्ञवल्क्यः—"व्यवहारान्नृपः पश्येत्सभ्यैः परिवृतोऽन्वहम्" इति। संशयच्छेद्यान् संशयच्छेदार्हान्। अन्यथा पक्षपातिभिः सम्भूय तयोः कलहे राज्ये महानुपद्रवस्सञ्जायेत इति भावः। अतन्द्रितोऽनलसः॥

ततः परमभिव्यक्तसौमनस्यनिवेदितैः।
युयोज पाकाभिमुखैर्भृत्यान्विज्ञापनाफलैः ॥ ४० ॥

**प्रका**—तत इति। ततः परं व्यवहारदर्शनानन्तरम्। तस्य च प्राथम्यं धर्मार्थयोरन्तरङ्गत्वात्। अभिव्यक्तेति। मन्दस्मितादिभिः प्रसादमनुमाय विज्ञापितैरित्यर्थः। अत एव पाकाभिमुखैरासन्नसिद्धिभिः। विज्ञापनया यानि फलानि सिद्ध्यन्ति तानि विज्ञापनाफलानि। द्विविधा हि फलसिद्धिर्भृत्यानाम्। अत्र बृहस्पतिः—"नियुक्तकर्मनिष्पत्तौ विज्ञप्तौ च यदृच्छया। भृत्यान्धनैर्मानयंस्तु नवोऽप्यक्षोभ्यतां व्रजेद्" इति। अत्राभिव्यक्तसौमनस्यफलशब्दयोश्शक्त्या पुष्पाभिव्यक्त्यनन्तरं यथा फलसिद्धिस्तथेदमित्युपमाध्वनिः। भृत्यविज्ञापनामिति वल्लभपाठः॥

**पदा**—तत इति। स ततः परं भृत्यान् विज्ञापनाफलैर्युयोज। ततः परं व्यवहारदर्शनानन्तरम्। धर्मार्थयोर्मध्ये धर्मस्य प्राथम्यादित्थमुक्तम्। पुनश्चार्थस्यैव इति भावः। विज्ञापना कार्येषु भृत्यानां विनियोगः। तस्याः फलानि वेतनानि। तैर्युयोज योजितवान्। नियुक्तं कर्म यथावदनुष्ठाय आगतं भृत्यजनं तत्तदुचितवेतनप्रदानैर्मानयामासेत्यर्थः। द्विविधा हि भृत्यानां फलसिद्धिः। अत्र बृहस्पतिः—"नियुक्तकर्मनिष्पत्तौ विज्ञप्तौ च यदृच्छया। भृत्यान्धनैर्मानयंस्तु नवोऽप्यक्षोभ्यतां व्रजे"दिति। अभिव्यक्तं मन्दस्मितादिभिरनुमितं सौमनस्यं प्रसादो यथा भवति, तथा निवेदितैर्दत्तैः। एतस्मिन्देशे जायमानमेतावन्मात्रं धनं त्वया स्वीकर्तव्यमिति वेदनप्रकारः। पाकं प्रत्यभिमुखैरासन्नफलैरित्यर्थः। तथा सति हि तेषां प्रसादोदयः॥

प्रजास्तद्गुरुणा नद्यो नभसेव विवर्धिताः।
तस्मिंस्तु भूयसीं वृद्धिं नभस्ये ता इवाययुः ॥ ४१ ॥

**प्रका**—एवमवेक्षणस्य फलमाह—प्रजा इति। नभसा श्रावणेन। यत्र वर्षस्यारम्भः। नभस्ये भाद्रपदे। यत्र वर्षस्य प्रौढिः। निमित्तार्थे सप्तम्यौ॥

१ स्वयमित्यरुणगिरिनाथपाठः।

पदा—इत्थं प्रतिपादितस्यानुरञ्जनस्य फलमाह—प्रजा इति। नभसा नद्य इव तद्गुरुणा विवर्धिताः प्रजाः नभस्ये ता इव तस्मिन् भूयसीं वृद्धिमाययुः। नभसा नभोमासेन कर्त्रा। श्रावणमासेनेत्यर्थः। तत्र हि वर्षारम्भः। विवर्धिताः वृद्धिं प्रापिताः। नभस्ये नभस्यमासे। प्रोष्ठपदमासे निमित्ते। नभस्यमासे वर्षोद्रेकः। ताः नद्यः। तस्मिन् राजनि निमित्ते। भूयसीं अतिशयेन महतीम्। वृद्धिं समृद्धिम्। आययुः प्रापुः। प्रजास्तस्य रक्षावैभवात्पूर्वस्मादधिकां समृद्धिमवापुरित्यर्थः। प्रजासमृद्धिरेव हि राज्ञः समृद्धिरिति भावः॥

यदुवाच न तन्मिथ्या यद्ददौ न जहार तत्।
सोऽभूद्भग्नव्रतश्शत्रूनुद्धृत्य प्रतिरोपयन् ॥ ४२ ॥

प्रका—यदिति। अत्राद्यपादाभ्यां प्रतिश्रुत्यादानं दत्त्वा प्रत्यादानञ्च वञ्चनद्वयं विरागहेतुभूतं परास्तम्। विशेषमाह—सोभूदिति। भग्नव्रतोनिर्व्यूढोद्यमः। शत्रूनिति प्रकृतिष्वन्तर्भूताश्शत्रवो विवक्षिताः। न तु प्रतिराजाः। तज्जयस्य वक्ष्यमाणत्वात्। अनित्याश्शत्रव इत्यादिष्वप्ययमभिसन्धिः। उद्धृतप्रतिरोपणमप्यनुरागहेतुः। प्रकृतिषु प्रतिकूलांस्तेन प्रकारेण रञ्जयामासेत्यर्थः। तेन यदुक्तं कृतं वा न तत् परिवृत्तं विपक्षोन्मूलनवर्जमित्यर्थः॥

पदा—यदिति। स यदुवाच तन्मिथ्या नाभूत। तुभ्यमेतद्दास्यामीति यदुक्तन्तत् सत्यमेवाभूदित्यर्थः। यद्ददौ तन्न जहार। प्रतिश्रुत्यादानञ्च प्रत्यादानञ्च वञ्चनमिति पूर्वोक्तं वञ्चनद्वयमनेन वाक्यद्वयेन परिहृतम्। तत्परिहारश्च प्रजानां रागजनकः। स शत्रूनुद्धृत्य प्रतिरोपयन् भग्नव्रतोऽभूत्। शत्रुशब्देनात्र प्रकृतिष्वन्तर्भूताश्शत्रवो विवक्षिताः। न तु प्रतिराजाः। अनित्याश्शत्रवो बाह्या इत्यत्र तज्जयस्य वक्ष्यमाणत्वात्। उद्धृत्य उन्मूल्य। प्रतिरोपयन् स्वपदे स्थापयन्। भग्नं कृतस्यान्यथात्वन्न करिष्यामीति व्रतं यस्य स भग्नव्रतः। विपक्षोन्मूलने तु पूर्ववत्स्थिरता नासीत्। तेषां प्रणामानन्तरमेव प्रतिरोपणदर्शनादिति भावः। प्रकृतिषु प्रतिकूलानपि तेन प्रकारेण रञ्जयामासेत्यर्थः॥

[1]वयोरूपविभूतीनामेकैकं मदकारणम्।
तानि तस्मिन् समस्तानि न चास्योत्सिषिचे मनः ॥ ४३ ॥

१ वयोवेष इति पदार्थदीपिकाकृतां पाठः; प्रकाशिकाकृतान्तु वयोरूपेत्यावेवेति, अनित्याश्शत्रव इति श्लोकव्याख्याने स्फुटम्।

प्रका—वय इति । तानीति मदकारणानि परामृश्यन्ते वयः प्रभृतिपरामर्शे "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति भवितव्यम् । समस्तानि सम्भूयस्थितानि । उत्सिषिचे अमाद्यत् । उत्सिषिचुरिति पाठे अमदयन्नित्यर्थः ॥

पदा—वय इति । वयोवेषविभूतीनामेकैकं मदकारणम् । वयो यौवनं वेषोऽलङ्कारः विभूतिस्समृद्धिरिति द्वन्द्वः । वयोवेषविभूतीनां मध्ये एकैकं मदकारणत्वेन प्रसिद्धम् । तानि तस्मिन् समस्तानि । तानि मदकारणानि । तच्छब्देन वयःप्रभृतीनां परामर्शे तु तास्तु तस्मिन्निति भवितव्यम् । "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति स्त्रीलिङ्गताप्राप्तेः । समस्तानि सम्पूर्णानि । अस्य मनः न उत्सिषिचे च । उत्सिक्तं नाभूत् । उत्सेकोऽहङ्कारः । अनेन श्लोकेन विनयोत्कर्षो दर्शितः । स हि जनानुरागहेतुः । कारणपौष्कल्ये कार्यानुदयप्रतिपादनाद्विशेषोक्तिश्चात्रालङ्कारः ॥

इत्थं जनितरागासु प्रकृतिष्वनुवासरम् ।
अक्षोभ्यस्स नवोऽप्यासीद्दृढमूल इव द्रुमः ॥ ४४ ॥

प्रका—अथ फलमुपदर्शयन् प्रकरणमुपसंहरति इत्थमिति । अक्षोभ्योऽकम्प्यः । नवोप्यचिरास्पदोऽपि ॥

पदा—अथ फलपदर्शनपुरस्सरं लब्धप्रशमनमुपसंहरति—इत्थमिति । प्रकृतिष्वित्थमनुवासरं जनितरागासु स नवोऽपि अक्षोभ्य आसीत् । अनुवासरमनुदिनम् । जनित उत्पादितो रागो यासाम् । निमित्तसप्तमी चेयम् । अक्षोभ्यश्चालयितुमशक्यः । रूढमूलः द्रुम इव । यथा नवोऽपि वृक्षो दोहळादिभिः स्थिरमूलो वायुना न चाल्यते, तथाऽयमपि शीलादिभिः स्थिरीकृतत्वात्परैरचालनीयोऽभूदित्यर्थः ॥

अनित्याश्शत्रवो बाह्या विप्रकृष्टाश्च ते यतः ।
अतस्सोऽभ्यन्तरान्नित्यान् षट् पूर्वमजयद्रिपून् ॥ ४५ ॥

प्रका—एवमत्र प्रकरणे नेतुर्गुणव्यापारवर्णनपरैः श्लोकैर्लब्धस्य राज्यस्यानुरञ्जनप्रतीकाराभ्यां शमनं तत्फलञ्चाकम्प्यत्वमुक्त्वा तन्त्रावापौ वक्ष्यन्, अन्तरा तदुभयाधिष्ठानभूतं विनयाधिकारोक्तं विनयानुष्ठानं वर्णयितुमुपक्रमते । यदाहुः—"विनयस्तन्त्रावापौ राज्ञां वृत्तित्रयं क्रमादाहु"रिति । ननु तन्त्रानन्तरमेवावापो भवति । यदुक्तं—"शमव्यायामाभ्यां प्रतिनिहिततन्त्रस्य नृपतेः परं प्रत्यावापः फलति कृतसेकस्तरुरिवे"ति । तत्कथमत्रावापः प्रागुक्तः । लब्धप्रशमनञ्चावापान्तर्भूतं शास्त्रे । नैवम् । आवापानन्तरभावि खलु तन्त्रम् । अनात्मीयस्यात्मीयतापादनं ह्यावापः । आत्मीयविषयो व्यापारश्च तन्त्रम् । आवापस्तु तन्त्रानन्तरमपि कश्चित् प्रवर्तते लब्धव्यान्तरविषयः । स खलु

वर्णयिष्यमाणः । तदपेक्षञ्च "शमव्यायामाभ्या"मित्यादिवचनम् । अतो न विरोधः कश्चित् । तत्र विनयस्येन्द्रियजयमूलत्वादिन्द्रियजयस्य चारिषड्वर्गत्यागसाध्यत्वादरिषड्वर्गत्यागमाह—अनित्या इति । वाक्यान्तरविवक्षया अत इति परामर्शः । यदेति हेत्वर्थे । यत इति वा पाठः । रिपून् कामादीन् । विशेषणाभ्यां व्यतिरेकद्योतकाभ्यां पूर्वं जेतव्यत्वमुपपादितम् । अत्र कौटल्यः—"कामक्रोधलोभमानमदहर्षत्यागात् कार्यः कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजय" इति । तच्च पञ्चिकाकारेण व्याख्यातम् । "परस्त्रीविषयजोऽभिलाषः कामः । अवध्ये ब्राह्मणादिविषये हिंसाप्रवर्तकश्चित्तविकारः क्रोधः । परद्रव्याभिलाषः स्ववित्तापरित्यागो वा लोभः । बालिश्यादुन्नतिनिमित्तोऽहङ्कारो मानः । वित्तविद्याभिजनपौरुषादिकृतो नानाविधो मदः । इह स्वात्मबलोत्सेकादिदर्पो मदः । अभिलषितविषयसन्निधानोपभोगजा प्रीतिर्हर्ष" इति । ननु वयोरूपेत्यादिना किमर्थं मदजयः प्रागुक्तः । नैवम् । मदस्य प्रागभावोनुरञ्जनाङ्गतया तत्रोक्तः । इह तु तत्सहितानामितरेषाञ्जयः । जयश्चास्वतन्त्रीकरणम् । कथं प्रागभावे सति तज्जयः । लब्धप्रशमननिष्पत्तौ प्रागभावनिवृत्त्युपपत्तेः ॥

पदा—अनित्या इति । बाह्याश्शत्रवोऽनित्याः विप्रकृष्टाश्च यतः अतस्स आभ्यन्तरान् नित्यान् षड्रिपून् पूर्वमजयत् । बाह्या बहिर्भागभवाः । विप्रकृष्टा निजराष्ट्रतो विदूरस्थाः । आभ्यन्तरान् अन्तर्भागभवान् । सदा चित्त एव वर्तमानानिति यावत् । षड्रिपून् कामक्रोधलोभमानमदहर्षानित्यर्थः । अत्र बाह्यानां शत्रूणामनित्यत्वन्तेषामेव कार्यान्तरे बन्धुत्वसम्भवात् । न हि कामक्रोधादयः कदाचिदपि बन्धवो भवन्ति । परस्त्रीविषयोऽलाषः काम इति पञ्चिकाकारः ॥

प्रमादविमुखे तस्मिंश्चपलाऽपि स्वभावतः ।
निकषे हेमलेखेव श्रीरासीदनपायिनी ॥ ४६ ॥

प्रका—तज्जयस्य फलमाह—प्रमादविमुख इति । प्रमादोऽनवधानम् । तत्र वैमुख्यं यथाशास्त्रमनुष्ठानम् । अनेन निशान्तप्रणिध्यात्मरक्षितकादिप्रकरणोक्तानुष्ठानं विवक्षितम् । "प्रमादो व्यसनं स्त्री"त्यादि यद्व्याख्यानं तदप्यर्थस्सङ्गृहीतमेव । व्यसनानामनवधानहेतुत्वात् । निकषे प्रमादो हस्तभ्रंशपांसुसंसर्गादिः । उपमया त्वाधारवशेन श्रियोऽधिकौज्ज्वल्यप्राप्तिर्ध्वन्यते । अनपायिनी स्थिरा । तत्स्थैर्यं ह्यरिषड्वर्गजयस्याप्रमादहेतोः फलम् । यथाह—"शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः अम्बरीषश्च नाभागो बुभुजाते चिरं मही"मिति । प्रसादसुमुख इति पाठे सम्बन्धो मृग्यः ॥

१ विशेषणन्तदपुष्टार्थं भवतीति भावः । प्रमादविमुखत्वन्तु श्रीस्थैर्योपपादकम् । प्रमादो हि श्रीविनाशहेतुः ।

पदा—अरिषड्वर्गजयस्य फलमाह—प्रमादेति । श्रीस्तस्मिन्ननपायिनी आसीत् । सततसन्निहिता बभूव । स्वभावतश्चपलाया अपि सततसन्निधाने हेतुमाह—प्रमादविमुख इति । प्रमादोऽनवधानम् । तस्माद्विमुखे परावृत्ते । प्रमादरहित इत्यर्थः । प्रमादो हि श्रीविनाशे हेतुः । यथाहुः—"दौर्मन्त्र्यान्नृपतिर्विनश्यती"त्यारभ्य "प्रमादाद्धन"मिति । निकषे हेमरेखेव । निकषश्शाणः । हेम्नो रेखा हेमरेखा । पूर्वस्मादौज्ज्वल्याधिक्यमुपमया द्योत्यते ॥

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतस्सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥ ४७ ॥

प्रका—अथास्य शास्त्रैकशरणतया क्लीबप्रायत्वं नासीदित्याह—कातर्यमिति । नीतिर्यथाशास्त्रमनुष्ठानम् । शौर्यं शूरस्य कर्म । तच्च पराक्रमः । एतच्च दृष्टान्ततयोक्तम् । नीतेः प्रकृतत्वात् । यथा पराक्रमः केवलोऽश्लाघ्यः, तथा केवला नीतिरपीत्यर्थः । अतश्चात्र पराक्रमसाहित्यकथनेन नीतेरुत्कर्ष एव प्रतिपादितः ॥

पदा—यथाशास्त्रानुष्ठानपरोऽपि राजा शौर्यन्न परित्यक्तवानित्याह — कातर्यमिति । केवला नीतिः कातर्यम् । नीतिर्नयशास्त्रानुसारेण अनुष्ठानम् । कातरो भीरुः, तस्य भावः कातर्यम् । पराक्रमं परित्यज्य केवलनीतिस्वीकारे भीरुरयं राजेति जनाः परिहसन्तीत्यर्थः । शौर्यं श्वापदचेष्टितम् । शौर्यं शूरस्य कर्म । तच्च पराक्रमः । श्वापदाः सिंहव्याघ्रादयः । तेषां चेष्टितं व्यापारः । केवलं हि शौर्यं सिंहव्याघ्रादिचेष्टितसदृशम् । न हि ते नयस्य लेशमपि कदाचिदपि पश्यन्ति । अत एव हि तेषां कार्याकार्यादिविचाररहित्येन जनोद्वेगकरत्वम् । ततश्च तेभ्यो विनाशः । अत्र नयस्य प्रकृतत्वाच्छौर्यस्य दृष्टान्तत्वेनोपादानम् । यथा केवलं शौर्यं न प्रशस्यते, तथा केवला नीतिरपीति भावः । अतः स समेताभ्यामुभाभ्यां सिद्धिमन्वियेष । अतः अन्यतरपरित्यागे दोषसद्भावात् । सिद्धिं कार्यसिद्धिम् । अत्र पराक्रमसाहित्यप्रतिपादनेन नीतेरुत्कर्ष एव प्रतिपादित इति न प्रकृतविरोधः ॥

न तस्य मण्डले राज्ञो न्यस्तप्रणिधिदीधितेः ।
अदृष्टमभवत्किञ्चिद्व्यभ्रस्येव विवस्वतः ॥ ॥ ४८ ॥

प्रका—अथ नीतेरधिष्ठानभूतं स्वविषये गूढपुरुषप्रणिधानं तत्फलञ्चाह — नेति । मण्डले स्वविषये बिम्बे च । प्रणिधय एव प्रकाशकत्वाद्दीधितयः, प्रणिधिसदृशाश्च दीधितय इत्युभयथा समासे पश्चाद्बहुव्रीहिः । न्यस्ताः प्रणिहिताः । तस्येति सम्बन्धे

षष्ठी। न तु दर्शनापेक्षया कर्तरि। "न लोकाव्यये"त्यादिना निषेधात्। कर्ता तु तत्र तेनेत्यध्याहार्यः। विवस्वत्पक्षे लोकेनेति। व्यभ्रत्वस्य च विवस्वन्मण्डलदर्शनयोग्यतासम्पादकत्वान्नाधिकयमुपमादोषः। राज्ञामिति पाठे द्वादशराजकविषयस्स्यात्। तदा च परेषु स्वेषु चेत्यादिवक्ष्यमाणश्लोकस्य पौनरुक्त्यं स्यात्॥

पदा—नीतेरनुष्ठानं तत्फलञ्चाह—नेति। तस्य राज्ञः मण्डले किञ्चिददृष्टं नाभवत्। तस्य राज्ञ इति सम्बन्धमात्रे षष्ठी। न तु दर्शनापेक्षया कर्तरि। तथा सति तेन राज्ञेति तृतीयया भवितव्यम्। "न लोकाव्ययनिष्ठे"त्यादिना षष्ठीप्रतिषेधात्। तस्य राज्ये शुभमशुभं वा कर्म ये जना यद्यत् कुर्वन्ति तत्सर्वं तेन प्रत्यक्षीकृतमासीदित्यर्थः। व्यभ्रस्य विवस्वत इव। मण्डल इत्यनुषज्यते। मण्डलं बिम्बम्। व्यभ्रस्य विगताभ्रस्य। मेघमुक्तस्येत्यर्थः। मेघच्छन्नं सूर्यबिम्बं जनैर्यथावन्न दृश्यत इति दर्शनसौकर्यार्थमेव मेघमुक्तत्वोपादानमिति नाधिक्यमुपमादोषः। न्यस्ता निक्षिप्ताः प्रजापरीक्षणार्थं प्रेषिताः प्रणिधयश्चरा एव दीधितयः प्रणिधितुल्या दीधितयश्च येन। दीधितीनां प्रकाशकत्वसाधर्म्याद्रूपकमुपमा च॥

रात्रिन्दिवविभागेषु यदादिष्टं महीक्षिताम्।
तत्सिषेवे नियोगेन स विकल्पपराङ्मुखः ॥ ४१ ॥

प्रका—अथ "सप्तमे मन्त्रमध्यासीत। गूढपुरुषांश्च प्रेषये"दित्युक्तकाले गूढपुरुषाणां प्रेषणं प्रत्यागतानाञ्च तेषां "प्रथमे रात्रिभागे गूढपुरुषान् पश्ये"दित्यादिना प्रतिनियते काले दर्शनञ्चासीदित्याह—रात्रिन्दिवेति। रात्रिन्दिवस्य ये विभागाः षोडश अर्धयामप्रमाणा राजकार्याणामसाङ्कर्यायाचार्येण प्रदर्शितास्तेषु। यदाचार्येणादिष्टं कार्यजातं, तन्नियोगेन विकल्पं विहायानुष्ठितवानित्यर्थः। अत्रैव कालांश इदमनुष्ठेयमिति नियोगः। अत्र वान्यत्र वेति विकल्पः। अनेन श्लोकेन स धर्मस्थसख इत्यादिश्लोकाभ्याञ्च राजप्रणिधिप्रकरणार्थानुष्ठानमुक्तम्। तौ तु तत्र प्रकृतिरञ्जनोपायतया लब्धप्रशमन उक्ताविति विवेचनीयम्॥

पदा—रात्रिन्दिवेति महीक्षितां रात्रिन्दिवविभागेषु यदादिष्टं, स तन्नियोगेन सिषेवे। रात्रिर्दिवा च रात्रिन्दिवम्। दिवाशब्दो दिनवाचकमव्ययम्। तयोर्विभागेषु भेदेषु। यदादिष्टं यन्नियुक्तम्। शास्त्रकारैरिति शेषः। नियोगो विधिः। तदनुसारेणैव सिषेवे सेवितवान्। विकल्पस्सन्देहः। तस्मात्पराङ्मुखो निवृत्तः। अस्मिन् कालांश इदं कर्तव्यमन्यदन्यस्मिन्नित्यादिशास्त्रेषु नास्य सन्देहो जातः, शास्त्रैकप्रमाणत्वा-

दित्यर्थः । "सप्तमे मन्त्रमध्यासीत । गूढपुरुषांश्च प्रेरयेत् । प्रथमे रात्रिभागे गूढपुरुषान् पश्ये"दित्यादीनि शास्त्राणि द्रष्टव्यानि ॥

मन्त्रः प्रतिदिनन्तस्य बभूव सह मन्त्रिभिः ।
न जातु सेव्यमानोऽपि गुप्तद्वारः स सूच्यते ॥ ५० ॥

प्रका—अथोपलब्धस्वप्रकृतिप्रवृत्तेरुत्तरकार्यनिश्चयार्थं यथाकालं मन्त्रमाह—मन्त्र इति । मन्त्रिभिरिति । "त्रिभिश्चतुर्भिर्वे"ति वचनात् । नन्वनुदिनमासेवने मन्त्रस्य भेदस्स्यादित्याह—नेति । मन्त्र इत्यनुषङ्गः । जातु कदाचिदपि । सेव्यमानोऽभ्यस्यमानोऽपि । गुप्तद्वार इत्यसूचने हेतुः । द्वारं मन्त्रगृहस्य । यद्वा दूतामात्यस्वामिनामिङ्गिताकाराणि मन्त्रनिस्सरणहेतुत्वाद्द्वाराणि । यदाह—"मन्त्रभेदो हि दूतामात्यस्वामिनामिङ्गिताकाराभ्या"मिति । सूच्यते अनुमीयते । स्मशब्दयोगाद्भूते लट् । न जातु सूच्यते स्मेत्यन्वयः । अन्येऽपि पाठा दृश्यन्ते । तेषु स्मशब्दं विना सूच्यते इति पाठो न युक्तो वर्तमानत्वायोगात् ॥

पदा—इत्थमुपलब्धप्रकृतिवृत्तान्तस्य नेतुरनन्तरकर्तव्यनिश्चयार्थं मन्त्रमाह—मन्त्र इति । तस्य मन्त्रिभिस्सह मन्त्रः प्रतिदिनं बभूव । मन्त्रः कार्यविचारः । प्रतिदिनं दिने दिने । इत्थं प्रतिदिनं क्रियमाणोऽपि मन्त्रः परैर्न विज्ञातोभूदित्याह—सेव्यमान इत्यादिना । सेव्यमामोऽपि जातु न सूच्यते स्म । जातु कदाचिदपि । सूच्यत इति कर्मणि लट् । परैरिति शेषः । इदं कार्यमुद्दिश्यायं मन्त्र इति परैर्न विज्ञातोऽभूदित्यर्थः । तत्र हेतुर्गुप्तद्वार इति । गुप्तानि रक्षितानि द्वाराणि विवराणि यस्य मन्त्रस्य । अत्र द्वारं मन्त्रशालायाः । यद्वा दूतामात्यस्वामिनामिङ्गितानि द्वारशब्देनोच्यन्ते । तेषां मन्त्रनिस्सरणे हेतुत्वात् । तदुक्तं "मन्त्रभेदो हि दूतामात्यस्वामिनामिङ्गिताकाराभ्या"मिति । मन्त्रगुप्ती राज्ञामवश्यकर्तव्येति भावः ॥

परेषु स्वेषु च क्षिप्तैरविज्ञातपरस्परैः ।
सोऽपसर्पैर्जजागार यथाकालं स्वपन्नपि ॥ ५१ ॥

प्रका—एवं स्वमन्त्रगुप्तिमुक्त्वा परतन्त्रज्ञानमाह—परेष्विति । परेष्वर्यादिषु तत्प्रकृतिषु च । स्वेषु मित्रादिषु तत्प्रकृतिषु च । चशब्दान्मध्यमोदासीनयोस्तत्प्रकृतिषु च । क्षिप्तैर्न्यस्तैः । अविज्ञातपरस्परैरन्योन्यमजानानैः । त्रयाणामेकवाक्ये हि परप्रवृत्तौ सम्प्रत्ययः, तदर्थमिदं विशेषणम् । अपसर्पाश्चारविशेषास्तीक्ष्णरसदादयः । "अपसर्पाः कर्मकरव्याजात् स्थाने वसन्ति य" इति यादवः । चारविशेषग्रहणञ्च प्रवृत्तिज्ञाने प्राथम्यात् ।

प्रथमं ह्यपसर्पाश्चारमुपलभन्ते। उपलब्धञ्च सत्रिषु सङ्क्रामयन्ति, ते च संस्थानपरेष्वर्पयन्ति, तदन्तेवासिनोऽपि स्वामिनीति क्रमः। जजागार परप्रवृत्तिज्ञाने सावधानोऽभूत्। अनेनातिदेशिकमन्यविषये गूढपुरुषप्रणिधानमुक्तम्। यदाह— "एवं शत्रौ च मित्रे च मध्यमे चावपेच्चरान्। उदासीने च तेषाञ्च तीर्थेष्वष्टादशस्वपि" इत्यादि ॥

पदा—इत्थं स्वमन्त्रगुप्तिमुक्त्वा परमन्त्रज्ञानमाह—परेष्विति। सः परेषु स्वेषु च क्षितैरपसर्पैर्जजागार। परेषु शत्रुषु। स्वेष्वात्मीयेषु। चशब्दान्मध्यमोदासीनानां ग्रहणम्। अत्र कामन्दकः—"एवं शत्रौ च मित्रे च मध्यमे चावपेच्चरान्। उदासीने च तेषाञ्च तीर्थेष्वष्टादशस्वपि" इति। क्षिप्तैर्न्यस्तैः। अपसर्पैश्चरैः। "अपसर्पः स्पशश्चरः" इति सिंहः। जजागार जागरणञ्चक्रे। परप्रवृत्तिज्ञाने सावधानोऽभूदित्यर्थः। अविज्ञातं परस्परमन्योन्यं यैः। अन्योन्यमजानानैरित्यर्थः। सर्वेषामेकवाक्यत्वे सति हि परप्रवृत्तेः परमार्थज्ञानमिति भावः। यथाकालं स्वपन्नपि स्वापोक्तकालानतिक्रमेण स्वापं कुर्वन्नपि। अत्र स्वपन्नपि जजागारेति विरोधः ॥

भव्यमुख्याःसमारम्भाः प्रत्यवेक्षानिरत्ययाः।
गर्भशालिसधर्माणस्तस्य गूढं विपेचिरे ॥ ५२ ॥

प्रका—एवमङ्गीकृतविनयान्तर्भूतानुष्ठानवर्गस्य नेतुस्तत्फलभूतं तन्त्रावापविषयाणां व्यापाराणां गुणयोगं फलयोगञ्चाह—भव्येति। भव्यं कल्याणं मुख्यं फलं येषाम्। अनेन भव्यारम्भित्वमुक्तम्। समारम्भाः स्वविषये दुर्गादयः परविषये सन्ध्यादयः। प्रत्यवेक्षा कियत्कृतं कथं वा कृतमिति, परैर्ज्ञायन्ते विहन्यन्ते वेति च निरूपणम्, तया निरत्यया निर्बाधाः। "अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽपि"इति केशवः। अनेन कल्यारम्भित्वमुक्तम्। यदाह—"शक्यकल्यभव्यारम्भी कल्याणोदय"मिति। स्तम्बाभ्यन्तर एव ये शालयः परिणमन्ति, ते गर्भशालयः। वल्लभस्तु माषादय इति। विपेचिरे पक्वफला अभवन्। अत्र भव्यमुख्या इत्यनेनारिषड्वर्गत्यागस्य सदर्थाभिनिवेशित्वलक्षणं फलमुक्तम्। प्रत्यवेक्षानिरत्यया इति चारेण परमन्त्रज्ञानफलम्।

गूढमिति स्वमन्त्रगुप्तेः ॥

पद्।—मन्त्रगुप्तेर्गुणयोगं फलयोगञ्चाह—भव्येति। तस्य समारम्भाः गूढं विपेचिरे। समारम्भा व्यापाराः। ते चात्र स्वविषये दुर्गादिकरणं परराष्ट्रे सन्धानादिकरणञ्च विवक्षितम्। गूढमिति क्रियाविशेषणम्। विपेचिरे पक्वास्समभवन्। कल्याणफलपर्यन्ता निर्विघ्नाश्च बभूवुरित्यर्थः। तत्र कल्याणफलपर्यन्तत्वे हेतुर्भव्यमुख्या इति। भव्यं कल्याणं मुख्यं फलं येषाम्। निर्विघ्नत्वे हेतुः—प्रत्यवेक्षानिरत्यया इति। प्रत्यवेक्षा प्रत्यवेक्षणम्। मया निर्दिष्टं कर्म मद्भृत्यैः कियत्कृतं यथावत्कृतं वा, परैर्ज्ञायते वा विहन्यते वेत्यादिरूपमनुसन्धानमित्यर्थः। तया निरत्यया निर्बाधाः। "अत्ययोऽतिक्रमे कृच्छ्रे दोषेपि" इति केशवः। स्तम्बाभ्यन्तर एव ये शालयः परिणमन्ति ते गर्भशालयः। कुलत्थादय इति यावत्। कोशिधान्यमिति वल्लभः। तैस्सधर्माणस्सदृशाः।

**अपथेन प्रववृते न जातूपचितोऽपि सः।**
**वृद्धौ नदीमुखेनैव प्रस्थानं लवणाम्भसः ॥ ५३ ॥**

प्रका—एवं फलैरुपचितस्यापि तस्यानुत्सेकान्नीतिमार्गलङ्घनन्नासीदित्याह—अपथेनेति। "पथो विभाषे"त्यकारः। "अपथन्नपुंसकम्" इति निपातः। अत्र प्रतिवस्तु वृद्धाविति ॥

पदा—एवम्भूतैर्व्यापारैस्सम्प्रवृद्धस्यापि तस्योत्सेकाभावान्नीतिमार्गलङ्घनं नाभूदित्याह—अपथेनेति। स उपचितोऽपि जात्वपथेन न प्रववृते। उपचितः प्रवृद्धः। अपथेनामार्गेण। "पथो विभाषा"इत्यकारः। "अपथन्नपुंसकम्"इति नपुंसकत्वम्। अत्र प्रतिवस्तूपमामाह वृद्धावित्यादिना। लवणाम्भसो वृद्धौ नदीमुखेनैव प्रस्थानम्। लवणाम्भसः लवणसमुद्रस्य। वृद्धौ सत्याम्। नद्येव मुखं नदीमुखम् ॥

**दुर्गाणि दुर्ग्रहाण्यासंस्तस्य रोद्धुरपि द्विषाम्।**
**न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥ ५४ ॥**

**प्रका**—तानेवोपचयहेतूनारम्भान् प्रपञ्चयति—दुर्गाणीति । "औदकपार्वतवार्क्षैरिणधान्वनानि पञ्च दुर्गाणि" । दुर्ग्रहाणि दुरासदानि । दुर्गविधानोक्तैः प्रकारैरिति शेषः । आसन्, जनपदमध्ये जनपदान्ते च शास्त्रप्रामाण्यात्तेन विहितानीत्यर्थः । द्विषां रोद्‌धुरिति । तस्य का त्राससम्भावनेति भावः । अत्र प्रतिवस्तु—न हीति॥

पद्मा—आरम्भानेव प्रपञ्चयति—दुर्गाणीति । तस्य दुर्ग्रहाणि दुर्गाण्यासन् । दुर्ग्रहाणि दुरासदानीत्यर्थः । "औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा" इति पञ्च दुर्गाणि । तानि कौटल्योक्तदुर्गविधानप्रकरणानुसारेण कृतवानित्यर्थः । किं भयेन तानि चकार ? नेत्याह—द्विषां रोद्धुरपीति । उक्तमर्थं प्रतिवस्तुना द्रढयति—न हीति । गजास्कन्दी सिंहो भयान्नहि गिरिगुहाशयः । गजास्कन्दी गजास्कन्दनशीलः । आस्कन्दनमभिभवः । गिरेर्गुहायां शेत इति गिरिगुहाशयः । अत्र द्विषां रोद्‌धुरिति गजास्कन्दीति च परस्परं बिम्बप्रतिबिम्बभावमनुभवतः । यथा सिंहस्य गिरिगुहाशयनं स्वभावः, तथा राज्ञोऽपि शास्त्रानुसारेण दुर्गविधानमिति भावः । "जनपदमध्ये जनपदान्ते च दुर्गविधानं कर्तव्यम्"इति शास्त्रं न ह्यतिक्रमितव्यमिति भावः ॥

**कामं प्रकृतिवैराग्यं सद्यः शमयितुं क्षमः ।**
**यस्य कार्यः प्रतीकारस्स तन्नैवोपपादयेत् ॥ ५५ ॥**

**प्रका**—एवमितरासामपि प्रकृतीनामास्पदत्वाद्दुर्गस्य दुर्गकर्मोक्त्वा निचयापचारसम्पन्नं हि मनुष्यदुर्गमिति "शिखरं मन्दरस्यापि निर्मनुष्यं विलुप्यते" इति वचनादनुरक्तपुरुषप्रकृत्यधिष्ठितमेव दुर्गं दुर्गम्, अन्यथा दुर्गलम्भोक्तैरुपायैरुपक्रान्तमरिणा यतो भज्येत, तस्माद्विरागकारणपरिहारेण दुर्गाणां क्षेमाराधनमकरोदित्याह—काममिति । अकामानुमतौ कामशब्दः । तथापि प्रकृतिवैराग्यशमनक्षमत्वेन नोपयोग इत्यर्थः । कुत इत्याह—यस्येति । वैराग्यं क्षयलोभयोरप्युपलक्षणम् । अथवा तद्ग्रहणन्तयोरपि तत्पर्यवसायित्वात् । तत्कारणानि प्रकृतिक्षयलोभविरागकारणप्रकरणोक्तानि द्रष्टव्यानि । सद्योऽनतीतकालम् । शमयितुं दानमानादिभिः । कार्यः कर्तव्यः । तदिति विराग

कारणम् । उपपादयेदुत्पादयेत् । सम्भावनायां लिङ् । तदुत्पादनसम्भावनैव नास्तीत्यर्थः । उदपादयदिति वा पाठः । यदाह—"अवक्षेपेण हि सतामसतां प्रग्रहेण च"इत्यादिना कारणान्यनुक्रम्य "प्रकृतीनां क्षयो लोभो वैराग्यञ्चोपजायते । क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम् । विरक्ता यान्त्यमित्रत्वं भर्तारं घ्नन्ति वा स्वयम् । तस्मात्प्रकृतिक्षयलोभविरागकारणानि नोत्पादयेत् । उत्पन्नानि वा सद्यः प्रतिकुर्वीत" इति ॥

**पदा**—अथ दुर्गाणामनुरक्तजनानधिष्ठितत्वे दुर्गलम्भोक्तैरुपायैरपरे गृह्णीयुरिति पूर्वोक्तमेव प्रजानुरागं तद्विपरीतानुष्ठानाभावमुखेन द्रढयति—काममिति । सः प्रकृतिवैराग्यं सद्यः शमयितुं क्षमः कामम् । प्रकृतीनां प्रजानां वैराग्यं विरागत्वम् । अनुरागशैथिल्यमिति यावत् । सद्य उत्पत्तिसमय एव । शमयितुं विनाशयितुम् । क्षमश्शक्तः । अकामानुमतौ कामशब्दः । तस्य तादृशेन सामर्थ्येन नात्र किञ्चिदपि प्रयोजनमिति भावः । निष्प्रयोजनत्वमेवोपपादयति—यस्येति । यस्य प्रतीकारः कार्यः । प्रतीकारः प्रतिक्रिया । स तदेव नोत्पादयेत् । तद्विरागकारणम् । तानि च कौटल्येनोक्ताद्विरागकारणप्रकरणादवगन्तव्यानि । कामन्दकस्तु सङ्क्षिप्योक्तवान् "अवक्षेपेण हि सतामसतां ग्रहणेन चे"त्यादिना । उपपादयेदिति सम्भावनायां लिङ् । प्रमादविमुखश्शास्त्रैकशरणश्च स कथन्तादृशङ्कर्मानुतिष्ठेदिति भावः ॥

**शक्येष्वेवाभवद्यात्रा तस्य शक्तिमतस्सतः**
**समीरणसहायोऽपि नाम्भःप्रार्थी दवानलः ॥ ५६ ॥**

**प्रका**— एवन्दृढीकृतमूलप्रत्यन्तस्य पराभियाने नियममाह— शक्येष्विति । शक्तिविषयेषु । शक्योच्छेदनपीडनकर्शनेष्वित्यर्थः । एवशब्देन तदविषयनिरासः । यात्रा विगृह्य यानम् । शक्तिमतश्शक्तित्रयसम्पन्नस्य । सतोऽपीति शेषः । अम्भःप्रार्थी अम्भोभियायी । अनेन शक्यारम्भित्वमुक्तम् । दक्षिणावर्तस्तु "शक्येषु हीनबलेषु । एवशब्देन च ज्यायसां व्यवच्छेद" इत्यादि व्याख्याय स्वयमेव "अस्य श्लोकस्य परात्मनोः परिच्छिद्येत्यादिना वक्ष्यमाणेन पौनरुक्त्यमस्त्येव । परिहारो मृग्य" इत्यभ्यधात् । अस्मदुक्तप्रकारे

च न पौनरुक्त्यम्। तथा हि—परात्मनोरित्यनेनाभियानकर्मणि यदाद्यं सूत्रस्थानीयं वाक्यं, "विजिगीषुरात्मनः परस्य च बलाबलं शक्तिदेशकालयात्राकालबलसमुद्दानकालपश्चात्कोपक्षयव्ययलाभापदां ज्ञात्वा विशिष्टबलो यायादन्यथाऽऽसीते"ति तस्यार्थस्संगृहीतः। ततश्चाभियातव्यस्याशक्यत्वमनियतम्। विशिष्टबलत्वे सति शक्यत्वात्। इदन्तु वाक्यं नियताशक्यविषयम्। नियताशक्यत्वञ्च दुस्साधदुर्गाश्रयत्वाद्दैवताप्रसादादन्यतो वा भवति। तत्र चातिशयिन्यपि शक्तिमत्ता विफलीभवति। अतिशयश्चात्र मतुपोर्थः। उपमानेन च नियताशक्यत्वमेव द्योत्यते। तच्च दुर्गाश्रयत्वेन सुप्रसिद्धम्। देवताप्रसादेन तु यथा त्रिभुवनातिशायिशक्तिसम्पदं मान्धातारं प्रति परमेश्वरप्रसादोपबृंहितस्य लवणस्य। अशक्येषु तु गुणान्तरेण सिद्धिमवापेति वाक्यशेषः॥

पद्मा—इत्थं दृढीकृतमूलप्रयत्नस्य नेतुः पराभियाने नियममाह—शक्येष्विति। तस्य शक्येष्वेव यात्राऽभवत्। शक्येषु शक्तिविषयेषु। प्रभुशक्त्यादिभिः शक्योच्छेदनपीडनकर्शनेष्वित्यर्थः। एवशब्देन शक्तेरविषयाणान्दुर्गाश्रितदेवताप्रसादादिमतां ग्रहणम्। यात्रा विगृह्य प्रस्थानमित्यर्थः। शक्तिमतस्सतः। अपिशब्दोऽर्थाद्द्रष्टव्यः। शक्तित्रयसम्पन्नस्यापीत्यर्थः। दवानलः समीरणसहायः अपि अम्भःप्रार्थी न। समीरणो वायुः सहायो यस्य। यद्यपि महावनं दहतो वायुसहायस्यानलस्य न किञ्चिदपि दुस्साधम्, तथापि जलाभियानन्न हि करोति॥

**न धर्ममर्थकामाभ्यां बबाधे न च तेन तौ।**
**नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु ॥ ५७ ॥**

प्रका—एवमैदम्पर्येण अनुष्ठीयमानेनार्थेन सुलभविषयत्वात्तत्पृष्ठपातिना स्वरससिद्धेन कामेन च नास्यैहिकप्रधानत्वाद्धर्मपीडाऽऽसीदित्याह—न धर्ममिति। अत्र हेतुर्वृद्धसंयोगविवर्धितं सहजमास्तिक्यं प्रतीयते च। न चास्यात्यास्तिक्याद्धर्मेणेतरपीडा भवतीत्याह—न चेति। चो वाक्यार्थसमुच्चये। अत्र हेतुरर्थस्य तत्साधनतया कामस्य तदुभयफलतया चावगमः। न च तथावगमे कामेनार्थहानिरित्याह—नार्थमिति। अत्र हेतुस्तस्य तदेकायत्तत्वावगमः। न चातिविजिगीषुतया अर्थेन

कामे माध्यस्थ्यमित्याह—कामं वेति। अत्र हेतुः—कामस्य जीवितफलतया पुत्रादिसाधनतया चावगमः। यदुक्तं—"* निस्पृहस्याप्रजस्यास्य तृणस्येव समा स्थिति"रिति। तस्मात्सदृशस्समानापेक्ष इत्यर्थः॥

पदा—इत्थमुपचितस्य धर्मार्थकामेषु तुल्यैव वृत्तिरासीदित्याह—नेति। सोऽर्थकामाभ्यां धर्मं न बबाधे। वृद्धसम्बन्धानुबन्धप्रवृद्धात्सहजादास्तिक्यादिति शेषः। आस्तिक्यमात्रपरत्वाद्धर्मेणेतरपीडा नासीदित्याह—तेन तौ च नेति। तेन धर्मेण। तौ अर्थकामौ। बबाध इत्यनुषज्यते सर्वत्रापि। अर्थस्य काममात्रसाधनत्वमवगम्य कामेनार्थहानिरपि नासीदित्याह—कामेनार्थं न। चकारोऽत्रापि द्रष्टव्यः। नापि विजिगीषामात्रपरत्वादर्थेन कामं वा। वाशब्दस्समुच्चये। कामस्य जीवितफलतया पुत्रादिप्राप्तिसाधनतया चावगमादिति शेषः। तदुक्तम्—"निस्सुखस्याप्रजस्यास्य तृणस्येव समा स्थिति"रिति। उक्तमर्थं सङ्कलय्य दर्शयति—त्रिषु सदृशः। आसीदिति शेषः। सदृशस्तुल्यापेक्ष इत्यर्थः॥

हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते।
तेन मध्यमशक्तीनि मित्राणि स्थापितान्यतः ॥ ५८ ॥

प्रका—एवं प्रासङ्गिकं पुरुषार्थेषु शैथिल्यं परिहृत्योक्तवक्ष्यमाणकर्मारम्भोपयोगित्वान्मित्रस्य मित्रविषयां वृत्तिमाह—हीनानीति। हीनशक्तीनि अनुपकर्तॄणि पराभियानादौ जनपदनिवेशादौ वोपकारक्षमाणि न भवन्ति। प्रवृद्धानि प्रवृद्धशक्तीनि। विकुर्वते उत्सेकाद्द्रुह्यन्ति। "अकर्मकाच्चे"ति तङ्। मध्यमशक्तीनि पराभिभवसहनक्षमाणि स्वानतिलङ्घीनि चेत्यर्थः। मित्राणि। अत्र कामन्दकः—"औरसन्तन्तुसम्बद्धं तथा वंशक्रमागतम्। रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विध"मिति। स्थापितानि कृतानि। स्थानाख्येनोदयेन योजितानि। यदाह—"क्षयः स्थानं वृद्धिरित्युदयास्तस्ये"ति॥

पदा—इत्थं प्रसङ्गागतं पुरुषार्थेषु शैथिल्यं परिहृत्य वक्ष्यमाणानामुक्तनाञ्च कर्मणां मित्रापेक्षत्वात्तद्विषयां प्रवृत्तिमाह—हीनानीति। मित्राणि हीनानि हीनबलानि अनुपकर्तॄणि पराभियानादौ जनपदनिवेशनादौ च नोपकार

* निस्सुखस्येति पाठान्तरम्।

क्षमाणि भवन्ति । प्रवृद्धानि विकुर्वते प्रवृद्धानि चेद्विकारं प्राप्नुवन्ति । उत्सेकादुद्रुह्यन्ति, आत्मानमप्यतिक्रम्य प्रवर्तन्त इत्यर्थः । "अकर्मकाच्चे"ति तङ् । अतः तेन मध्यमशक्तीनि मित्राणि स्थापितानि । अतः पक्षद्वये दोषदर्शनाद्धेतोः । मध्यमा शक्तिर्येषाम् । पराभिभवसहनक्षमाणि स्वानतिलङ्घीनि चेत्यर्थः । मित्रशब्दार्थनिर्णये कामन्दकः—"औरसन्तन्तुसम्बद्धं तथा वंशक्रमागतम् । रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विध"मिति । स्थापितानि कृतानीत्यर्थः ॥

परात्मनोः परिच्छिद्य शक्त्यादीनां बलाबलम् ।
ययावेभिर्विशिष्टश्चेत्परस्मादास्त सोऽन्यथा ॥ ५९ ॥

प्रका—अथ मित्रविषयव्यापारप्रसङ्गेन अमित्रविषयं यानासनलक्षणं व्यापारद्वयमाह—परात्मनोरिति । आदिशब्देन देशादयो गृह्यन्ते । बलाबलं कार्यजनने सामर्थ्यासामर्थ्यम् । एभिः शक्त्यादिभिः । विशिष्टोऽधिकः । परस्मायातव्यात् । पक्षान्तरमाह—आस्तेति । अन्यथा समत्वे हीनत्वे च ॥

पदा—परात्मनोरिति । स परात्मनोः शक्त्यादीनां बलाबलं परिच्छिद्य एभिर्विशिष्टश्चेद्ययौ । यातव्यस्य परस्यात्मनश्च शक्तिः प्रभुशक्तिः । आदिशब्देन कालदेशावस्थादयो गृह्यन्ते । बलाबलं कार्यजननसामर्थ्यमसामर्थ्यञ्च । एभिः शक्त्यादिभिः विशिष्टोऽधिकः ययौ युद्धार्थं प्रययौ । आत्मनः समबलत्वे हीनबलत्वे च किं कृतवानित्याह—अन्यथा आस्त । सन्धिविग्रहादीनां मध्ये आसनमेवाङ्गीचकार । अवसरप्रतीक्षणमेव कृतवानिति भावः ॥

**कोशादाश्रयणीयत्वमिति तस्यार्थसंग्रहः**
**अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥ ६० ॥**

**प्रका**—अथ सर्वव्यापाराणां कोशमूलत्वात् कोशविषयं व्यापारमाह—कोशादिति । कोशोऽर्थसञ्चयः । आश्रयणीयत्वमभिगम्यत्वम् । तदुक्तम्—"लोकप्रियत्वमर्थसंयोगेने"ति । इति अतो हेतोः । न लोभादित्यर्थः । अर्थसंग्रहशब्देनाध्यक्षप्राचारिकभृत्यभरणीयकोशादिसम्भरणोक्तार्थानुष्ठानमुक्तम् । अत्र प्रतिवस्तु—अम्बुगर्भ इति ॥

**पदा**—अथ सर्वप्रवृत्तीनां कोशमूलत्वात्तद्विषयां प्रवृत्तिमाह–कोशादिति। कोशादाश्रयणीयत्वमिति तस्यार्थसंग्रहः। कोशोऽर्थसञ्चयः। तस्माद्धेतोराश्रयणीयत्वमभिगम्यत्वगुणः। सर्वसेव्यत्वमिति यावत्। इतिशब्दो हेतौ। अतो हेतोः। अत्र कौटल्यः—"लोकप्रियत्वमर्थसंयोगेने"ति। न लोभादित्यर्थः। अत्र प्रतिवस्तु—अम्बुगर्भ इति। अम्बुगर्भो जीमूतः हि चातकैरभिनन्द्यत इति। कर्मणि लट् ॥

परकर्मापहः सोऽभूदुद्यतस्स्वेषु कर्मसु।
आवृणोदात्मनो रन्ध्रं रन्ध्रेषु प्राहरद्द्विषः ॥ ६१ ॥

**प्रका**— अथार्थस्यापादानभूमिभूतेषु कृष्यादिषूद्यममाह — परेति। अत्र परकर्मोपघातस्यापि वृद्धिहेतुत्वात्तेन सह स्वकर्मोद्यमो विधीयते। ततश्च द्योतकं विनापि समुच्चयोऽवसेयः। कथमित्याह — आवृणोदिति। रन्ध्रं व्यसनम्। जातावेकवचनम्। व्यसनेषु हि कर्मोपघातः शक्यः। प्राहरत् दाहविलोपनविध्वंसनापवाहनाद्यकरोत्। इदञ्च क्षयस्थानवृद्धिनिश्चयप्रकरणेषूक्तमनुष्ठानन्द्रष्टव्यम् ॥

**पदा**—अर्थादानोपायभूतां प्रवृत्तिमाह—परेति। स परकर्मापहोऽभूत्। परेषां शत्रूणां कर्माण्यपहन्तीति परकर्मापहः। तानि च कर्माणि दुर्गकरणगजग्रहणकृषिप्रभृतीनि। तानि हि स्वार्थविवृद्धेः परम्परया द्वारभूतानि। अथ साक्षादेव द्वारभूतेषु स्वकर्मसूद्यममप्याह–स्वेषु कर्मसूद्यत इति। चकारार्थो द्रष्टव्यः। अभूदित्यनुषज्यते। स्वेषु दुर्गकरणादिषूद्यतश्चाभूदित्यर्थः। अथ व्युत्क्रमेण तयोः प्रकारमाह–आवृणोदिति। स आत्मनो रन्ध्रमावृणोत्। रन्ध्रं व्यसनम्। जातावेकवचनम्। तत्तद्देशाधिकृतकार्यपुरुषविनाशादिरूपाणि व्यसनानि तन्नाशाप्रकाशनेन तदानीमेव तादृशपुरुषावस्थापनेन च छादयामासेत्यर्थः। द्विषां रन्ध्रेषु प्राहरच्च। परेषां रन्ध्राणि चारेभ्योऽवगम्य दाहविलोपनध्वंसनादिकञ्चकारेत्यर्थः। अत्रापि पूर्ववच्चकारो द्रष्टव्यः। अनेनोत्साहशक्तिरपि दर्शिता। इदञ्च क्षयस्थानवृद्धिनिश्चयप्रकरणे कौटल्योक्तं द्रष्टव्यम् ॥

पित्रा संवर्धितो नित्यं कृतास्त्रः साम्परायिकः।
तस्य दण्डवतो दण्डः स्वदेहान्न व्यशिष्यत ॥ ६२ ॥

**प्रका**—अत्रापेक्षणीयां दण्डसम्पदमाह—पित्रेति। संवर्धनन्दानमानादिभिः। स्वदेहपक्षे व्यायामादिभिः। साम्परायिको युद्धार्हः। दण्डवत इति भूमाद्यर्थे मतुपाऽन्येऽपि दण्डगुणास्सङ्गृहीताः। अत्र कामन्दकः—"पितृपैतामहो वश्यः संहतो दत्तवेतनः। प्रख्यातपौरुषो जन्यकुशलः कुशलैर्वृतः॥ नानाप्रहरणोपेतो नानायुद्धविशारदः। नानायोधसमाकीर्णो नीराजितहयद्विपः॥ प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः। अद्वैध्यः क्षत्रियप्रायो दण्डो दण्डवतां मतः" इति। स्वदेहान्न व्यशिष्यत एवंविधं मौलबलं स्वशरीरमिव तस्य कार्येषु विधेयमासीदित्यर्थः। विशेषणानाञ्च स्वदेहेनार्थशक्त्या समन्वयः। अत्र दण्डसम्पदा प्रभुशक्तिः, स्वदेहसम्पदोत्साहशक्तिश्च प्रदर्शिता। मन्त्रशक्तिस्तु प्रागुक्ता॥

**पदा**— अथ पूर्वोक्तेषु प्रकारेष्ववश्यापेक्षणीयां दण्डसम्पदमाह—पित्रेति। दण्डवतस्तस्य दण्डः स्वदेहान्न व्यशिष्यत। दण्डवत इति भूमाद्यर्थे मतुप्। प्रशस्तेन महता च दण्डेन नित्ययुक्तस्येत्यर्थः। दण्डः सेना। स्वदेहान्न व्यशिष्यत विशेषयुक्तो नाभूत्। आत्मदेहोपमोऽभूदित्यर्थः। स्वदेहोपमया स्वाधीनता व्यज्यते। सादृश्यमेव विशेषणैराह – पित्रेत्यादि। पित्रा नित्यं संवर्धितः सम्यग्वर्धितः दानमानादिभिः। स्वदेहपक्षे व्यायामादिभिः। कृतास्त्रः कृतास्त्रपरिश्रमः। सम्परायं युद्धमर्हतीति साम्परायिकः। अत्र दण्डवत इति मतुप्प्रत्ययेन अनुक्ता अपि दण्डगुणाः सङ्गृहीताः। अत्र कामन्दकः, "पितृपैतामहो वश्यः संहतो दत्तवेतनः। प्रख्यातपुरुषो जन्यकुशलः कुशलैर्वृतः॥ नानाप्रहरणोपेतो नानायुद्धविशारदः। नानायोधसमाकीर्णो नीराजितहयद्विपः॥ प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः। अद्वैध्यः क्षत्रियप्रायो दण्डो दण्डविदादृतः॥" इति। एवंविधो मौलजनस्स्वशरीरमिव तस्य कार्येषु विधेय आसीदित्यर्थः॥

सर्पस्येव शिरोरत्नं नास्य शक्तित्रयं परः।
स चकर्ष परस्मात्तदयस्कान्त इवायसम् ॥ ६३ ॥

**प्रका**—तदेतच्छक्तित्रयमन्येन नापाहारि, अन्यदीयेन चैतत्स पुपोषे-त्याह — सर्पस्येति। चकर्ष आत्मगतं चकार। कर्षणोपायश्च हीनशक्तिपूरणादिषु प्रकरणेषु द्रष्टव्याः। अय एवायसम्। अत्रोपमानाभ्यां दुष्करत्वसुकरत्वे गम्येते॥

**पदा**—इत्थं शक्तित्रयं प्रतिपाद्य तस्य परानतिक्रमणीयत्वं नेतुः परशक्त्याहरणसामर्थ्यञ्चाह – सर्पस्येति। परः अस्य शक्तित्रयं न चकर्ष आत्मगतन्न चकार। सर्पस्य शिरोरत्नमिव। आत्मसात्करणाकाङ्क्षायां सत्यामपि अत्यन्तासाध्यत्वमुपमया ध्वन्यते। स परस्मात्तच्चकर्ष। तत् शक्तित्रयम्। चकर्ष, हीनशक्तिपूरणे कौटल्योक्तप्रकारेणेति शेषः। शक्तित्रयशब्दोऽत्र तत्सम्पादितद्रव्यपरः। परगतापि शक्तिः कुशलैराकृष्यते। यथा सामदानादिभिः परसैनिकजनः। अयस्कान्त आयसमिव। अय एवायसम्। अत्यन्तसुकरत्वमुपमया द्योत्यते॥

वापीष्विव स्रवन्तीषु वनेषूपवनेष्विव।
सार्थाः स्वैरं तदीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥ ६४ ॥

**प्रका**—अथ शक्तित्रयफलभूतामुद्यमविषयत्वेनोक्तानां कर्मणां सिद्धिं श्लोकत्रयेणाह—वापीष्विति। स्रवन्त्यो नद्यः। सार्था वणिग्व्रजाः। स्वैरं स्वच्छन्दम्। अनेन ग्राहचोरदावाग्निव्यालादीनां कण्टकशोधनोक्तैरुपायैर्निराकरणेन जलस्थलभेदभिन्नस्य वणिक्पथस्य प्रवृत्तिरुक्ता॥

**पदा**—इत्थमनुष्ठितानां कर्मणां फलमाह—वापीष्वित्यादिना। सार्थाः वापीष्विव स्रवन्तीषु उपवनेष्विव वनेषु तदीयेषु वेश्मस्विवाद्रिषु स्वैरं चेरुः। सार्था वणिग्जनाः। "वापी तु दीर्घिके"त्यमरः। स्रवन्त्यो नद्यः। उपवनेषूद्यानेषु। तदीयेषु राजसम्बन्धिषु। अनेन ग्राहचोरदावाग्निव्यालादीनां कण्टकोद्धरणोक्तैरुपायैर्निराकरणमुक्तम्। तेन च जलस्थलादिभेदभिन्नस्य वणिक्पथस्य स्वैरसञ्चारयोग्यत्वम्॥

तपो रक्षन् स विघ्नेभ्यस्तस्करेभ्यश्च सम्पदः ।
यथास्वमाश्रमैश्चक्रे वर्णैरिव षडंशभाक् ॥ ६५ ॥

**प्रका**—तपःकृष्योस्सिद्धिमाह—तप इति । अत्राप्रकृतस्यापि तपस उपादानं सर्वस्यापि नायकव्यापारस्य धर्मप्रधानतां द्योतयितुम् । विघ्नेभ्यो राक्षसादिभ्यः । सम्पदो विभूतीः । पदार्थानतिवृत्तौ यथाशब्दः । स्वधनैरित्यर्थः । आश्रमैस्तपस्विभिरित्यर्थः । चक्रे, कर्मणि लिट् । यथैतं वर्णा धान्यषड्भागं लम्भयन्ति, तथा तपस्विनोपि तपःषड्भागमित्यर्थः । षड्भागश्च दशभागादेरुपलक्षणम् । यथाह—"धान्यषड्भागं पण्यदशभागं हिरण्यञ्चास्य भागधेयं कल्पयामासु"रिति ॥

**पदा**—तप इति । स वर्णैरिवाश्रमैर्यथास्वं षडंशभाक् चक्रे । वर्णैर्ब्राह्मणादिभिः । आश्रमशब्देनात्राश्रमस्थास्तपस्विनो लक्ष्यन्ते । पदार्थानतिवृत्तौ यथाशब्दः । आत्मीयधनानतिक्रमेणेत्यर्थः । षष्ठोऽशः षडंशः । आत्मचतुर्भाग इतिवदत्रापि द्रष्टव्यम् । यथा वर्णा धान्यषड्भागं ददति, तथा तपस्विनस्तपष्षड्भागमित्यर्थः । "तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः" इति शाकुन्तळे च । चक्रे इति कर्मणि लिट् । षडंशार्पणे हेतुमाह—तप इत्यादिना । विघ्नेभ्यस्तपो रक्षन् । विघ्नेभ्यो राक्षसादिभ्य इत्यर्थः । तस्करेभ्यः सम्पदश्च । रक्षन्नित्यनुषज्यते । सम्पदो धनधान्यादिरूपाः ॥

खनिभिः सुषुवे रत्नं क्षेत्रैः सस्यं वनैर्गजान् ।
दिदेश वेतनं तस्मै रक्षासदृशमेव भूः ॥ ६६ ॥

**प्रका**—कर्मान्तराणां सिद्धिमाह—खनिभिरिति । खनिराकरः । रत्नं माणिक्यादि । माणिक्यस्य चत्वार आकराः । यथागस्त्ये रत्नशास्त्रे "क्षेत्राणि तत्र चत्वारि माणिक्यस्य यथा जगुः । सिंहळः प्रथमः प्रोक्तस्तथा कालपुरं परम् ॥ आन्ध्रस्तृतीय आदिष्टश्चतुर्थस्तुम्बुरुः स्मृतः ॥" इति । वज्रस्याष्टौ । तथा बुद्धपटे, "हैममातङ्गसौराष्ट्राः पौण्ड्रकालिङ्गकौसलाः । वेण्वातटाः ससौवीरा वज्रस्याष्टाविहाकराः ॥" इति । मौक्तिकस्याप्यष्टौ । "द्विपेन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषान्तु शुक्त्युद्भवमेव

भूरि'॥ इति। वैडूर्यस्य, 'कल्पान्तकालक्षुभिताम्बुराशेर्निर्ह्रादकल्पाद्दितिजस्य नादात्। वैडूर्यमुत्पन्नमनेकवर्णं शोभाभिरामद्युति रत्नवर्यम् ॥ अविदूरे विडूरस्य गिरेरुत्तुङ्गरोधसः। कोङ्कचोलकसीमान्ते मणेस्तस्याकरोऽभवत् ॥' इति। मरतकस्य, 'दानवाधिपतेः पित्तमादाय भुजगाधिपः। द्विधाकुर्वन्निव व्योम त्वरया वासुकिर्ययौ ॥ स तदा स्वशिरोरत्नप्रभादीप्ते नभोम्बुधौ। राजतः स महानेकः खण्डसेतुरिवाबभौ ॥ ततः पक्षनिपातेन संहरन्निव रोदसी। गरुड्मान् पन्नगेन्द्रस्य प्रहर्तुमुपचक्रमे ॥ सहसैव मुमोच तत्फणीन्द्रस्सुरसाद्युक्ततुरुष्कपादपायाम्। नळिकावनगन्धवासितायामवनीन्द्रस्य गिरेरुपत्यकायाम् ॥ तस्य प्रवाससमनन्तरकालमेव तद्बर्बरालयमतीत्य रुपासमीपे। स्थानं क्षितेरुपपयोनिधितीरलेखं तत्प्रत्ययात्मरतकाकरतामवाप'इति। नीलस्य, "तत्रैव सिंहळवधूकरपल्लवाग्रव्याधूतलोललवलीकुसुमप्रवाळे। देशे पपात दितिजस्य नितान्तकान्तं फुल्लासितोत्पलदलद्युति नेत्रयुग्मम् ॥ तत्प्रत्ययादुभयशोभनवीचिभासा विस्तारिणी जलनिधेरुपकच्छभूमिः। प्रोद्भिन्नकेतकवनप्रतिबद्धरेखा सान्द्रेन्द्रनीलमणिरत्नचिता बभूव ॥" इति। रुधिराक्षस्य, "हुतभुग्रूपमादाय दानवस्य यथास्पृहम्। नर्मदायां विचिक्षेप किञ्चिच्छिन्नानि भूमिषु ॥ तत्रेन्द्रगोपकनिभं शुकपत्नवर्णं संस्थानतः प्रकटपीलुसमानदेहम्। नानाप्रकारविहितं रुधिराक्षमग्र्यं सम्भूतमस्य खलु मूल्यमसारमेव"इति। स्फटिकस्य, "कावेरीविन्ध्ययवनचीननेपाळभूमिषु। लाङ्गली व्याकिरन्मेदो दानवस्य प्रयत्नतः॥ आकाशशुद्धमुत्पन्नममलं स्फटिकं ततः।" इति। विद्रुमस्य, "छिन्नपक्षो ज्वरो नाम्ना विद्रुमस्सागरे किल। रुमासमीपे पतितो जलमध्ये प्रतिष्ठितः ॥"इति। क्षेत्रैर्व्रैहेयकौद्रवीणमौल्गीनादिभिः। वनैः प्राच्यादिभिर्गजाकरभूतैरष्टभिः। अत्र राजपुत्रः, "प्राच्यं कारूशकञ्चैव दाशार्णिकमतः परम्। आङ्गरेखञ्च कालिङ्गमापरान्तिकमेव च ॥ सौराष्ट्रकं पाञ्चजनं वनान्यष्टौ च दन्तिनाम्।" इति। वेतनं भृतिम्। रक्षासदृशं यथा रक्षा क्वचित्कदाचित्किञ्चिदप्यखण्डितं तथा। वेतनं रत्नाद्यात्मकं देवी विश्वम्भरा प्रसन्ना सती ददावित्यर्थः। अनयोरस्य सिद्धीनामभूतपूर्वता दर्शिता। प्रागुक्तस्यापि कृषिफलस्य विशेषप्रतिपादनायेहोपादानम् ॥

**पदा** —खनिभिरिति। भूस्तस्मै रक्षासदृशमेव वेतनं दिदेश। रक्षासदृशमिति क्रियाविशेषणम्। वेतनं भृतिः। यथा रक्षा क्वचित् कदा-

चिदप्यखण्डिता, तथा रत्नाद्यात्मकं वेतनमपि वसुन्धरा तस्मै प्रसन्ना दत्तवती-त्यर्थः। दानप्रकारमेवाह – खनिभिरित्यादिना। खनिभिः रत्नं सुषुवे। खनिभिराकरैः रत्नं माणिक्यादिकम्। सुषुवे प्रसूतवती। सर्वरत्नानामाकर-भूतैव वसुन्धरा। तत्र माणिक्यस्याकराश्चत्वारः। यथागस्त्ये रत्नशास्त्रे, "क्षेत्राणि तत्र चत्वारि माणिक्यस्य यथा जगुः। सिंहळः प्रथमः प्रोक्तस्तथा काळपुरं परम्॥ आन्ध्रस्तृतीय आदिष्टश्चतुर्थस्तुम्बुरुः स्मृतः।" इति। वज्रस्याष्टावकराः। मौक्तिकस्याप्यष्टौ इति तत्तच्छास्त्रेभ्योऽवगन्तव्यम्। तथाभूतायाञ्च समुद्रपर्यन्तायां वसुन्धरायां वशवर्तिन्यां प्रसन्नायाञ्च तस्य किञ्चिन्न सुलभमिति भावः। क्षेत्रैः सस्यम्। सुषुव इत्यनुषज्यते। क्षेत्रैर्व्रीह्याद्याकरैः। तेऽपि पूर्ववद्बहु-विधाः। वनैर्गजान्। गजवनानामपि बहुविधत्वं द्रष्टव्यम्॥

स गुणानां बलानाञ्च षण्णां षण्मुखविक्रमः।
बभूव विनियोगज्ञस्साधनीयेषु वस्तुषु॥ ६७॥

प्रका—अथास्य परविषये कर्मसु कौशलमाह—स इति। गुणानां सन्ध्यादीनां विनियोगष्षाड्गुण्याधिकरणोक्तः। बलानां मौलादीनां विनियोगोऽ-भियास्यत्कर्मणि साङ्ग्रामिके चोक्तः॥

पदा—अथैवंविधफलोदये किञ्चित्रमिति द्योतयन्नन्तरा तस्य षाड्गुण्य-प्रयोगकौशलमाह—स इति। स षण्णां गुणानां बलानाञ्च साधनीयेषु वस्तुषु विनियोगज्ञः बभूव। गुणाः सन्ध्यादयः। ते हि षड्विधाः। बलानि मौलभृतकादीनि। तान्यपि षड्विधानि। साधनीयानि वस्तूनि परविजया-दीनि। विनियोगज्ञः विभज्य इदानीं सन्धिप्रयोगः कार्यः, इदानीन्तु विग्रह इति गुणानां विनियोगः, अस्मिन् कर्मण्येते कुशलाः, अस्मिन् पुनरेते, वनदुर्गाश्रितानां जयेष्वाटविका इत्यादि बलानां विनियोगः, तज्ज्ञानान इत्यर्थः। यो यस्मिन् कर्मणि कुशलः, तन्तस्मिन्नेव योजयेदिति हि चाणक्यसूत्रम्। षण्मुखः स्कन्दः तस्य विक्रम इव विक्रमो यस्य। अनेन नीतिशौर्याभ्यां सहै-वास्य व्यापार इति द्योत्यते। तस्य किन्न साध्यमिति भावः॥

इति क्रमात्प्रयुञ्जानो दण्डनीतिश्चतुर्विधाम् ।
आ तीर्थादप्रतीघातां स तस्याः फलमानशे ॥ ६८ ॥

प्रका--एवमनुष्ठानस्य फलमाह--इतीति । क्रमात् शास्त्रचोदनामनुसृत्येत्यर्थः । दण्डनीतिं राजविद्याम् । अत्र कामन्दकः, "दमो दण्ड इति प्रोक्तस्तस्माद्दण्डो महीपतिः । तस्य नीतिर्दण्डनीतिर्नयनं नीतिरुच्यते ॥" इति । चतुर्विधां सामाद्युपायभिन्नामिति व्याख्यातारः । वयन्तु लब्धप्रशमनविनयतन्त्रावापभिन्नामिति मन्यामहे । आ तीर्थात् । तीर्थानि मन्त्रिपुरोहितयुवराजसेनापतिदौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसन्निधातृप्रदेष्टृनायकपौरव्यावहारिककर्मान्तिकमन्त्रपरिषदध्यक्षदण्डदुर्गान्तपाटविकाः । एते हि दण्डनीतेरवतारभूतास्तीर्थमित्युच्यन्ते । स्वपरविषये मन्त्र्यादीनां यं यमुद्दिश्य प्रयुज्यते, तत्र तत्र आत्मोदयान्तमप्रतीघातामव्याहतां दण्डनीतिमुक्तप्रकारेण प्रयुञ्जानस्स तस्याः फलं प्राप । फलञ्च द्वादशराजकनेतृत्वलक्षणं प्राधान्यम् । यतो दण्डनीतेस्तदेव विषयः । यत्तु फलं साम्राज्यमिति व्याख्यानम्, तदसत् । तस्य राजा राज्ञां बभूव स इति वक्ष्यमाणत्वात् ॥

पदा—अथैवं विधस्यानुष्ठानस्य फलमेवाह—इतीति । चतुर्विधां दण्डनीतिमिति क्रमात्प्रयुञ्जानः स तस्याः फलमानशे । चतुर्विधां लब्धप्रशमनविनयतन्त्रावापभेदेन चतस्रो विधाः प्रकारा यस्याः । दण्डनीतिं राजविद्याम् । अत्र कामन्दकः, "दमो दण्ड इति प्रोक्तस्तस्माद्दण्डो महीपतिः । तस्य नीतिर्दण्डनीतिर्नयनन्नीतिरुच्यते ॥" इति । क्रमात् शास्त्रोक्तक्रममनुसृत्य । फलन्तु तस्य द्वादशराजनेतृत्वलक्षणम् । आनशे प्राप्तवान् । तीर्थादा अप्रतिघाताम् । तीर्थं मन्त्र्यादि । मन्त्रिपुरोहितयुवराजसेनापतिप्रभृतयो हि दण्डनीतेः प्रवर्तका इत्यवतारभूतत्वात्तीर्थशब्देनोच्यन्ते । मन्त्रिपुरोहितादिवर्गमारभ्य चतुस्समुद्रमध्यवर्तिराजपर्यन्तमप्रतीघाताम् । प्रतीघातो प्रतिहतिः तद्रहिताम् । "आदौ प्रजारञ्जनमथ तासां विनयः, पुनश्च स्वराष्ट्रे परिपन्थिभूतानां शिक्षा, ततः परराष्ट्रे व्यापार" इति पूर्वोक्तेन प्रकारेण कौटल्यादिशास्त्रोक्तक्रममनुसृत्य चतुर्विधां दण्डनीतिं प्रयुञ्जानस्स भूपतिर्द्वादशानामपि राज्ञां शिक्षारक्षादिषु समर्थो बभूवेत्यर्थः ॥

कूटयुद्धविधिज्ञेऽपि तस्मिन् मार्गेण योधिनि ।
भेजेऽभिसारिकावृत्तिं जयश्रीर्वीरकामिनी[1] ॥ ६९ ॥

प्रका—अथैवं समग्रशक्तिसिद्धेरश्वमेधार्थं दिग्विजयमाह—कूटयुद्धेति । 'विभीषणमवस्कन्दः प्रमादव्यसनार्दनम् । एकत्र त्यागघातौ च कूटयुद्धस्य लक्षणम्' इति कौटल्यः । मार्गेण न्यायेन योधीति युधेर्ग्रहादित्वाण्णिनिः । अच्छलप्रहारिणीत्यर्थः । अभिसारिकाया वृत्तिमभिसारणं भेजे । अत्र हेतुर्वीरकामिनीति । ताच्छील्ये णिनिः ॥

पदा—इत्थं समग्रशक्तिसम्पन्नस्य तस्याश्वमेधार्थं दिग्विजयमाह—कूटयुद्धेति । कूटयुद्धविधिज्ञे अपि मार्गेण योधिनि तस्मिन् जयश्रीरभिसारिकावृत्तिं भेजे । कूटयुद्धं छलयुद्धम् । तस्य लक्षणे कौटल्यः—"विभीषणमवस्कन्दः प्रमादव्यसनार्दनम् । एकत्र त्यागघातौ च कूटयुद्धस्य लक्षणम्" इति । मार्गेण न्यायेन योधिनीति युधेर्ग्रहादित्वाण्णिनिः । "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" । तस्या वृत्तिं प्रवृत्तिमभिसारणमिति यावत् । भेजे प्राप्तवती । तत्र हेतुर्वीरकामिनीति । वीरं कामयितुं शीलमस्या इति तथेति ताच्छील्ये णिनिः ॥

प्रायः प्रतापभग्नत्वादरीणां तस्य दुर्लभः ।
रणो गन्धद्विपस्येव गन्धभिन्नान्यदन्तिनः[2] ॥ ७० ॥

प्रका—विशेषमाह—प्राय इति । दुर्लभो विरळः । गन्धेन भग्नाः पलायिताः ॥

पदा—दिग्विजये तस्य विशेषमाह—प्राय इति । अरीणां प्रायः प्रतापभग्नत्वात्तस्य रणः दुर्लभः । शत्रूणां प्रायः प्रतापमात्रेण भङ्गं प्रापितत्वात्तस्य रणो विरळोऽभूत् । नाभूदित्यर्थः । गन्धभिन्नान्यदन्तिनः गन्धद्विपस्येव । गन्धद्विपो गन्धेन मदगन्धेनैव भिन्नाः पलायिता अन्ये दन्तिनो येन ।

1 गामिनीत्यपि पाठः । 2 भिन्नान्येत्यपि पाठः ।

मत्तहस्ती । "असह्यमाघ्राय मदं तदीय"मितिवत् । रणं विनैव करं ददुरिति भावः ॥

प्रवृद्धो हीयते चन्द्रस्समुद्रोऽपि तथाविधः ।
स तु तत्समवृद्धिश्च न चाभूत्ताविव क्षयी ॥ ७१ ॥

**प्रका**—एवं दिगाक्रमणप्रवृत्तस्य बलकोशयोर्वृद्धिरासीदित्याह—प्रवृद्ध इति । हीयत इति कर्मकर्तरि । ताभ्यामस्य साम्यं व्यतिरेकञ्चाह—स त्विति । वृद्धेस्तत्समत्वमनुक्षणजायमानत्वम् ॥

**पदा**— इत्थं दिग्विजयप्रवृत्तस्य तस्य कोशदण्डयोर्वृद्धिरासीदित्याह—प्रवृद्ध इति । चन्द्रः प्रवृद्धः हीयते । प्रवृद्धो वृद्धिं प्राप्तः । हीयते हीनो भवति। कर्मकर्तरि प्रयोगः। स्वयमेव क्षीणो भवतीत्यर्थः ! समुन्द्रोऽपि तथाविधः। प्रवृद्धौ जातायां स्वयमेव हीयत इत्यर्थः। राज्ञस्ताभ्यां साम्यं व्यतिरेकञ्चाह —स त्विति। स तु तत्समवृद्धिश्च ताविव क्षयी नाभूच्च । वृद्धेस्तत्समत्वमनुक्षणजायमानत्वम् ॥

सन्तस्तस्याभिगमनादत्यर्थं महतः कृशाः ।
उदधेरिव जीमूताः प्रापुर्दातृत्वमर्थिनः ॥ ७२ ॥

**प्रका**—एवं प्रवृद्धस्य कोशस्य पाले प्रतिपादनमाह—सन्त इति । तस्येति कर्मणि षष्ठी । अत्यर्थं कृशास्सन्तोऽर्थिनस्तस्य महतोऽभिगमनाद्दातृत्वं प्रापुरित्यन्वयः । महतो दातुश्च तस्याभिगमनान्महत्त्वं दातृत्वञ्चासीदित्यर्थः । तद्गुणश्चायमलङ्कारः । "स्वमुत्सृज्य गुणं योगादत्युज्वलगुणस्य यत् । वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः" इति ॥

**पदा**—एवं प्रवृद्धस्य कोशस्य पाले प्रतिपादनमाह—सन्त इति । अर्थिनस्तस्य अभिगमनाद्दातृत्वमापुः । अर्थिनो याचकाः । अभिगमनात् प्राप्तेः । न केवलं धनिकत्वमात्रं दातृत्वमपीत्वर्थः । जीमूता उदधेरिव । अभिगमनादित्यनुषज्यते । यथा मेघास्समुद्रस्याभिगमनाज्जलदातारो भवन्ति, तथेत्यर्थः । साधारणधर्ममाह—अत्यर्थमित्यादिना । अत्यर्थं कृशास्सन्तः ।

कृशा दरिद्राः। मेघे तु कृशत्वं गौरवाभावात्। अत्यर्थं महतो धनिकस्य। समुद्रस्य तु महत्त्वमगाधत्वादिना। महतोऽभिगमनान्महत्त्वञ्चापुरित्यर्थात् सिद्ध्यति। अत्र तद्गुणालङ्कारः। "स्वमुत्सृज्य गुणं योगादत्युज्वलगुणस्य यत्। वस्तु तद्गुणतामेति भण्यते स तु तद्गुणः" इति ॥

स्तूयमानस्स जिह्राय स्तुत्यमेव समाचरन् ।
तथापि ववृधे तस्य तत्कारिद्वेषिणो यशः ॥ ७३ ॥

प्रका—एवं विविधविक्रमवितरणप्रकर्षस्य फलं यशोलक्षणं गुणान्तरसहभावेनाह—स्तूयमान इति। स्तुत्यं समाचरन्नेव स्तूयमानो जिह्रायेत्यन्वयः। अत्र लक्षणे शता हीसनयेऽपि स्तुत्यं समाचरतीति विरोधः। तथाचरणेन हि स्तूयते स्तवनेन च लज्जते। विरोधान्तरमप्याह—तथापीति। यद्यपि स्तुत्या लज्जते, तथापि स्तुत्यात्मकं यशो ववृध इति। तत्र हेतुः—तत्कारिद्वेषिणः। स्तुतिकारितां द्विषतः। भावप्रधानो निर्देशः। स्तुत्याचरणद्वेषजं यशोस्याऽविकत्थनत्वेनोपबृंहितमित्यर्थः ॥

पदा—इत्थमनुष्ठीयमानयोर्विक्रमवितरणयोर्यशोरूपं फलं गुणान्तरसद्भावेन नितरां ववृध इत्याह—स्तूयमान इति। स्तूयमानः स जिह्राय। स्तूयमान इति कर्मणि लटि शानच्। जिह्राय लज्जितवान्। किमात्मनस्तादृशगुणाभावाल्लज्जा, नेत्याह—स्तुत्यमेव समाचरन्निति। एवशब्दो निन्द्यकर्मणामत्यन्ताभावमाह। स्तुतियोग्यं कर्मैव सम्यगनुतिष्ठतीत्यर्थः। लज्जया स्तुतेरनिष्टत्वं प्रकटयन्नपि स्तुतियोग्यं कर्माचरतीति विरोधः। आत्मगुणश्रवणे लज्जा हि महतां स्वभाव इति भावः। विरोधान्तरमप्याह—तथापीत्यादिना। तथापि तस्य यशः ववृधे पूर्वस्मादधिकमभूत्। तत्र हेतुस्तत्कारिद्वेषिण इति। तत्कारीति भावप्रधानो निर्देशः। स्तुतिकारित्वं द्वेष्टुं शीलमस्येति तथा। विक्रमवितरणादिभिः प्रीतेषु जनेषु स्तुवत्सु समीचीनेयं रचनेत्यादिवचस्तेषां विरचनाचातुर्यमेवाभिनन्दति स्म। न तदन्तर्गतमात्मनस्तादृशगुणयोगित्वम्। तत्र तु स्तुतिकारित्वं हि महाकवीनां स्वभावः। नाहमेतादृशगुणशालीत्यादिवचनैरुदास्ते स्मेति भावः। सकलगुणपरिपूर्णस्य तस्याविकत्थनात्मकगुणान्तर-

योगात्तद्विषयापि स्तुतिः प्रसृतेति यशसः पूर्वस्मादपि परिवृद्धिरासीदिति तात्पर्यार्थः ॥

दुरितं दर्शनेन घ्नंस्तत्त्वार्थेन नुदंस्तमः ।
प्रजाः स्वतन्त्रयाञ्चक्रे शश्वत्सूर्य इवोदितः ॥ ७४ ॥

**प्रका**—अथास्य स्वकर्मप्रकर्षमाह—दुरितमिति । दुरितं दारिद्र्यं पापं वा । "अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते" इति वचनान्द्राजमात्रस्यैव दर्शनं पावनम्, किमुत तथाविधस्येति भावः । दारिद्र्यपक्षे दर्शनं राजकर्तृकमवसेयम् । तत्त्वार्थेन तत्त्वार्थप्रतिपादनेन । तमोऽज्ञानम् । प्रजाश्चतुरन्तवर्तिनीः । स्वतन्त्रयाञ्चक्रे पुपोष । व्यापारे वा न्ययोजयदिति वल्लभः । स्ववशीचकारेति दक्षिणावर्तः । शश्वन्नित्यम् ॥

**पदा**—अथास्य स्वधर्मानुष्ठानजं गुणमाह— दुरितमिति । स प्रजाः शश्वत् स्वतन्त्रयाञ्चक्रे । प्रजाश्चतुःसमुद्रमध्यवर्तिनो जनान् । शश्वन्नित्यम् । स्वतन्त्रयाञ्चक्रे स्वच्छन्दवृत्तीश्चकार । उदितस्सूर्य इव । तत्प्रकारमेवाह —दुरितमित्यादिना । दर्शनेन दुरितं घ्नन् । दुरितं पापं घ्नन् अपनयन् । हन्तेश्शता । राजदर्शनं हि दुरितहरम् । यथाहुः, "अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः । दृष्टमात्राः पुनन्त्येते" इति । राजमात्रस्यापि दर्शनं पावनम्, किमुत तथाविधस्येत्यर्थः । तत्त्वार्थेन तमो नुदन् । तत्त्वार्थेन तत्त्वार्थप्रतिपादनेनेति यावत् । तमोऽज्ञानमन्धकारञ्च । यथा समुदितस्सूर्यो देवतात्वाद्दर्शनमात्रेण दुरितं परिहरन्नन्धकारहरणपुरस्सरं सकलपदार्थतत्त्वज्ञानञ्च प्रयच्छन् प्रजाः स्वच्छन्दवृत्तीः करोति, तथायमपि दारिद्र्यरोगादिकारणभूतं दुरितं परिहृत्य तत्त्वज्ञानोपदेशेन परमात्मावबोधञ्च कुर्वन्निहलोकपरलोकभयाभावेन स्वच्छन्दवृत्तीश्चकारेत्यर्थः ॥

इन्दोरगतयः पद्मे सूर्यस्य कुमुदेऽंशवः ।
गुणास्तस्य विपक्षेऽपि गुणिनो लेभिरेऽन्तरम् ॥ ७५ ॥

**प्रका**—गुणानामविशेषेण प्रकर्षमाह—इन्दोरिति । अगतयोऽलब्ध-

प्रसराः । अन्तरं लेभिरे हृदयङ्गमा बभूवुः । अत्र हेतुर्गुणिन इति । भूमादर्थेषु च मत्वर्थीयः । अत्र पूर्वार्धेन सर्वस्यापि गुणिगुणस्य एकान्तमुक्त्वोत्तरार्धेन प्रकृते व्यतिरेक उक्तः ॥

पदा—इत्थं सकलगुणपरिपूर्तिमुक्त्वा तस्य गुणानामपि विशेषमाह—इन्दोरिति । इन्दोरंशवः पद्मे अगतयः । अंशवो रश्मयः । अगतयः प्राप्तिरहिताः । सूर्यस्यांशवः कुमुदे । अगतय इत्यनुषज्यते । तस्य गुणा विपक्षेऽपि अन्तरं लेभिरे । विपक्षे शत्रावपि । अन्तरमवकाशम् । शत्रूणामपि हृदयङ्गमा बभूवुरित्यर्थः । अत्र हेतुर्गुणिन इति । प्रशस्तबहुगुणयुक्तस्येत्यर्थः । अत्र व्यतिरेकोऽलङ्कारः ॥

परातिसन्धानपरं यद्प्यस्य विचेष्टितम् ।
जिगीषोरश्वमेधाय धर्म एव बभूव तत् ॥ ७६ ॥

प्रका—अथ दोषस्याप्यभिसन्धिशुद्ध्या गुणीभावमाह—परेति । परस्य शत्रोरतिसन्धानं वञ्चनं परं प्रधानं यस्य । "मन्त्रप्रभावोत्साहशक्तिभिरतिसन्दध्या"-दिति कौटल्यः । विचेष्टितं षाड्गुण्यप्रयोगात्मकम् । अश्वमेधाय जिगिषोरित्यभिसन्धिविशेषस्य तथाभावे हेतुत्वमुक्तम् ॥

पदा—अथ दोषस्याप्यभिसन्धिभेदेन गुणत्वप्राप्तिमाह—परेति । तस्य परातिसन्धानपरं यद्विचेष्टितम्, तदपि धर्म एव बभूव । परेषामतिसन्धानं वञ्चनमेव परं प्रधानं यस्य । "मन्त्रप्रभावोत्साहशक्तिभिरतिसन्दध्या"दिति कौटल्यः । अपिशब्दोऽधर्मत्वप्राप्तेरसम्भावनां द्योतयति । तस्यापि धर्मत्वप्राप्तौ हेतुमाह—अश्वमेधाय जिगीषोरिति । अश्वमेधं कर्तुं हि तस्य जिगीषा, न भोगं कर्तुम् ॥

एवमुद्यत्प्रभावेण शास्त्रदृष्टेन कर्मणा ।
वृषेव देवो देवानां राज्ञां राजा बभूव सः ॥ ७७ ॥

प्रका—अथ समस्तप्रकरणार्थफलमाह—एवमिति उद्यन् वर्धमानः प्रभावः कोशदण्डजं तेजो यस्य । शास्त्रदृष्टेन शास्त्रोक्तेन । वृषा इन्द्रः । देवः स्वामी । प्रप-

श्चितप्रकारेण यथाशास्त्रं प्रवृत्तस्य तस्य प्रतापवृद्धिद्वारेण साम्राज्यलक्षणं पार्यन्तिकं फलं निष्पन्नमित्यर्थः ॥

**पदा**—अथ समस्तप्रकरणार्थफलमाह—एवमिति। सः एवं शास्त्रदृष्टेन कर्मणा राज्ञां राजा बभूव। पूर्वोक्तप्रकारेण यथाशास्त्रं प्रवर्तमानस्स राजा चतुस्समुद्रमध्यवर्तिनां राज्ञामधिपतिरभूत्। वृषा देवानां देव इव। वृषा इन्द्रः। देवः स्वामी। इन्द्रपक्षे शास्त्रदृष्टं कर्म क्रतुशतविधानम्। उद्यन् वर्धमानः प्रभावः कोशदण्डजं तेजो यस्य।

**पञ्चमं लोकपालानामूचुस्साधर्म्ययोगतः**
**भूतानां महतां षष्ठमष्टमं कुलभूभृताम् ॥ ७८ ॥**

**प्रका**—तदेव प्रपञ्चयति श्लोकद्वयेन पञ्चममिति। पञ्चसङ्ख्यापूरणम्। लोकपालैः साधर्म्यमिन्द्रप्रतापादि। तच्च राजधर्मप्रसिद्धम्। महाभूतैः साधर्म्यं गुणानां पारार्थ्यम्। कुलशैला महेन्द्रादयः सप्त। तैस्साधर्म्यं भूधारणम् ॥

**पदा**—उक्तमर्थमेव प्रपञ्चयति—पञ्चममित्यादिना श्लोकद्वयेन। अत्र श्लोके लोका इति कर्तृपदं तमिति कर्मपदञ्चार्थाद्द्रष्टव्यम्। चशब्दश्चाध्याहार्यः। लोकास्साधर्म्ययोगतस्तं लोकपालानां पञ्चमं महतां भूतानां षष्ठं कुलभूभृतामष्टमञ्च ऊचुः। साधर्म्यं सादृश्यं तेन योगतस्सम्बन्धात्। लोकपाला इन्द्रादयः। तैस्साधर्म्यं प्रभावादिभिः। पञ्चमं पञ्चसङ्ख्यापूरणम्। एवं सर्वत्र द्रष्टव्यम्। महाभूता पृथिव्यादयः पञ्च। तेषां षष्ठम्। तैस्साधर्म्यं गुणानां परार्थत्वम्। कुलपर्वता महेन्द्रादयस्सप्त। तैस्साधर्म्यं पृथिवीधारणम् ॥

**दूरापवर्जितच्छत्रैस्तस्याज्ञां शासनार्पिताम्।**
**दधुः शिरोभिर्भूपाला देवाः पौरन्दरीमिव ॥ ७९ ॥**

**प्रका**—दूरेति। अपवर्जितं त्यक्तम्। आज्ञां निदेशम्। शासने शासनपटे। अर्पितां न्यस्ताम्। छत्राणि त्यक्त्वा तदाज्ञां मूर्ध्नि चक्रुरिति परिवृत्तिः। मालां पौरन्दरीमिति पाठे शक्रोत्सवध्वजनिर्माल्यमित्यर्थः। तद्धि राजभिः शिरसा धार्यते ॥

**पदा**—दूरेति। भूपालास्तस्य शासनार्पितामाज्ञां शिरोभिर्दधुः। शासने शासनपत्रे अर्पितां न्यस्ताम्। आज्ञां नियोगम्। दूरे अपवर्जितं त्यक्तं छत्रं सितातपत्रं यैः। देवाः पौरन्दरीमिव। पौरन्दरीं पुरन्दरसम्बन्धिनीम् आज्ञामिव। छत्राणि त्यक्त्वा आज्ञां मूर्ध्नि चक्रुरिति परिवृत्तिरलङ्कारः॥

ऋत्विजस्स तथानर्च दक्षिणाभिर्महाक्रतौ।
यथा साधरणीभूतं नामास्य धनदस्य च ॥ ८० ॥

**प्रका**—तमेव परमप्रयोजनत्वेनाभिसंहितमश्वमेधमाह—ऋत्विज इति। साधारणीभूतं समानरूढिकमपि जातमित्यर्थः। नाम धनद इति॥

**पदा**—अथ परमप्रयोजनत्वेनाभिसंहितमश्वमेधमाह—ऋत्विज इति। सः महाक्रतौ दक्षिणाभिः ऋत्विजः तथा आनर्च। ऋत्विजो याजकान्। यथा अस्य धनदस्य च नाम साधारणीभूतम्। भवेदिति शेषः। धनदस्य धनद इति नाम यथा तस्यापि रूढ्या समानं जायेत, तथानर्चेत्यर्थः॥

इन्द्राद्वृष्टिर्नियमितगदोद्रेकवृत्तिर्यमोऽभू-
द्यादोनाथश्शिवजलपथः कर्मणे नौचराणाम्।
पूर्वापेक्षी तदनु विदधे कोशवृद्धिं कुबेर-
स्तस्मिन्दण्डोपनतचरितं भेजिरे लोकपालाः ॥ ८१ ॥

**प्रका**—इत्थं स्वधर्मानुष्ठानपारंगतत्वेन तस्य देवता अप्यनुकूला आसन्नित्याह—इन्द्रादिति। वृष्टिरभूदित्यन्वयः। नियमिता शमिता गदानामुद्रेकेणाधिक्येन वृत्तिर्येन। स हि व्याधीनां पतिः। नौचराणां सांयात्रिकाणां कर्मणे वाणिज्यादिसिद्धये। शिवजलपथो निर्बाधजलपथः। पूर्वापेक्षी शक्रादीननुकूलान् विचार्य। कुबेरः पश्चात् कोशवृद्धिं चकारेति वल्लभेन व्याख्यातम्। तत्र कुबेरस्यैवेतरानुकूल्यविचारो निर्हेतुकः। ततस्तद्विचारहेतुकं पश्चाद्विधानमपि न सम्भवति। सति वा हेतौ तदुक्त्या न कश्चिदतिशयो वर्णनीयस्य। कुबेरः कोशवृद्धिं विदध इत्येव पर्याप्तत्वात्। दक्षिणा-

वर्तस्तु —पूर्वापेक्षी पूर्वमहमुपकर्ता भवामीत्यपेक्षमाणः। पूर्वावेक्षीति पाठे पूर्वशब्देन रघुचरितं विवक्षितम्। रघुचरितदर्शीत्यर्थ इति व्याचष्ट। तत्रैवमपेक्षायां पश्चात्करणं व्याहतम्। पूर्ववाक्यशेषत्वे त्वर्थान्तरगतैकवाचकत्वं दोषः। निरुपयोगता च। पाठान्तरे च रघुचरितदर्शित्वं न हेतुतया सङ्गच्छते। परमधार्मिकत्वस्य हेतुतया विवक्षितत्वात्। तदन्विति च व्यर्थम्। तस्मादिदमत्रार्थसतत्वम्—इन्द्रकृतया वृष्ट्या यमकर्तृकव्याधिनिराकरणजनितया द्विपदचतुष्पदस्य कर्मक्षमतया वरुणसम्पादितेन वणिक्पथक्षेमेण च वार्तायां सम्पन्नायां तदनन्तरमस्य कोशवृद्धिं कुबेरो विदध इति। ननु देवतानुग्रहे किमानन्तर्येणेत्याह —पूर्वापेक्षीति। पूर्वशब्दः कारणवाची। दृष्टकारणं किञ्चिदपेक्षमाण इत्यर्थः। तच्च वृष्ट्यादिसहकृतोऽस्य वार्ताप्रवर्तकः पुरुषकारः। अनेन दैवपुरुषकारायत्ता तस्य कोशवृद्धिः, न तु वृष्ट्यादिवत्केवलदैवायत्तेति प्रकाश्यते। अथैषामेकार्थतयोपसंहारमाह —तस्मिन्निति। तद्विषये। "दण्डोपनतो बलादधःकृत" इति पञ्चिकाकारः। तस्य चरितं वृतं तत्प्रकरणोक्तम्। तच्च बलीयस्यनुकूलाचरणलक्षणं राजवृत्तम्। लोकपालानामप्येवंवृत्तत्वे राज्ञां दण्डापूपिकया तत्सिद्धमिति भावः॥

इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायां

सप्तदशः सर्गः॥

**पदा**—इत्थं स्वधर्मानुष्ठानानां पारं गतस्य तस्य देवा अप्यनुकूला जाता इत्याह—इन्द्रादिति। इन्द्राद्वृष्टिरभूत्। यथाकालं वर्षमभूदित्यर्थः। यमो नियमितगदोद्रेकवृत्तिः नियमिता शमिता गदानां व्याधीनामुद्रेकेणाधिक्येन वृत्तिर्वर्तनं येन। स हि सर्वरोगाणामधिपतिः। यादोनाथः नौचराणां कर्मणे शिवजलपथः अभूत्। यादोनाथो वरुणः। स हि यादसां नक्रतिमिङ्गिलादीनां जलजन्तूनां पतिः। तस्मिन् प्रसन्ने जलचराः किं कुर्युरिति भावः। नावा चरन्तीति नौचराः सांयात्रिकादयः, तेषां कर्म समुद्रयाननदीतरणादिरूपं, तस्य सौकर्यसिद्ध्यर्थमित्यर्थः। वाणिज्यादिसिद्ध्यर्थमिति यावत्। शिवो निरुपद्रवो जलपथो जलमार्गो यस्य। तदनु कुबेरः कोशवृद्धिं विदधे। तदनु इन्द्रकृतया वृष्ट्या यमकर्तृकव्याधिनिराकरणजनितया

द्विपदां चतुष्पदाञ्च कर्मक्षमतया वरुणसम्पादितेन वणिक्पथेन क्षेमेण च वार्तायां सम्पन्नायां तदनन्तरमित्यर्थः । कुबेरो वैश्रवणः । कोशस्य वृद्धिं वर्धनं विदधे । न हि दैवमात्रेण पुरुषकारमात्रेण वा कोशवृद्धिस्सम्भवति । "दैवं पुरुषकारेण न विना पुष्टिमश्नुते" इति न्यायात् । इन्द्रादीनां प्रसादनमात्र एवास्य पुरुषकारापेक्षा । तच्च स्वधर्मानुष्ठानरूपं पूर्वमेवोक्तम् । देवतानुग्रहे किमानन्तर्यवाचिना तदनुशब्देन, अत आह—पूर्वापेक्षीति । पूर्वशब्दोऽत्र कारणवाची । पूर्वं कारणमपेक्षितुं शीलमस्येति तथा । वृष्ट्यादिरूपं दृष्टकारणमात्रत्वेन विवक्षितम् । न हि कारणेन विना कार्योत्पत्तिस्सम्भवतीति भावः । किं बहुनेत्याह—तस्मिन्निति । लोकपालाः तस्मिन् दण्डोपनतचरितं भेजिरे । इन्द्रादयो लोकपालाः तस्मिन् विषये बलादधःकृतानामिष्टानुसरणरूपं चरितं वृत्तं भेजिरे प्रापुः ॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ
रघुवंशव्याख्यायां पदार्थदीपिकायां
सप्तदशः सर्गः ॥

# अष्टादशः सर्गः

स नैषधस्यार्थपतेस्सुतायामुत्पादयामास निषिद्धशत्रुः ।
अनूनसारं निषधान्नगेन्द्रात्पुत्रं यमाहुर्निषधाख्यमेव ॥ १ ॥

**प्रका**—अथानेकेषां तद्वंश्यानां वृत्तं विस्तरभीरुतया संक्षेपेण दर्शयति—स इति। नैषधस्य, निषधा जनपदाः। अर्थपतेः राज्ञः। निषधाद्वर्षपर्वतात्। एवशब्दः पौनर्वचनिकः। निषधादिति य उपमानवाची निषधशब्दः, स एवारोपितस्वार्थोऽस्याख्याभवदित्यर्थः। नैषधस्येत्युभयकुलशुद्ध्यभिप्रायः। निषिद्धाश्शत्रवो येनेत्यनेन पुत्रस्य सुकरता राज्येऽभिप्रेता। अत्र सर्गे वंशमालतात्पर्यादनुप्रासप्राचुर्यम् ॥

**पदा**—अथ रघुवंशजातानामनेकेषां चरितं विस्तरभीरुतया संक्षिप्य दर्शयति—स इति। सः नैषधस्यार्थपतेस्सुतायां पुत्रमुत्पादयामास। निषधा जनपदविशेषः तेषामधिपतिर्नैषधः। अर्थपती राजा तस्य सुतायाम्। निषिद्धशत्रुर्नियमितशत्रुः। निषधान्नगेन्द्रादनूनसारं यं निषधाख्यमेवाहुः। निषधनाम्नः पर्वतात्सकाशादक्षीणं बलं यस्य तम्। अत एव निषधाख्यं निषधनामानम्। निषधपर्वतादनूनसारत्वेन हेतुना तं निषधमेव नाम्ना वदन्तीत्येवशब्दार्थः। अनुप्रासोऽत्र सर्गे शब्दालङ्कारः। अर्थालङ्कारास्तु केचन सन्ति चेत्तत्र प्रदर्श्यन्ते ॥

तेनोरुकार्येण पिता प्रजायै कल्पिष्यमाणेन ननन्द यूना।
सुवृष्टियोगादिव जीवलोकस्सस्येन सम्पत्तिफलात्मकेन ॥ २ ॥

**प्रका**—तेनेति। उरु महत्कार्यं प्रजापालनलक्षणं, सस्यपक्षे वृत्तिलक्षणं च यस्य। प्रजायै सन्ततये। कल्पिष्यमाणेन शक्तेन भविष्यता। यूनेति कार्यक्षमं वयो दर्शितम्। सुवृष्टियोगादिति सम्पत्तौ हेतुः। सस्येन शाल्या-

1 फलोन्मुखेन।

दिना सम्पत्तौ सत्यां फलात्मकेन फलितेन। अयन्तु श्लोको वल्लभपाठ एव दृष्टत्वाल्लिख्यते। "तेनोरुकार्येण पिता प्रजायै कल्पिष्यमाणेन ननन्द यूना। सुवृष्टियोगादिव जीवलोकस्सस्येन सम्पत्तिफलात्मकेन ॥"

पदा—तेनेति। "तेनोरुवीर्येण पिता प्रजायै कल्पिष्यमाणेन ननन्द यूना। सुवृष्टियोगादिव जीवलोकस्सस्येन सम्पत्तिफलात्मकेन।" अस्मद्गुरोः परम्परायामयं श्लोको न पठ्यते। अरुणाचलनाथेन तु वल्लभपाठमाश्रित्य व्याख्यातम् ॥

शब्दादि निर्विश्य सुखं चिराय तस्मिन् प्रतिष्ठापितराजशब्दः।
कौमुद्वतेयः कुमुदावदातैर्द्यामार्जितैः कर्मभिरारुरोह ॥ ३ ॥

प्रका—शब्दादीति। सुखं सुखसाधनम्। निर्यन्त्रणसुखानुभवेन युवराजे पुत्रे राज्यभारार्पणं गम्यते। अत एव तस्मिन्नवस्थापितराजशब्द इति पश्चाद्राजशब्दस्यैवावस्थापनकथनम्। आर्जितैरिति। "यावज्जीवन्तु तत्कुर्याद्येन प्रेत्य सुखं वसेदि"त्यस्मिन्नर्थे जीवदवस्थायामेव सदा सावधान एवासाविति द्योत्यते। आर्जितामिति वा पाठः। द्यामारुरोहेति स्वेच्छया शरीरत्याग उक्तः ॥

पदा—शब्दादीति। कौमुद्वतेयः शब्दादि सुखं चिराय निर्विश्य तस्मिन्नवस्थापितराजशब्दो द्यामारुरोह। कौमुद्वतेयोऽतिथिः। सुखं सुखसाधनम्। चिराय चिरकालम्। निर्विश्य उपभुज्य। तस्मिन्निषधे। अवस्थापितः प्रतिष्ठापितो राजशब्दो येन। द्यां स्वर्गम्। अत्र शब्दस्पर्शादीनां सुखसाधनानां चिरकालानुभवोक्त्या पुत्रे युवराजे राज्यभारार्पणं द्योत्यते ॥

पौत्रः कुशस्यापि कुशेशयाक्षस्ससागरां सागरधीरचेताः।
एकातपत्रां भुवमेकवीरः पुरार्गळादीर्घभुजो बुभोज ॥ ४ ॥

प्रका—पौत्र इति। बुभोज ररक्ष। अत्र विशेषणानि ससागराया भुवो भोगयोग्यतामभिप्रेत्य दत्तानीति परिकरः ॥

पदा—पौत्र इति। कुशस्य पौत्रोपि ससागरां भुवमेकातपत्रां बुभोज। कुशस्य पौत्रो निषधः। एकातपत्रामित्यनेन सार्वभौमत्वमुक्तम्। बुभोज

ररक्ष। पालनार्थत्वात्परस्मैपदित्वम्। कुशेशयं पद्ममिवाक्षिणी यस्य। एकवीरः प्रधानवीरः। पुरस्यार्गळावद्दीर्घौ भुजौ यस्य। अत्र विशेषणानि ससागराया भुवो रक्षणे योग्यतामभिप्रेत्योक्तानीति परिकरः।

**तस्यानलौजास्तनयस्तदन्ते वंशश्रियं प्राप नळाभिधानः**
**यो नड्वलानीव गजः परेषां बलान्यमृद्नान्नळिनाभवक्त्रः॥ ५॥**

**पदा** —तस्येति। नड्वलानि नडयुक्तानि सरांसि। नलिनाभवक्त्र इति मर्दनकालभाविविशेषणमप्रयत्नतां द्योतयति। अनलौजा इति तद्योग्यताभिप्रायम्॥

**पदा**—तस्येति। तदन्ते तस्य नळाभिधानस्तनयो वंशश्रियं प्राप। तदन्ते तस्य निषधस्यान्ते। वंशश्रियं ससागराया भुवः पतित्वम्। तत्र योग्यतामाह—अनलौजा इति। यः परेषां बलानि अमृद्नात् मर्दितवान्। गजः नड्वलानीव। नडशब्देन जलसम्भवस्तृणविशेष उच्यते। तद्वन्ति सरांसीवेत्यर्थः। लीलामात्रसाध्यत्वमुपमया द्योत्यते। अत एवाह—नळिनाभवक्त्र इति। नहि पीडितस्य वक्त्रं नळिनाभं भवति॥

**नभश्चरैर्गीतयशाः स लेभे नभस्तलश्यामतनुं तनूजम्।**
**ख्यातन्नभश्शब्दमयेन नाम्ना कान्तं नभोमासमिव प्रजानाम्॥ ६॥**

**प्रका**—नभ इति। नभश्चरैर्दिव्यजनैः। अनेन तथाविधपुत्रलाभयोग्यतां द्योतयति। नभश्शब्दमयेन, "तत्प्रकृतवचने मयट्"। नभोमासस्य कान्तत्वं स्निग्धश्यामळसस्यादिमत्वात्।

**पदा**—नभ इति। सः तनूजं लेभे लब्धवान्। नभश्चरैर्गीतयशाः। नभश्चरा दिव्या जनाः। नभस्तलमाकाशप्रदेशः, तद्वच्छ्यामा तनुर्यस्य। नभसः कृष्णवर्णत्वं प्रसिद्धम्। "अरूपमपि यद्रूपं नीलोत्पलदळच्छवि। विभाति व्योमवत्तस्मै परस्मै विष्णवे नम" इत्यादौ। नभश्शब्दमयेन नाम्ना ख्यातं नभ इति नाम्ना प्रसिद्धमित्यर्थः। "तत्प्रकृतवचने मयट्"। नभोमासमिव प्रजानां कान्तं नभोमासः श्रावणमासः, तद्वत्प्रजानां चेतोहरम्। स्निग्धश्यामळसस्या-

दिमत्त्वान्नभोमासस्य कान्तत्वम् । अत्र पुत्रविशेषणाभ्यां तस्य नभश्शब्दवाच्यताया योग्यता द्योत्यते । पितृविशेषणेन तत्तादृशपुत्रलाभयोग्यतेति परिकरः ॥

**तस्मै निंसृज्योत्तरकोसलानांन्धर्मोत्तरं तत्प्रभवः प्रभुत्वम् ।**
**मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध ॥ ७ ॥**

**प्रका**—तस्मा इति । निसृज्य दत्वा । धर्मोत्तरं धर्मप्रधानम् । तत्प्रभवस्तस्य पिता । "अजर्यं सङ्गत"मिति निपातः । सङ्गतं सख्यम् । साहचर्यमित्यर्थः । जरसोपदिष्टमिति भङ्ग्या वयोवस्थासमुचितत्वमुक्तम् । पुनरदेहबन्धाय अपुनर्भवाय ॥

**पदा**—तस्मा इति । तत्प्रभवः उत्तरकोसलानां प्रभुत्वं तस्मै विसृज्य मृगैः अजर्यं बबन्ध । तत्प्रभवः तस्य नभसः प्रभव उत्पत्तिस्थानभूतः । पितेत्यर्थः । प्रभुत्वमाधिपत्यम् । विसृज्य दत्वा । "अजर्यं सङ्गत"मिति निपातः । सख्यमित्यर्थः । चरन्मृगैरित्यत्रोक्तप्रकारेणेत्यर्थः । किमर्थं तादृशमार्गचरणमित्यत्राह—पुनरदेहबन्धायेति । पुनः एतद्देहपरित्यागानन्तरम् । अदेहबन्धाय देहबन्धाभावाय । मुक्त्यर्थमित्यर्थः । उत्तरकोसलानां प्रभुत्वं विशिनष्टि—धर्मोत्तरमिति । धर्मप्रधानमित्यर्थः । कथं मोक्षप्रधानस्तत्सेवेतेति भावः । अजर्यं विशिनष्टि—जरसोपदिष्टमिति । जराविक्लवे शरीरे मैव सज्जेथा इत्युपदेशप्रकारः ॥

**तेन द्विपानामिव पुण्डरीको राज्ञामजय्योऽजनि पुण्डरीकः ।**
**शान्ते पितर्याहृतपुण्डरीका यं पुण्डरीकाक्षमिव श्रिता श्रीः ॥ ८ ॥**

**प्रका**—तेनेति । द्विपानामिति राज्ञामिति च कर्तरि षष्ठी । पुण्डरीक इत्याग्नेय्यां दिशि गजः । अजनि, कर्मणि लुङ् । शान्ते अस्तमिते । आहृतः पुण्डरीकः क्रतुविशेषो येन । उपमया प्रधानास्पदत्वस्थिरत्वादि द्योत्यते ॥

**पदा**—तेनेति । तेन पुण्डरीक अजनि । पुण्डरीक इति नाम । अजनीति कर्मणि लुङ् । राज्ञामजय्यो जेतुमशक्यः । द्विपानां पुण्डरीक इव ।

1 वि

राज्ञां द्विपानामिति च कर्तरि षष्ठी। पुण्डरीकोऽत्राग्नेय्यां दिशि गजः। सोऽप्यन्यैर्गजैर्जेतुन्न शक्यते। पितरि शान्ते आहृतपुण्डरीक.। शान्ते अस्तमिते। आहृतः कृतः पुण्डरीकः क्रतुविशेषो येन। श्रीः पुण्डरीकाक्षमिव यमाश्रिता। पुण्डरीकाक्षो विष्णुः। उपमया श्रियश्चाञ्चल्याभावादयो द्योत्यन्ते॥

स क्षेमधन्वानममोघधन्वा पुत्रं प्रजाक्षेमविधानदक्षम्।
क्षमां लम्भयित्वा क्षमयोपपन्नं वने तपःक्षामतनुस्ससाद॥ ९॥

**प्रका**—स इति। अमोघधन्वेति पुत्रनाम्नोऽन्वर्थतां कारणगुणानुसारी कार्यगुण इति न्यायेन द्योतयति। क्षमयोपपन्नमिति क्षेमविधानयोग्यताभिप्रायम्। ससाद व्यशीर्यत। लभेर्गत्यर्थत्वात्, "गतिबुद्धी"त्यादिना कर्तुः कर्मत्वम्। यथाह वामनः—"लभेर्गत्यर्थत्वाण्णिच्यणौ कर्तुः कर्मत्वाकर्मत्वे" इति॥

**पदा**—स इति। स क्षेमधन्वानं पुत्रं क्ष्मां लम्भयित्वा वने तपःक्षामतनुः ससाद क्षेमधन्वेति पुत्रस्य नाम। क्ष्मां भुवं लम्भयित्वा ग्राहयित्वा। लभे र्गत्यर्थत्वाद्द्विकर्मकत्वम्। यदाह वामनः—"लभेर्गत्यर्थत्वाण्णिच्यणौ कर्मत्वाकर्मत्वे" इति। तपसा क्षामा तनुर्यस्य। ससाद व्यशीर्यत। "षद्लृ विशरणगत्यवसादनेषु" इति धातुः। विशीर्णोऽभूदित्यर्थः। अमोघं सफलं धनुर्यस्य। अनेन पुत्रनाम्नोऽन्वर्थता द्योत्यते, कारणगुणानां कार्यगुणारम्भाकत्वात्। प्रजानां क्षेमविधाने रक्षाविधाने दक्षं विदग्धम्। तत्र हेतुः — क्षमयोपपन्नमिति। क्षमा हि सर्बपुरुषार्थसाधिकेति भावः॥

अनीकिनीनां समरेऽग्रयायी तस्यपि देवप्रतिमः सुतोऽभूत्।
व्यश्रूयतानीकपदावसानं देवादि नाम त्रिदिवेऽपि यस्य॥ १०॥

**प्रका**—अनीकिनीनामिति। तस्य क्षेमधन्वनः, देवाद्यनीकपदावसानं देवानीक इति। अत्र विशेषणानि प्रजापालनाधिकारिताभिप्रायाणि॥

**पदा**—अनीकिनीनामिति। तस्यापि सुतोऽभूत्। तस्य क्षेमधन्वनः। समरे अनीकिनीनामग्रयायी। अनीकिनीनाञ्चमूनाम्। अग्रयायी अग्रगामी। देवप्रतिमो देवसदृशः। यस्य देवादि अनीकपदावसानं नाम त्रिदिवे अपि

त्यश्रूयत। देवशब्द आदिर्यस्य। अनीकपदमवसानं यस्य। यस्य देवानीक इति नाम स्वर्गेऽपि विशेषतः श्रुतमभूत्। अत्र देवप्रतिमत्वं समरेष्वनीकिनीनामग्रयायित्वञ्च नाम्नोऽन्वर्थतां द्योतयति। प्रजापालनसामर्थ्यञ्चेति परिकरः॥

**पिता समाराधनतत्परेण पुत्रेण पुत्री स यथैव तेन।**
**पुत्रस्तथैवाधिकवत्सलेन स तेन पित्रा पितृमान् बभूव॥ ११॥**

प्रका—पितेति। प्रशंसायां मत्वर्थीयः। विशेषणे पुत्रित्वपितृमत्त्वयोर्हेतू यथाक्रमम्। उभयोः प्रकृतत्वेऽपि एकस्योपमानत्वं वैवक्षिकम्। अन्योन्यालङ्कारेणोपमायास्सङ्करः "क्रियया तु परस्परम्। वस्तुनोर्जननेऽन्योन्य"मिति॥

पदा—पितेति। स पिता समाराधनतत्परेण पुत्रेण यथा एव पुत्री बभूव, स पुत्रः तथा एव अधिकवत्सलेन तेन पित्रा पितृमान् बभूव। पिता क्षेमधन्वा। समाराधने सम्यगाराधने तत्परेण। पुत्रेण देवानीकेन। पुत्री प्रशस्तपुत्रयुक्तः। अधिकवत्सलेन अत्यन्तस्निग्धेन। पितृमान् प्रशस्तपितृयुक्तः। अत्र पितृपुत्रविशेषणे पुत्रित्वपितृमत्त्वयोर्यथाक्रमं हेतू। उभयोः प्रकृतत्वेऽपि एकस्योपमानत्वं विवक्षावशादेव। अन्योन्यालङ्कारेण चोपमायास्सङ्करः "क्रियया तु परस्परम्। वस्तुनोर्जननेऽन्योन्य"मिति॥

**पूर्वस्तयोरात्मसमे चिरोढामात्मोद्भवे वर्णचतुष्टयस्य।**
**धुरन्निधायैकनिधिर्गुणानां जगाम यज्वा यजमानलोकम्॥ १२॥**

**प्रका**—पूर्व इति। तयोः पितापुत्रयोः। आत्मसम इति तस्यापि गुणनिधित्वमाक्षिपद्धुरो धारणयोग्यतां द्योतयति॥

**पदा** – पूर्व इति। तयोः पूर्व आत्मोद्भवे वर्णचतुष्टयस्य धुरन्निधाय यजमानलोकं जगाम। तयोः पितृपुत्रयोः। पूर्वः प्रथमः। आत्मोद्भवे पुत्रे। वर्णानां ब्राह्मणादीनां धुरं परिपालनरूपं भारम्। यजमानस्य लोकास्स्वर्गादयः। प्रारब्धानि पुण्यानि देवलोकेऽनुभूतवतः परब्रह्मप्राप्तिश्चेत्यागमसिद्धा लोका बहुवचनेन विवक्षिताः। आत्मसमे आत्मतुल्ये। अनेन धुरो निधाने योग्यता द्योत्यते। चिरोढां चिरकालन्धृताम्। गुणानामेकनिधिः प्रधाननिधिः। "यज्वा तु विधिनेष्टवानि"त्यमरः॥

**वशी सुतस्तस्य वशंवदत्वात्स्वेषामिवासीद्द्विषतामपीष्टः ।**
**सकृद्विविग्नानपि हि प्रयुक्तं माधुर्यमीष्टे हरिणान् ग्रहीतुम् ॥ १३॥**

**प्रका**—वशीति। तस्य देवानीकस्य वशंवदत्वादिष्टवादित्वात्। "प्रियवशे वदः खच्।" विविग्नान् भीतान्। माधुर्यं गीतमाधुर्यमत्र विवक्षितम्। ग्रहीतुमावर्जयितुम् ईष्टे वाङ्माधुर्यस्यैष महिमेत्यर्थः। उपमाने सकृद्विविग्नत्वेन द्विषामुत्खातप्रतिरोपितत्वं ध्वन्यते ॥

**पदा**—वशीति। तस्य सुतः वशंवदत्वात्स्वेषामिव द्विषतामपीष्ट आसीत्। तस्य देवानीकस्य सुतः पुत्रः। वशंवदत्वात् प्रियवादित्वात्। "प्रियवशे वदः खच्। स्वेषामात्मीयानाम्। द्विषतां शत्रूणामपि वाङ्माधुर्यस्यैष महिमेति भावः। प्रियवादित्वे हेतुमाह—वशीति। जितेन्द्रियः। उक्तमर्थं प्रतिवस्तूपमया द्रढयति—सकृदित्यादिना। प्रयुक्तं माधुर्यं सकृद्विविग्नानपि हरिणान् ग्रहीतुमीष्टे हि। रूपमाधुर्यादिभ्योऽपि वाङ्माधुर्यस्य वशीकरणे विशेषातिशयं द्योतयितुं प्रयुक्तमित्युक्तम्। माधुर्यं गीतिमाधुर्यम्। "मधुरत्वे स्याद्व्याधानां मृगमोहने" इति केशवः। सकृद्विविग्नान् अदृष्टचरजनदर्शनादिना कञ्चित्कालं भीतानपीत्यर्थः। उपमाने सकृद्विविग्नत्वोक्त्या शत्रूणामुत्खातप्रतिरोपितत्वं ध्वन्यते। ग्रहीतुमावर्जयितुमीष्टे शक्नोति। हिशब्दः प्रसिद्धौ ॥

**अहीनगुर्नाम स गां समग्रामहीनबाहुद्रविणः शशास ।**
**विहीनसंसर्गपराङ्मुखत्वाद्युवाप्यनर्थ्यैर्व्यसनैर्विहीनः ॥ १४ ॥**

**प्रका**—स किन्नामा कीदृशः किञ्चकारेत्याह— अहीनगुरिति। स गामिति पाठः। गां समग्रां शशासेति निरुक्तिकथनम्। अहीने बाहुद्रविणे यस्य। ताभ्यामुत्साहप्रभुशक्ती पर्यायेणोक्ते। विहीना अनर्घ्यजना अक्षधूर्तादयः अनर्थ्यैरर्थादपेतैः अनर्थकरैः व्यसनैः स्त्र्यादिभिः ॥

**पदा**—स किन्नामा कीदृशः किञ्चकारेत्यत्राह—अहीनगुरिति। अहीनगुर्नाम सः समग्रां गां शशास। अहीनगुरिति संज्ञया प्रसिद्धः समग्रां सकलाङ्गां भुवं शशास रक्षितवान्। अहीना समग्रा गौर्भूमियस्य सोऽहीनगुरित्यन्वर्थता च नाम्नोऽ

नेन द्योत्यते। अहीने सम्पूर्णे बाहुद्रविणे बाहुवीर्यं धनञ्च यस्य। उत्साहप्रभुशक्तियुक्तत्वाद्रक्षणसमर्थ इत्यर्थः। विहीनसंसर्गपराङ्मुखत्वादनर्थैर्व्यसनैर्विहीनः। विशेषतो हीनैरसद्भिर्यः संसर्गस्तस्मात्पराङ्मुखत्वादत्यन्तनिवृत्तत्वात्। अनर्थैरर्थादपेतैः अनर्थकरैरित्यर्थः। व्यसनैर्विहीनः व्यसनैः स्त्रीप्रभृतिभिः। विहीनः वियुक्तः। युवापि यौवनयुक्तोऽपि। "स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यञ्च पञ्चमम्। महच्च दण्डपारुष्यमर्थदूषणमेव चे"ति प्रसिद्धैः सप्तभिर्व्यसनैस्समग्रयौवनयुक्तोऽपि विहीन इत्यर्थः॥

गुरोस्स चानन्तरमन्तरज्ञः पुंसां पुमानाद्य इवावतीर्णः।
उपक्रमैरस्खलितैश्चतुर्भिश्चतुर्दिगीशश्चतुरो बभूव ॥ १५ ॥

प्रका—गुरोरिति। पुंसामन्तरज्ञस्स गुरोरनन्तरं लोकपालचतुष्टयसधर्माऽसीदित्यर्थः। अत्रानन्तर्येणाक्षिप्ते गुरोरपि तथाभावेऽस्य सुलभतथाभावत्वं ध्वन्यते। अन्तरः विशेषः। उपक्रमा उपायपूर्वा आरम्भाः। तेषाञ्चातुर्विध्यमुपायचातुर्विध्यात्। उपधा वा उपक्रमाः। "उपायपूर्व आरम्भ उपधा चाप्युपक्रम" इति सिंहः। उपधा चामात्यानां परीक्षणम्। "त्रिवर्गभयसंशुद्धानमात्यान् सन्नियोजये"दिति। चतुरो विदग्धः॥

पदा—गुरोरिति। स गुरोरनन्तरमस्खलितैश्चतुर्भिरुपक्रमैश्चतुर्दिगीशः बभूव। गुरोर्देवानीकस्यानन्तरमस्खलितैरप्रतिहतैश्चतुर्भिस्सामादिभेदेन चतुर्विधैरुपक्रमैरुपायपूर्वैरारम्भैः। "उपायपूर्व आरम्भ उपधा चाप्युपक्रम" इति सिंहः। चतुर्णां दिशामीशोऽभूत्। सार्वभौमोभूदित्यर्थः। आद्यः पुमानवतीर्ण इवेत्युत्प्रेक्षा। पुंसामन्तरज्ञो विशेषज्ञः। अयमस्मिन् कर्मणि योजनीय इत्यादिविशेषविदित्यर्थ.। विष्णुपक्षे सर्वकर्मसाक्षित्वाद्विशेषज्ञानम्। चतुरो विदग्धः॥

तस्मिन् प्रयाते परलोकयात्रां जेतर्यरीणान्तनयं तदीयम्।
उच्चैश्शिरस्त्वाज्जितपारियात्रं लक्ष्मीः सिषेवे किल पारियात्रम्॥ १६ ॥

प्रका—तस्मिन्निति। जेतर्यरीणामिति तत्पुत्रस्य पराभिभवशङ्कानिरासः। इति तनयशब्देन पौत्रो विवक्षितः। "अहीनगोरपि रुरुस्तस्यासीत्पारियात्रक" इति

श्रीविष्णुपुराणवचनात्। रुरुस्तु न राजासीदित्यागमान्तरे द्रष्टव्यम्। उच्चैश्शिरस्त्वादुन्नतत्वात्। तच्च मानेनाप्रह्वत्वम्। पारियात्रः कुलाद्रिः। "महेन्द्रो मलयस्सह्यश्शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वता" इति श्रीविष्णुपुराणवचनम्॥

**पदा**—तस्मिन्निति। तस्मिन् परलोकयात्रां प्रयाते लक्ष्मीस्तदीयं तनयं पारियात्रं सिषेवे किल। तस्मिन् अहीनगौ। परलोकं प्रति यात्रा परलोकयात्रा। लक्ष्मी राजलक्ष्मीः। तदीयं तत्सम्बन्धिनम्। तनयशब्देनात्र पौत्रो विवक्षितः। "अहीनगोरपि रुरुस्ततोऽभूत्पारियात्रक" इति विष्णुपुराणवचनमत्र प्रमाणम्। रुरुस्तु न राजासीदित्यागमान्तराद्द्रष्टव्यम्। किलेतिह्ये। पुत्रमपहाय पौत्रं सिषेव इति प्रसिद्धिरित्यर्थः। अरीणां जेतरि। अनेन तत्पुत्रस्य पराभिभवशङ्का निरस्यते। उच्चैश्शिरस्त्वादुन्नतत्वात्। तच्च मानेनाप्रह्वत्वम्। पारियात्रः कुलपर्वतेष्वेकः। महेन्द्रो मलयस्सह्यश्शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वता" इति विष्णुपुराणे॥

**तस्माद्बभूवाथ दळाभिधानो दमान्वितः पद्मदळाभदृष्टिः।**
**कुन्दाभदन्तो रिपुदन्तिसिंहः पतिः पृथिव्याः कुलकैरवेन्दुः॥ १७॥**

**प्रका**—तस्मादिति। विशेषणानि योग्यताभिप्रायाणि। अयन्तु विरळपाठत्वाल्लिख्यते। तस्माद्बभूवाथ दळाभिधानो दमान्वितः पद्मदळाभदृष्टिः। कुन्दाभदन्तो रिपुदन्तिसिंहः पतिः पृथिव्याः कुलकैरवेन्दुः। युक्तश्चायं, पुराणवचनाद् "अहीनगुसुतश्चापि पारियात्रो महायशाः। दळस्तस्यात्मजश्चैव तस्माज्जज्ञे शिलो नृप" इति॥

**पदा**—तस्मादिति। तस्माद्दळाभिधानः पुत्रो बभूव। दमान्वितः दमेन इन्द्रियनिग्रहेण सहितः। पद्मदळवदाभा यस्यास्सा पद्मदळाभा तादृशी दृष्टिर्यस्य। कुन्दसदृशदन्तः। रिपव एव दन्तिनस्तेषां सिंहः। पृथिव्याः पतिः भर्ता। कुलमेव कैरवं कुमुदं तस्येन्दुः। अयन्तु श्लोको विरळपाठत्वाल्लिखितः। अयमेव पाठो युक्तः। "अहीनगोः सुतश्चापि पारियात्रो महायशाः। दळस्तस्यात्मजश्चैव तस्माज्जज्ञे शिलो नृप" इति विष्णुपुराणवचनात्॥

तस्याभवत्सूनुरुदारशीलः
शिलश्शिलापट्टविशालवक्षाः।
जितारिपक्षोऽपि शिलीमुखैर्यः
शालीनतामाव्रजदीड्यमानः ॥ १८ ॥

प्रका—तस्येति ॥ अत्रापि विशेषणानि प्राग्वदेव। शालीनतां लज्जाम् ॥

पदा—तस्येति ॥ तस्य शिलस्सूनुरभवत्। शिल इति नाम्ना प्रसिद्ध इत्यर्थः। उदारशीलः उत्कृष्टशीलः। शिलापट्टवच्छिलाप्रदेशवद्विशालं वक्षो यस्य सः। ईड्यमानश्शालीनतामाव्रजत् स्तूयमानो लज्जां प्राप। किं गुणाभावस्तत्र हेतुः, नेत्याह—शिलीमुखैर्जितारिपक्षोऽपीति। शरमात्रेणैव सहायेन जितशत्रुलोकोऽपि ॥

तमात्मसम्पन्नमनिन्दितात्मा
कृत्वा युवानं युवराजमेव।
सुखानि सोऽभुङ्क्त सुखोपरोधि
वृत्तं हि राज्ञामुपरुद्धवृत्तम् ॥ १९ ॥

प्रका—तमिति ॥ आत्मसम्पन्नो महाकुलीनतादिसमस्तगुणोपेत इति पदपञ्चिकाकारः। अनिन्दितो निर्दोष आत्मा स्वभावो यस्य। युवराजमेव, न तु सेनापतिम्। यद्यप्यन्यस्मै राज्यप्रदानं स्वातन्त्र्योपघातकम्, तथापि पुत्रमात्मसम्पन्नतया यौवराज्ये स्थापयित्वा तन्न्यस्तभरः स्वयं सुखान्यभुङ्क्तेत्यर्थः। अत्र वैधर्म्येणार्थान्तरं न्यस्यति—सुखेति। सुखोपरोधित्वाद्राज्ञां वृत्तमुपरुद्धवृत्तं हीत्यर्थः। उपरुद्धः कारागृहरुद्धः। राज्यभारवैवधिकस्य कः सुखलेशोऽपीति भावः। वल्लभस्य तु, "वार्तं हि" इति पाठः। व्याख्यातञ्च युवानमेवात्मसम्पन्न इति यौवराज्येऽभिषिच्य सुखान्यभुङ्क्त। उपपादयति—राज्ञामुपरुद्धवृत्तमस्वतन्त्रचेष्टितं सुखोपरोधित्वादुपजोषबाधकत्वाद्वार्तमसारमिति। अयन्तु धीरललितः ॥

पदा—तमिति ॥ सः तं युवराजमेव कृत्वा सुखान्यभुङ्क्त। सः दळः। तं शिलम्। युवराजमेव, न तु सेनापतिमित्येवशब्दार्थः। इदन्तु निर्यन्त्रणसुखानुभवार्थम्। आत्मसम्पन्न सत्त्वसम्पन्नम्। "आत्मवान् सत्त्ववानुक्तः"

इत्युत्पलमाला। समस्तगुणोपेत इत्यर्थः। अनिन्दितो निर्दोष आत्मा स्वभावो यस्य। राज्ञां वृत्तमुपरुद्धवृत्तं हि। उपरुद्धः कारागृहबद्धः, तस्य वृत्तमेव। राजवृत्तस्योपरुद्धवृत्तसादृश्ये हेतुमाह— सुखोपरोधीति। राज्यभारपरवशस्य कुतः सुखमिति भावः। अत्र वैधर्म्येणार्थान्तरन्यासः॥

तं रागबन्धिष्ववितृप्तमेव
भोगेषु सौभाग्यविशेषभोग्यम्।
विलासिनीनामरतिक्षमाऽपि
जरा वृथा मत्सरिणी जहार ॥ २०॥

**प्रका**—तमिति॥ रागबन्धिषु रागकरेषु। अवितृप्तमेव, "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥" इति न्यायात्। विलासिनीनां सौभाग्यविशेषभोग्यस्य तस्य रत्ययोग्यया तया कथं हरणमिति प्रातीतिकविरोधापेक्षया अपिशब्दः। अरतिक्षमत्वादेव वृथात्वम्। मत्सरिणी मत्सरित्वादिवेत्युत्प्रेक्षाप्राणकम्। जहार स्ववशीचकार॥

**पदा**—तमिति॥ जरा वृथा तं जहार। आत्मनो रत्ययोग्यतां जानानापि जहारेति वृथेत्युक्तम्। तं दळम्। जहार स्ववशीचकार। भोगेष्ववितृप्तमेव। भोगेषु विषयेषु अवितृप्तं तृप्तिमप्राप्तमित्यर्थः। तृप्तेरप्राप्तत्वे हेतुमाह— रागबन्धिष्विति। रागं बन्धुं शीलमेषामिति तथा। "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते" इति न्यायः। विलासिनीनां सौभाग्यविशेषभोग्यम। विलासिनीनामिति कर्तरि षष्ठी। स हि सौभाग्यातिशयेनैव भोक्तुं शक्यते। अरतिक्षमा अपि। रतिक्षमा न भवतीत्यरतिक्षमा। अपिशब्दो विरोधे। तथात्वेऽपि हरणे हेतुमुत्प्रेक्षते—मत्सरिणीति। द्योतकशून्येयमुत्प्रेक्षा। अन्यासां भोगमसहमानेवेत्यर्थः॥

हित्वाथ भोगांस्तपसात्तमेव
त्रिविष्टपं प्राप्तवति क्षितीशे।
तदात्मजस्सागरधीरचेताः
शशास पृथ्वीं सकलान्नृसोमः ॥ २१॥

**प्रका**—हित्वेति॥ भोगान् भौमानित्यर्थः। तदात्मजः शिलः।

अस्यापि पाठो विरळः । "हित्वाथ भोगांस्तपसात्तमेव त्रिविष्टपं प्राप्तवति क्षितीशे । तदात्मजस्सागरधीरचेताश्शशास पृथ्वीं सकलान्नृसोमः ॥"

**पदा**—हित्वेति ॥ अयमपि श्लोको विरलपाठत्वाल्लिख्यते—"हित्वाथ भोगांस्तपसात्तमेव त्रिविष्टपं प्राप्तवति क्षितीशे । तदात्मजस्सागरधीरचेताश्शशास पृथ्वीं सकलान्नृसोमः ॥" । क्षितीशे भोगान् हित्वा त्रिविष्टपं प्राप्तवति अथ तदात्मजः सकलां पृथिवीं शशास । क्षितीशे दले । भोगानर्थान् कामान् । तस्यात्मजः शिलः । शशास रक्षितवान् । तपसा आत्तमेव । एवशब्देन पूर्वमेव स्वीकृतत्वमुक्तम् । सागरवद्धीरं गम्भीरं चेतो यस्य । नृणां सोमः । अत्राह्लादकत्वात्सोमशब्दप्रयोगो गौणः । "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥" इति ॥

उन्नाभ इत्युन्नतनामधेय-
स्तस्यायथार्थोन्नतनाभिरन्ध्रः ।
आसीत्सुतः पङ्कजनाभकल्पः
कृत्स्नस्य नाभिर्नृपमण्डलस्य ॥ २२ ॥

**प्रका**—उन्नाभ इति ॥ "ततोऽन्यत्रापि दृश्यते" इति नाभिशब्दादच् समासान्तः । उक्थ इति तस्यैव नामान्तरं पुराणे । तस्य शिलस्य । उन्नतं ख्यातम् । अयथार्थमित्युन्नतिविशेषणम् । मण्डलनाभित्वं दशरथसर्गे व्याख्यातम् ॥

**पदा**—उन्नाभ इति । तस्य सुतः आसीत् । तस्य शिलस्य । नामधेयमाह—उन्नाभ इत्यादिना । उन्नाभः इत्ययथार्थमुन्नतनामधेयः । अयथार्थमित्युन्नतिक्रियाविशेषणम् । उन्नतं ख्यातम् । यथार्थन्न भवतीत्ययथार्थम् । उन्नतः नाभिर्यस्य स उन्नाभः । "अन्यत्रापि दृश्यते" इति । समासान्तोऽच्प्रत्ययः । इति एवंरूपेण प्रतीयमानमन्वर्थत्वं तस्य नाम्नो यथा वृथा स्यात्तथा । रूढिमात्रेणैव प्रसिद्धनामेत्यर्थः । अत एवाह—नतनाभिरन्ध्र इति नतन्नाभिरन्ध्रं नाभिप्रदेशो यस्य । पङ्कजनाभो विष्णुः । तत्सदृशः । कृत्स्नस्य नृपमण्डलस्य नाभिः प्रधाननृपः । "उपगतोऽपि स मण्डलनाभिताम्" इत्यत्र प्रकाशितश्चायमर्थः ॥

ततः परं वज्रधरप्रभाव-
स्तदात्मजस्संयति वज्रघोषः ।
बभूव वज्राकरमेखलायाः
पतिः पृथिव्याः किल वज्रनामा ॥ २३ ॥

**प्रका**—तत इति ॥ संयति युद्धे । वज्रं कुलिशं तस्येव घोषो यस्य ॥

**पदा**—तत इति ॥ ततः परं वज्रनामा तदात्मजः पृथिव्याः पतिर्बभूव किल । तस्योन्नाभस्यात्मजः । वज्रधरस्य प्रभाव इव प्रभावो यस्य । संयति वज्रघोषः । संयति युद्धे । वज्रस्याशनेर्घोष इव घोषो यस्य । भयानकसिंहनाद इत्यर्थः । वज्राणां रत्नविशेषाणमाकरस्समुद्र एव मेखला यस्याः । अनेन सार्वभौमत्वमुक्तम् ॥

तस्मिन् गते खं सुकृतैकलभ्यं
तत्सम्भवं शङ्खणमर्णवान्ता ।
उत्खातशत्रुं वसुधोपतस्थे
रत्नोपहारैरुदितैः खनिभ्यः ॥ २४ ॥

**प्रका**—तस्मिन्निति ॥ खं स्वर्गम् । "अथ क्लीबे खमाकाशे स्वर्गे छिद्रे" इत्यादि केशवः । खनिभ्य उदितैः । तस्य धर्मप्रधानतया स्वयमेव प्रस्नुतैरित्यर्थः ॥

**पदा**—तस्मिन्निति ॥ तस्मिन् खं गते अर्णवान्ता वसुधा तत्सम्भवं शङ्खणं रत्नोपहारैरुपतस्थे । तस्मिन् वज्रे । खं स्वर्गम् । "अथ क्लीबे खमाकाशे स्वर्गे छिद्रे" इत्यादि केशवः । अर्णव एवान्तो यस्याः । तत्सम्भवं वज्रपुत्रम् । शङ्खण इति तस्य नाम । रत्नैरेवोपहारैरुपायनैः । सुकृतेनैकेनैव लभ्यं प्राप्यम् । सुकृतोपलब्धमिति वा पाठः । उत्खाताः उन्मूलिताः शत्रवो येन । खनिभ्य उदितैः आकरेभ्यस्सम्भूतैः ॥

तस्यावसाने हरिदश्वनामा
पित्र्यं प्रपेदे पदमश्विरूपः ।
वेलातटेषूषितसैनिकाश्वं
पुराविदो यं व्युषिताश्वमाहुः ॥ २५ ॥

1 भूषणा ।

प्रका — तस्येति ॥ शङ्खणस्य। अश्विरूपः, अश्विनौ हि रूपोत्तरौ। वेलेत्यादि निरुक्तिकथनम् ॥

पदा — तस्येति ॥ तस्य अवसाने हरिदश्वनामा पित्र्यं पदं प्रपेदे। तस्य शङ्खणस्यान्ते। हरिदश्व इति नाम यस्य। पित्र्यं पितुरागतम्। पदं स्थानम्। अश्विनौ हि रूपवत्तया प्रसिद्धौ। तयो रूपमिव रूपं यस्य। अथ तस्यैव नामान्तरं निरुक्तिपूर्वकमाह — वेलातटेष्वित्यादिना। पुराविदः वेलातटेषु उषितसैनिकाश्वं यं व्युषिताश्वमाहुः। पुराविदः पौराणिकाः। चतुस्समुद्रवेलाप्रतिपादनार्थं बहुवचनम्। सेनासमवेताश्वास्सैनिकाश्वाः। नामान्तरे सत्यपि गुणनाम्नैव प्रसिद्धोऽभूदित्यर्थः ॥

आराध्य विश्वेश्वरमीश्वरेण
तेन क्षितेर्विश्वसमो[1]ऽधिजग्मे।
पातुं सहो[2] विश्वसहस्समग्रां
विश्वम्भरामात्मजमूर्तिरात्मा ॥ २६ ॥

प्रका — आराध्येति ॥ तेन हरिदश्वेन। विश्वसमो विश्वतुल्यसारः। अधिजग्मे प्राप्तः। कर्मणि लिट्। आत्मजमूर्तिरात्मेति सर्वाकारसाम्यद्योदकम्। दक्षिणावर्तस्त्वाह — "अधिजज्ञे उत्पादितः। जनिधातुस्सकर्मकोऽपि स्यात्, जन्यो वट इति दर्शनात्। तथा महाभारते — "जज्ञे बहुज्ञं परमाभ्युदारं यद्वीपमध्ये सुतमात्मवन्तम्। पराशराद्गन्धवती महर्षिन्तस्मै नमोऽज्ञानतमोनुदाय॥" इति। उपसर्गवशाद्वा सकर्मकत्वमिति ॥

पदा -- आराध्येति ॥ तेन विश्वेश्वरमाराध्य विश्वसहः अधिजग्मे। तेन व्युषिताश्वेन। विश्वेश्वरं श्रीपरमेश्वरम्। विश्वसह इति तस्य नाम। अधिजग्मे प्राप्तः। कर्मणि लिट्। अधिजज्ञे इति पाठे पुनरन्तर्भूतण्यर्थः प्रयोगः। उत्पादित इत्यर्थः। विश्वसमः विश्वेन तुल्यसारः। समग्रां विश्वम्भरां पातुं सहः सकलां भूमिं रक्षितुं शक्तः। आत्मजमूर्तिः आत्मा, आत्मजमूर्तिरात्मस्वरूपः। आत्मजस्वरूपमवलम्ब्यावस्थितो व्युषिताश्वस्यैवात्मेत्यर्थः। अनेन सर्वात्मना साधर्म्यमुक्तम् ॥

---

1 मो 2 हो

अंशे हिरण्याक्षरिपोस्स जाते
हिरण्यनाभे तनये नयज्ञः ।
द्विषामसह्यः सुतरान्तरूणां
हिरण्यरेता इव सानिलोऽभूत् ॥ २७ ॥

**प्रका**—अंश इति ॥ स इति विश्वसहः । तस्मिञ्जाते द्विषामसह्योऽभूदित्यन्वयः ॥

**पदा**—अंश इति ॥ हिरण्यनाभे तनये जाते सः द्विषां सुतरामसह्योऽभूत् । हिरण्यनाभनाम्नि तनये जाते सति विश्वसहश्शत्रुभिरत्यन्तमसह्योऽभूत् । सानिलः हिण्यरेतास्तरूणामिव । "हिरण्यरेता हुतभुक्"इत्यमरः । शत्रुभिरत्यन्तासह्यत्वप्राप्तौ हेतुमाह—हिरण्याक्षरिपोरंश इति । हिरण्याक्षरिपुर्विष्णुः तस्यांशे अवतारभेदे। नयज्ञः नयवित् ॥

पिता पितॄणामनृणस्तमन्ते
वयस्यनन्तानि सुखानि लिप्सुः ।
राजानमाजानुविलम्बिबाहुं
कृत्वा कृती वल्कलवान् बभूव ॥ २८ ॥

**प्रका**—पितेति ॥ पितॄणामानृण्येन कृतित्वम् । राजानं कृत्वेत्यन्वयः ॥

**पदा**—पितेति ॥ पिता अन्ते वयसि तं राजानं कृत्वा वल्कलवान् बभूव । अन्ते वयसि वार्धक्य इत्यर्थः । पितॄणामनृणः ऋणरहितः । अनेन कृतकृत्यत्वमुक्तम् । अत एवाह—कृतीति । तेन च वानप्रस्थाश्रमप्राप्तियोग्यता । अनन्तानि सुखानि लिप्सुः, लौकिकसुखानां क्षयिष्णुत्वादिति भावः । आजानुविलम्बिबाहुं जानुपर्यन्तं विलम्बिनौ भुजौ यस्य । अनेन राजत्वप्राप्तियोग्यतोक्ता ॥

कौसल्य इत्युत्तरकोसलानां
पत्युः पतङ्गान्वयभूषणस्य ।
तस्यौरसः सोमसुतस्सुतोऽभू-
न्नेत्रोत्सवः सोम इव द्वितीयः ॥ २९ ॥

**प्रका**—कौसल्य इति ॥ पतङ्गस्सूर्यः। सोमसुतः "सोमे सुञः" क्विबन्तात् षष्ठी ॥

**पदा**—कौसल्य इति ॥ उत्तरकोसलानां पत्युः तस्य कौसल्य इत्यौरसः सुतोऽभूत्। इतिशब्दः प्रसिद्धौ। औरसो धर्मपत्नीजः। पतङ्गान्वयभूषणस्य सूर्यवंशालङ्कारभूतस्य। सोमसुतः, "सोमे सुञः" भूतेऽर्थे क्विबन्तात् षष्ठी। कृतसोमयागस्येत्यर्थः। नेत्रोत्सवो नयनानन्दकरः। द्वितीयस्सोम इवेत्युत्प्रेक्षा ॥

यशोभिराब्रह्मसभं प्रकाशो
यो ब्रह्मभूयं गतिमाजगाम।
ब्रह्मिष्ठमाधाय निजेऽधिकारे
ब्रह्मिष्ठमेव स्वतनुप्रसूतिम् ॥ ३० ॥

**प्रका**—यशोभिरिति ॥ प्रकाशः प्रथितः। ब्रह्मभूयं ब्रह्मत्वम्। "भुवो भावे" इति क्यप्। ब्रह्मिष्ठ इति नाम। मत्वर्थे प्रत्ययः। एवशब्दः पौनर्वचनिकः। यो ह्यस्य गुणवाची शब्दः, स एवाख्याभवदित्यर्थः ॥

**पदा**—कौसल्यस्य पुत्रोत्पत्तिं ब्रह्मलोकप्राप्तिञ्च भङ्ग्यन्तरेणाह—यशोभिरिति ॥ यः स्वतनुप्रसूतिं ब्रह्मिष्ठं निजेऽधिकारे आधाय ब्रह्मभूयं गतिमाजगाम। स्वतनोरेव प्रसूतिरुद्भवो यस्य। निजपुत्रमित्यर्थः। निजे आत्मीये अधिकारे। प्रजापरिपालनाख्ये स्थान इति यावत्। ब्रह्मिष्ठ इति पुत्रनाम। ब्रह्मभूयं ब्रह्मत्वम्। "भुवो भाव" इति क्यप्। यशोभिः आब्रह्मसभं प्रकाशः ब्रह्मलोकपर्यन्तं प्रसिद्धः। ब्रह्मिष्ठमेव, "ब्रह्मिष्ठो ब्रह्मणि स्थितः" इति यादवः। योऽस्य गुणवाची शब्दः, स एव नामाभूदित्येवशब्दार्थः ॥

तस्मिन् कुलापीडनिभेऽपपीडं
सम्यङ्महीं शासति शासनाङ्काम्।
प्रजाश्चिरं सुप्रजसि प्रजेशे
ननन्दुरानन्दजलाकुलाक्ष्यः ॥ ३१ ॥

**प्रका**—तस्मिन्निति ॥ अपपीडमिति क्रियाविशेषणम्। शासनाङ्कां प्रसृतशासनपत्राम् ॥

**पदा**—तस्मिन्निति ॥ तस्मिन् प्रजेशे अपपीडं सम्यक् महीं शासति प्रजाश्चिरं ननन्दुः। तस्मिन् ब्रह्मिष्ठे प्रजेशे राजनि। अपगतपीडं यथा भवति

तथा सम्यक् शासति सति। चिरं बहुकालम्। कुलस्यापीडेन शिरोलङ्कारेण सदृशे। शासनाङ्कां, शासनपत्नमत्र शासनशब्देनोच्यते, तदेवाङ्को यस्याः। समुद्रपर्यन्तं प्रसृतशासनपत्नामित्यर्थः। शोभना प्रजा सन्ततिर्यस्य। "नित्यमसिच् प्रजामेधयोः" इत्यसिच् समासान्तः। आनन्दजलेनानन्दबाष्पेण आकुले अक्षिणी यासाम्॥

पात्रीकृतात्मा गुरुसेवनेन
स्पृष्टाकृतिः पत्नरथेन्द्रकेतोः।
तं पुत्रिणां पुष्करपत्रनेत्नः
पुत्रः समारोपयदग्रसंख्याम् ॥ ३२ ॥

**प्रका**—पात्रीकृतेति॥ "योग्यभाजनयोः पात्रम्" इति सिंहः। स्पृष्टाकृतिः प्रतिमार्चनपरः। पुत्निणामग्रसंख्यामित्यन्वयः॥

**पदा**—पात्नीकृतेति॥ पुत्रः तं पुत्रिणामग्रसङ्ख्यां समारोपयत्। पुत्रो ब्रह्मिष्ठः। तं कौसल्यम्। प्रशस्तपुत्नवतामग्रसंख्यां समारोपयत् प्रापयामास। गुरुसेवनेन पात्नीकृतात्मा। गुरोः पितुः सेवनेन पात्रीकृतः सकलगुणानां भाजनतां नीतः आत्मा येन। "योग्यभाजनयोः पात्नम्" इत्यमरः। पत्नरथेन्द्रकेतोः स्पृष्टाकृतिः। पत्नरथेन्द्रकेतुः विष्णुः। तस्य स्पृष्टा अर्चिता आकृतिः प्रतिमा येन। विष्णोः प्रतिमार्चनपर इत्यर्थः। स्पर्शनशब्दोऽत्र लक्षणयार्चनमाह। आकृतिशब्दः प्रतिमाम्। पुष्करपत्ननेत्रः कमलदलनयनः। अत्र विशेषणानां पितुः पुत्नवतां प्रथमाभिधेयत्वप्रापणे हेतुत्वाभिप्रायेण प्रयुक्तत्वात् परिकरः॥

वंशस्थितिं वंशकरेण तेन
सम्भाव्य भावी स सखा मघोनः।
उपस्पृशन् स्पर्शनिवृत्तलौल्य-
स्त्रिः पुष्करेषु त्रिदशत्वमाप ॥ ३३ ॥

**प्रका**—वंशेति॥ सम्भाव्य बुध्वा। वंशकरेण तथाविधगुणयुक्तेनेत्यर्थः। मघोनः सखा भावी भविष्यन्। त्निः उपस्पृशन् त्रिषवणस्नानमाचरन्।

१ त्रिदशत्व।

"स्नानाचान्त्योरुपस्पर्शं" इति यादवः। स्पर्शात् कमनीयवस्तुसंश्लेषान्निवृत्तं लौल्यं यस्य। लौल्यस्पर्शरहित इति वा॥

पदा—वंशेति॥ सः तेन वंशस्थितिं सम्भाव्य शान्तिमाप। वंशस्य स्थितिं स्थिरताम्। सम्भाव्य निश्चित्य। पूर्वोक्तगुणयोगादिति भावः। शान्तिं शमप्रधानतामित्यर्थः। वंशं करोतीति वंशकरः। तेन परम्पराप्रवर्तकेन। तथाविधगुणयुक्तेनेत्यर्थः। मघोनः सखा भावी भविष्यन्। त्रिषु पुष्करेषु त्रिः उपस्पृशन्। पुष्करेषु तीर्थेषु जलेषु। गङ्गायमुनासरस्वतीनां सङ्गम इति यावत्। त्रिरुपस्पृशन् त्रिषवणस्नानं कुर्वन्। "स्नानाचान्त्योरुपस्पर्शं" इति यादवः। स्पर्शात् कमनीयवस्तुसंश्लेषान्निवृत्तं लौल्यं सतृष्णत्वं यस्य। "लोलश्चलसतृष्णयोः" इत्यमरः॥

तस्य प्रभानिर्जितपुष्यरागं
पौष्यान्तिथौ पुष्यमसूत पत्नी।
यस्मिन्नपुष्यन्नुदिते समग्रां
पुष्टिञ्जनाः पुष्य इव द्वितीये ॥ ३४ ॥

प्रका—तस्येति॥ तस्य पत्नी पुष्यमसूतेत्यन्वयः। पौषी पुष्यसंयुक्ता पौषमासे पौर्णमासी। यस्मिन्नुदिते पुष्टिमपुष्यन् अलभन्त। पुष्य इवेति। पुष्यसंवत्सरोक्तः पुष्यनक्षत्रोदयोऽत्र विवक्षितः। "शुभकृज्जगतः पौषो निवृत्तवैराः परस्परं क्षितिपाः। द्वित्रिगुणो धान्यार्थः पौष्टिककर्मप्रसिद्धिश्च॥" इति संहितायाम्॥

पदा—तस्येति॥ तस्य पत्नी पौष्यां तिथौ पुष्यमसूत। तस्य ब्रह्मिष्ठस्य। पुष्येण युक्ता पौर्णमासी पौषी। पुष्य इति पुत्रस्य नाम। प्रभाभिर्निर्जितः पुष्यरागाख्यो रत्नविशेषो येन। यस्मिन् उदिते जनास्समग्रां पुष्टिमपुष्यन् प्रापुः। द्वितीये पुष्य इव। उदित इत्यनुषज्यते। उत्प्रेक्षा चेयम्। पुष्यसंवत्सरोक्तः पुष्यनक्षत्रोदयोऽनेन विवक्षितः। उद्गुणयोग उत्प्रेक्षाहेतुः। तदुक्तं वराहसंहितायाम्—"शुभकृज्जगताम्पौषो निवृत्तवैराः परस्परं क्षितिपाः। द्विगुणो धान्यार्थः पौष्टिककर्मप्रसिद्धिश्च॥" इति॥

महीं महेच्छः परिकीर्य सूनौ
मनीषिणे जैमिनयेऽर्पितात्मा।
तस्मात्सयोगादधिगम्य योग-
मजन्मनेऽकल्पत जन्मभीरुः ॥ ३५ ॥

**प्रका**—महीमिति ॥ "महेच्छस्तु महाशयः" इति सिंहः । परिकीर्य त्यक्त्वा । जैमिनयेऽर्पितात्मा जैमिनिशिष्यतां प्राप्तः । सयोगाद्योगिनः । अजन्मन इति । "क्लृपि सम्पद्यमाने चतुर्थी ॥

**पदा**—महीमिति ॥ सः महीं सूनौ परिकीर्य मनीषिणे जैमिनये अर्पितात्मा सयोगात् तस्माद्योगमधिगम्य अजन्मने अकल्पत । सः ब्रह्मिष्ठः । सूनौ पुत्रे पुष्ये । परिकीर्य त्यक्त्वा । तस्मै दत्वेत्यर्थः, जैमिनिरिति कश्चिन्महर्षिः तस्मै अर्पितो दत्तः आत्मा येन । जैमिनिशिष्यतां प्राप्त इत्यर्थः । अधिगम्य प्राप्य । अजन्मने जन्माभावाय । अकल्पत कल्पितवान् । "क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या" इति चतुर्थी । "महेच्छस्तु महाशयः" इत्यमरः । महामना इत्यर्थः । जन्मनः सकाशाद्भीरुः भयशीलः ॥

ततः परं तत्प्रभवं प्रपेदे
ध्रुवोपमेयं ध्रुवसन्धिमुर्वी ।
यस्मीन्नभूज्ज्यायसि सत्यसन्धे
सन्धिर्ध्रुवस्सन्नमतां नृपाणाम् ॥ ३६ ॥

**प्रका**—तत इति ॥ जगदाधारभूतत्वाद्ध्रुवोपमेयम् । ज्यायसीति सन्नमने हेतुः ॥

**पदा**—तत इति ॥ उर्वी ततः परं तत्प्रभवं ध्रुवसन्धिं प्रपेदे । ततः परं पुष्यादनन्तरम् । ध्रुवसन्धिरिति पुत्रनाम । ध्रुवस्य जगदाधारत्वेन तेनोपमेयम् । ध्रुवस्य जगदाधारत्वन्तु "विभावर्य इव ध्रुवम्" इत्यत्रोक्तम् । यस्मिन् सन्नमतां नृपाणां सन्धिः ध्रुवः अभूत् । सन्नमतां प्रणमताम् । सन्धिः सन्धानम् । ध्रुवो निश्चलः । कालान्तरेऽप्यस्खलित इत्यर्थः । प्रणमने हेतुर्ज्यायसीति । श्रेष्ठे । सन्धेर्ध्रुवत्वे हेतुः सत्यसन्ध इति । सत्यप्रतिज्ञे । ध्रुवो निश्चलस्सन्धिर्यस्य स ध्रुवसंधिः इति नाम्नोऽन्वर्थताप्यनेन दर्शिता ॥

सुते शिशावेव सुदर्शनाख्ये
दर्शात्ययेन्दुप्रियदर्शने सः ।
मृगायताक्षो मृगयाविहारी
सिंहादवापद्विपदं नृसिंहः ॥ ३७ ॥

प्रका — सुत इति ॥ दर्शात्ययः प्रतिपत् । सिंह इत्यनेन तथाविधविपदवाप्ति-हेतुनिर्भयत्वमुक्तम् ॥

पदा — सुत इति ॥ सः सुदर्शनाख्ये सुते शिशावेव मृगयाविहारी सिंहाद्विपदमवापत् । सः ध्रुवसन्धिः । मृगयां विहर्तुं शीलमस्येति तथा । विपदं मृत्युम् । दर्शात्ययेन्दुः प्रतिपच्चन्द्रः, तद्वत्प्रियदर्शने । "अमावास्या त्वमावस्या दर्शस्सूर्येन्दुसङ्गमः" इति सिंहः । अनेन प्रतिपदारम्भसमयो विवक्षितः । इष्टदर्शनत्वं हि तस्य प्रसिद्धम् । "नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिर्नवोदयं नाथमिवौषधीनाम्" इति, "प्रतिपच्चन्द्रमिव प्रियं प्रजा" इति च । मृगवदायताक्षः । नृसिंहः पुरुषसिंहः । तादृशविपत्प्राप्तिहेतुभूतं निर्भयत्वमनेनोक्तम् ॥

स्वर्गामिनस्तस्य तमैकमत्या-
दमात्यवर्गः कुलतन्तुमेकम् ।
आनाथ्यदीनाः[1] प्रकृतीरवेक्ष्य
साकेतनाथं विधिवच्चकार ॥ ३८ ॥

प्रका — स्वर्गामिन इति ॥ "गमिगाम्यादीनामुपसंख्यानम्" इति द्वितीयासमासः । तस्येत्यमात्यादिसर्वशेषः । ऐकमत्यात्, ल्यब्लोपे पञ्चमी । ऐकमत्यं प्राप्येत्यर्थः । कुलस्य तन्तुं शिष्टम् । सूक्ष्मावयवम् । पुत्रमित्यर्थः । एकं केवलम् । प्रकृतीः प्रजाः । एवमेकैश्वर्यप्रकरणार्थ उक्तः ॥

पदा — स्वर्गामिन इति ॥ स्वर्गामिनस्तस्य अमात्यवर्गः प्रकृतीः आनाथ्यदीनाः अवेक्ष्य ऐकमत्यादेकं तं कुलतन्तुं विधिवत्साकेतनाथं चकार । स्वरिति स्वर्गवाचकमव्ययम् । स्वर्गन्तुं शीलमस्येति तथा । अमात्यशब्दः पुरोहितादीनामप्युपलक्षणार्थः । आनाथ्यमनाथत्वं तेन दीनाः । ऐकमत्यादिति ल्यब्लोपे पञ्चमी । ऐकमत्यमवलम्ब्येत्यर्थः । एकं केवलम् । भ्रात्रादिभिर्विहीनमित्यर्थः । कुलस्य तन्तुं सूक्ष्मरूपमवयवम् । पुत्रमिति यावत् । विधिवत् शास्त्रोक्तक्रमानुसारेणेत्यर्थः । साकेतमयोध्या । अयोध्यानाथश्चकारेत्यर्थः । अत्र पुत्रस्य तन्तुरूपणात्कुलस्य पटत्वरूपणमार्थमित्येकदेशविवर्तिरूपकमिदम् ॥

---



[1] अनाथ ।

नवेन्दुना तन्नभसोपमेयं
शावैकसिंहेन च काननेन ।
रघोः कुलं कुड्मळपुष्करेण
तोयेन चाप्रौढनरेन्द्रमासीत् ॥ ३९ ॥

**प्रका**—नवेति ॥ तद्रघोः कुलं तेन तेनोपमेयमासीत् । विशेषणेषु बहुव्रीहिः । अत्राप्रौढस्य नरेन्द्रस्य इन्द्वादिभिः प्रतिदिनवर्धमानतेजस्त्विदुरभिभवत्वलक्ष्मीपालत्वादीनि सामान्यानि । कुलस्य तु नभःप्रभृतिभिस्तथाभूततत्तद्द्रव्ययोगजं साम्यम् ॥

**पदा**—नवेति ॥ अप्रौढनरेद्रं रघोस्तत्कुलं नवेन्दुना नभसा शावैकसिंहेन काननेन च कुड्मळपुष्करेण तोयेन च उपमेयमासीत् । अप्रौढो बालो नरेन्द्रो यस्मिन् । शावो बाल एक एव सिंहो यस्मिन् । कुड्मळं मुकुलं पद्मं यस्मिन् । अत्रोपमानेष्वाद्येन राज्ञः प्रतिदिनवर्धमानतेजस्त्वम्, द्वितीयेन दुरभिभवत्वम्, तृतीयेन तु लक्ष्मीपालत्वं द्योत्यते ॥

लोकेन भावी पितुरेव तुल्य-
स्सम्भावितो मौलिपरिग्रहात्सः ।
दृष्टो हि वृण्वन् कळभप्रमाणोऽ—
प्याशाः पुरोवातमवाप्य मेघः ॥ ४० ॥

**प्रका**—लोकेनेति ॥ मौलेः पितृकिरीटस्य धारणाद्धेतोः पितुस्तुल्य एवायं यौवने भविष्यतीति लोकेन सम्भावित इत्यर्थः । कथमेवमनुमितिरित्याह—दृष्टो हीति । वृण्वन् व्याप्नुवन् । अत्र पुरोवातस्थानीयं भाविवयः । दृष्टान्तालङ्कारश्चायम्, तुल्यधर्मस्यापि प्रतिबिम्बनात् । मौलपरिग्रहादिति । पाठे मौला यदेनमेतत्पितरमिवाद्रियन्ते, तदयमतिबालोऽपि भुवनाक्रमणादौ पितुरेव तुल्यो भवतीति प्रजाभिस्सम्भावितः । कथमित्याह—दृष्टो हीति । अत्र पुरोवातस्थानीयो मौलपरिग्रहः ॥

**पदा**—लोकेनेति ॥ सः मौलिपरिग्रहाल्लोकेन पितुरेव तुल्यो भावी सम्भावितः । मौलेः किरीटस्य । "चूडा किरीटं केशाश्च संहता मौलयस्त्रयः" इत्यमरः । परिग्रहात् धाराणाद्धेतोः । भावी भविष्यन् । इतिशब्दोर्था-

द्रष्टव्यः। पितृकिरीटे शिरसि धृते सति बालोऽयं यौवने गुणैः पितृसदृशो भविष्यतीति जनः कल्पयामासेत्यर्थः। उक्तमर्थं दृष्टान्तेन द्रढयति—दृष्टो हीति। मेघः कळभप्रमाणोऽपि पुरोवातमवाप्य आशाः वृण्वन् दृष्टो हि। वृण्वन् आवृण्वन्। व्याप्नुवन्नित्यर्थः। अत्र पुरोवातस्थानीयं भाविवयः। तुल्यधर्मस्यापि प्रतिबिम्बेन दृष्टान्तोऽलङ्कारः॥

तं राजवीथ्यामति हस्तियान्त-
माधोरणालम्बितमग्र्यवेषम्।
षड्वर्षदेशीयमपि प्रभुत्वा-
त्प्रैक्षन्त पौराः पितृगौरवेण ॥ ४१ ॥

प्रका—तमिति॥ अति हस्तियान्तं हस्तिनातिक्रामन्तम्। "तेनातिक्रामती"ति णिच्। अधिहस्ति यान्तमिति वा पाठः। वेषो नेपथ्यम्। षड्वर्षदेशीयमीषदसमाप्तषड्वर्षवयसम्। पितृगौरवेण पितरि यद् गौरवं तेनोपलक्षिताः। पितरमिव तं सगौरवं प्रैक्षन्तेत्यर्थः। अत्र हेतुः—प्रभुत्वात्। स्वामित्वस्यैष महिमेत्यर्थः। आलम्बितमध्यदेशमिति पाठे मध्यदेशो मध्यभागः। अभिषिक्तो हि हस्त्यारूढः पुरं प्रदक्षिणीकुर्यादित्याचारः॥

पदा—तमिति॥ पौराः राजवीथ्यां अधिहस्ति यान्तं तं षड्वर्षदेशीयमपि प्रभुत्वात् पितृगौरवेण प्रैक्षन्त। अधिहस्ति यान्तं हस्तिनमधिरुह्य गच्छन्तम्। षड्वर्षदेशीयमीषदसमाप्तषड्वर्षवयसम्। पितरि यद् गौरवं तेनोपलक्षिताः प्रैक्षन्त। बालत्वेऽपि तथा दर्शने हेतुः—प्रभुत्वात्स्वामित्वात्। अयं हि स्वामित्वस्य महिमेति भावः। आधोरणेन हस्तिपकेनालम्बितं गृहीतम्। पतनभयादिति शेषः। अग्र्यवेषं श्रेष्ठनेपथ्यम्। अभिषिक्तो हि हस्त्यारूढः पुरं प्रदक्षिणीकुर्यादित्याचारः॥

कामं न सोऽकल्पत पैतृकस्य
सिंहासनस्य प्रतिपूरणाय।
तेजोमहिम्ना पुनरावितानः
तद्व्यापि चामीकरपिञ्जरेण ॥ ४२ ॥

**प्रका** - काममिति ॥ अकल्पत समर्थोऽभूत्। प्रतिपूरणाय पितुः प्रतिनिधित्वेन पूरणाय। आवितानात् वितानावधि। तदिति सिंहासनम्। व्यापि कर्मणि लुङ्। व्याप्तमित्यर्थः ॥

**पदा**—काममिति ॥ सः पैतृकस्य सिंहासनस्य प्रतिपूरणाय न अकल्पत कामम्। पैतृकस्य पितुरागतस्य। प्रतिनिधित्वेन पूरणं प्रतिपूरणम्, तदर्थं न समर्थोऽभूत्। शिशुत्वेन शरीरपुष्ट्यभावादित्यर्थः। अकामानुमतौ कामम्। तेजोमहिम्ना पुनर्वितानादा तद्व्यापि। तेजसो महिम्ना देहप्रभातिशयेन कर्त्रा। तत् सिंहासनम्। वितानावधि व्यापि। कर्मणि लुङ्। चामीकरं कनकं तद्वत्पिञ्जरेण पिञ्जरवर्णेन ॥

तस्मादधः किञ्चिदिवावतीर्णा-
वसंस्पृशन्तौ तपनीयपीठम्।
सालक्तकौ भूपतयः प्रसिद्धै-
र्ववन्दिरे मौलिभिरस्य पादौ ॥ ४३ ॥

**प्रका**—तस्मादिति ॥ अवतीर्णौ प्रसृतौ। चरणविशेषणानि शैशवस्वभावोक्तिपराणि तद्वन्दनहेतोः प्रभुत्वस्य बलीयस्तां द्योतयन्ति। प्रसिद्धैरलङ्कृतैर्मकुटशेखरादिमद्भिः। दक्षिणावर्तस्तु, प्रसिद्ध्यै इति पाठमादृत्य सुदर्शनमेते सेवन्त इति प्रथयितुमिति व्याचष्ट ॥

**पदा**—तस्मादिति ॥ भूपतयः मौलिभिरस्य पादौ ववन्दिरे। मौलिभिः शिरोभिः। तस्मादधः किञ्चिदिवावतीर्णौ। तस्मात्सिंहासनात्। इवशब्दो वाक्यालङ्कारे। सिंहासनादधोभागे ईषत्प्रसृतावित्यर्थः। अत एव तपनीयपीठमसंस्पृशन्तौ। तपनीयमयं पादपीठमप्राप्नुवन्तावित्यर्थः। सालक्तकौ अलक्तकसहितौ। प्रसिद्धैः। "प्रसिद्धौ ख्यातभूषितौ" इत्यमरः। मकुटाद्यलङ्कृतैरित्यर्थः। चरणविशेषणानि शैशवस्वभावोक्तिपराण्यपि वन्दनहेतोः प्रभुत्वस्यैव बलीयस्तां द्योतयन्ति ॥

मणौ महानील इति प्रभावा-
दल्पप्रमाणेऽपि यथा न मिथ्या।
शब्दो महाराज इति प्रयुक्त-
स्तथैव तस्मिन् युयुजेऽर्भकेऽपि ॥ ४४ ॥

प्रका — मणाविति ॥ महानील इति। प्रयुक्तः शब्द इत्यनुषज्यते। प्रभावादित्यमिथ्यात्वे हेतुः। स च मणौ प्रतिबन्धकत्वप्रभालेपित्वादिः, राजनि प्रभुशक्तिः। युयुजे युक्तोऽभूत ॥

पदा — मणाविति ॥ अल्पप्रमाणेऽपि मणौ महानील इति प्रयुक्तः शब्दः प्रभावाद्यथा न मिथ्या, महाराज इति प्रयुक्तः शब्दः अर्भकेऽपि तस्मिन् तथा एव युयुजे। मणौ प्रभावो महाप्रभत्वं, राजनि तु प्रभुशक्तिमत्त्वम्। युयुजे युक्तोऽभूत्। अनुगतार्थोऽभूदित्यर्थः ॥

पर्यन्तसञ्चारितचामरस्य[1]
कपोललोलोभयकाकपक्षात्।
तस्याननादुच्चलितोऽपवाद-
श्चस्खाल वेलास्वपि नार्णवानाम् ॥ ४५ ॥

प्रका — पर्यन्तेति। चामरवीजनं काकपक्षलोलत्वे हेतुः। उभयेति क्षत्रकुमाराणां पञ्चशिखत्वात्। अपवादो निदेशः। "अपवादस्तु निन्दायामाज्ञायाञ्च"ति केशवः। चस्खाल प्रत्यहन्यत ॥

पदा — तस्येति ॥ तस्य आननादुच्चलितोऽपवादः अर्णवानां वेलास्वपि न चस्खाल। उच्चलित उद्गतः। अपवादो निदेशः। "अपवादस्तु निर्देशो निदेशः शासनञ्च सः" इत्यमरः। न स्खलितोऽभूत्। चतुर्णवपरिमिता हि पृथिवी। तस्याज्ञा तु द्वीपान्तरेष्वपि निष्प्रतिबन्धं प्रससारेत्यपिशब्दार्थः। पर्यन्तयोः सञ्चारिते चामरे यस्य। अत एवाह — कपोललोलोभयकाकपक्षादिति। कपोलयोर्लोलौ उभयकाकपक्षौ यस्य। क्षत्रकुमाराणां पञ्चशिखत्वादित्थमुक्तम् ॥

निर्वृत्तजाम्बूनदपट्टबन्धे
न्यस्तं ललाटे तिलकं दधानः।
तेनैव शून्यान्यरिसुन्दरीणां
मुखानि स स्मेरमुखश्चकार ॥ ४६ ॥

---

1 पदार्थदीपिकाकारस्य पूर्वोत्तरार्धयोर्वैपर्यासेन पाठ इति 'तस्येति' इति श्लोकप्रतीकधारणादवगम्यते।

**प्रका**—निर्वृत्तेति ॥ एवशब्दः पौनर्वचनिकः। तेन शून्यानि भयोत्सृष्टतिलकानि। अशक्यवस्त्वन्तरकरणात्मा विशेषालङ्कारः॥

**पदा**—निर्वृत्तेति॥ ललाटे न्यस्तं तिलकं दधानः स अरिसुन्दरीणां मुखानि तेनैव शून्यानि चकार। न्यस्तं निहितम्। तेन तिलकेन। तस्य ललाटे तिलके कृते शत्रुस्त्रीणां मुखानि भयादेव तिलकशून्यान्यासन्नित्यर्थः। निर्वृत्तो विहितः जाम्बूनदमयः कनकमयः पट्टबन्धो यस्मिन्। स्मेरं स्मयशीलमाननं यस्य। अत्राशक्यवस्त्वन्तरकरणात्मा विशेषोऽलङ्कारः॥

शिरीषपुष्पाधिकसौकुमार्यः
खेदं स यायादपि भूषणेन।
नितान्तगुर्वीमथ चानुभावा-
द्धुरं धरित्र्या बिभराञ्चकार ॥ ४७ ॥

**प्रका**—शिरीषेति॥ अथच अथापि। अनुभावात् प्रभावात्॥

**पदा**—शिरीषेति॥ सः भूषणेनापि खेदं यायात्। भूषणेन भूषणधारणेन। खेदं पीडाम्। यायादिति सम्भावनायां लिङ्। तत्र हेतुः—शिरीषपुष्पाधिकसौकुमार्य इति। शिरीषपुष्पाधिकं सौकुमार्यं यस्य। अथच अनुभावाद् धरित्र्या धुरं बिभराञ्चकार। अथच अथापि। तथापीत्यर्थः। अनुभावात्प्रभावात्। धुरं भारम्। बिभराञ्चकार बभार। नितान्तमत्यर्थं गुर्वीम्॥

न्यस्ताक्षरामक्षरभूमिकायां
कात्स्न्र्येन गृण्हाति लिपिं न यावत्।
तावत्फलानि श्रुतवृद्धयोगा-
त्पक्वान्युपाभुङ्क्त स दण्डनीतेः ॥ ४८ ॥

**प्रका**—न्यस्ताक्षरामिति॥ अक्षरशब्देन लिपिसूचकरेखाविन्यासो विवक्षितः। अक्षरभूमिकायाम् अक्षरशिक्षाशालायाम्। फलकायां वा। लिपिं मातृकाम्। लिपिग्रहणात्प्रागेव दण्डनीतेः फलानि शक्तिसिद्धिलक्षणानि वृद्धसंयोगजनितव्यवहारकौशलः स बुभुजे इत्यर्थः॥

**पदा**—न्यस्ताक्षरामिति ॥ सः यावल्लिपिं कात्स्न्र्येन न गृह्णाति, तावत् श्रुतवृद्धयोगाद्दण्डनीतेः फलानि पक्वानि उपाभुङ्क्त। लिपिं मातृकाम्। कात्स्न्र्येन साकल्येन। दण्डनीते राजनीतेः। श्रुतवृद्धयोगाद्विद्यावृद्धैस्सङ्गमात्। फलानि प्रयोजनानि। पक्वानि उपभोगक्षमाणि। अक्षरभूमिकायां न्यस्ताक्षराम्। अक्षरशिक्षाफलकायां न्यस्तो लिखितोऽक्षरः लिपिसूचकरेखाविशेषो यस्याः। लिपिग्रहणात्प्रागेव दण्डनीतेः फलानि कौटल्योक्तशक्तिसिद्धिलक्षणानि वृद्धसंयोग जनितव्यवहारकौशलस्स बुभुज इत्यर्थः ॥

उरस्यपर्याप्तनिवेशभागा
प्रौढीभविष्यन्तमुदीक्षमाणा ।
सञ्जातलज्जेव तमातपत्र-
च्छायाच्छलेनोपजुगूह लक्ष्मीः ॥ ४९ ॥

**प्रका**—उरसीति ॥ अपर्याप्तनिवेशभागा अप्रभूतावस्थानंदेशा। राज्ञां वक्षसि लक्ष्मीनिवासप्रसिद्धेरियमुक्तिः। वक्षसोऽपर्याप्तत्वाच्चोपगूहनम्। तच्च सर्वाङ्गव्याप्तिः। न च हातुं शक्तेत्याह—प्रौढीभविष्यन्तमुदीक्षमाणा। युवानं भविष्यन्तं प्रतिपालयन्ती स्वोचितवक्षोविहाराय। अत एव सञ्जातलज्जा। प्रोढाया अप्रौढसङ्गमो लज्जावहः। लज्जया च व्याजालम्बनम्। अतस्सर्व एवायं वाक्यार्थ उत्प्रेक्षाप्राणकः। आतपत्रच्छायाया एव वास्तवत्वात् ॥

**पदा**—उरसीति ॥ लक्ष्मीरातपत्रच्छायाच्छलेन तमुपजुगूह। आतपत्रधारणजाता या छाया कान्तिः तद्व्याजेन। उपजुगूह आलिङ्गितवती। व्याजेनालिङ्गने हेतुमुत्प्रेक्षते—सञ्जातलज्जेव। अप्रौढसङ्गमो हि प्रौढाया लज्जावहः। उरसि अपर्याप्तनिवेशभागा अपर्याप्तोऽसम्पूर्णः निवेशभागोऽवस्थानप्रदेशो यस्याः। बालकत्वादुरसो विस्ताराभावादपर्याप्तावस्थानभूमिरित्यर्थः। निजावस्थानाय वक्षसोऽपर्याप्तत्वाच्चोपगूहनस्य सर्वाङ्गव्याप्तत्वम्। राज्ञां वक्षसि लक्ष्मीनिवासप्रसिद्धेरियमुक्तिः। नाप्येनं हातुं शशाकेत्याह—प्रौढीभविष्यन्तमुदीक्षमाणेति। युवानं भविष्यन्तं प्रतिपालयन्ती। स्वोचितवक्षोविहारार्थमिति शेषः। अत्र श्लोके सर्वोऽपि वाक्यार्थ उत्प्रेक्षाप्राणकः, आतपत्रच्छायामात्रस्यैव वास्तवत्वात् ॥

अनश्नुवानेन युगोपमान-
मलब्धमौर्वीकिणलाञ्छनेन ।
अस्पृष्टखड्गत्सरुणाऽपि चासी-
द्रक्षावती तस्य भुजेन भूमिः ॥ ५० ॥

**प्रका**—अनश्नुवानेनेति ॥ उपमानमुपमितिः । "त्सरुः खड्गादिमुष्टौ स्यादि"ति सिंहः । अत्र बाल्यहेतुकायां युगोपमानताद्यप्राप्तावपि यौवनकार्यभूतभूरक्षानिष्पत्तिरित्यपिशब्दद्योत्यो विरोधः । कारणनिषेधेऽपि भावित्वेन सम्भाव्यमानायास्तत्प्राप्तेः प्रतापस्य वा भूरक्षाकारणत्वेन गम्यमानत्वाद्विभावना च । न चानयोस्सङ्करः, विरोधाविनाभावित्वाद्विभावनायाः । व्यभिचारे हि सङ्करव्यवहारः ॥

**पदा**—अनश्नुवानेनेति ॥ भूमिस्तस्य भुजेन रक्षावती आसीत् । भूमाद्यर्थे मतुप् । अत एवाह—भुजेनेति । न करेणेति । युगोपमानमनश्नुवानेन युगेनोपमानमुपमितिमप्राप्नुवता । पृथुदीर्घो हि भुजो युगेनोपमीयते । अलब्धमप्राप्तं मौर्वीकिणमेव लाञ्छनं येन । अस्पृष्टखड्गत्सरुणा अपि च । "त्सरुः खड्गादिमुष्टौ स्यादि"ति सिंहः । अत्र विरोधद्योतकमपि चेति पदद्वयं सर्वत्र द्रष्टव्यम् । युगोपमानस्य आयुधग्रहणस्य चाप्राप्तत्वेऽपि तत्कार्यभूता रक्षा सञ्जातेति विभावना । प्रभावातिशयश्चात्र निमित्तत्वेन गम्यत एवेत्यनुक्तनिमित्तेयम् ॥

न केवलं गच्छति तस्य काले
ययुः शरीरावयवा विवृद्धिम् ।
वंश्या गुणाः खल्वपि लोककान्ताः
प्रारम्भसूक्ष्माः प्रथिमानमापुः ॥ ५१ ॥

**प्रका**—न केवलमिति ॥ वंश्याः कुलक्रमागताः । लोककान्ता जनैः प्रार्थिताः । प्रारम्भे उपक्रमे सूक्ष्माः तनवः ॥

**पदा**—न केवलमिति ॥ काले गच्छति केवलं तस्य शरीरावयवाः एव न विवृद्धिं ययुः, वंश्याः गुणा अपि खलु प्रथिमानमापुः । वंश्याः कुलक्रमागताः । खलुशब्दो वाक्यालङ्कारे । प्रथिमानं पृथुत्वम् । कुलक्रमागताः देवेन्द्रसाहाय्यप्राप्त्यादिरूपा गुणाश्चापि ... इत्यर्थः । लोककान्ताः जनैः

प्रार्थ्यमाना इति यावत्। प्रारम्भे आरम्भे सूक्ष्माः तनवः। इदन्तु विशेषणद्वयं शरीरावयवानां वंश्यगुणानामपि साधारणम् ॥

स पूर्वजन्मान्तरदृष्टपाराः
स्मरन्निवाक्लेशकरो गुरूणाम्।
तिस्रस्त्रिवर्गाधिगमस्य मूलं
जग्राह विद्याः प्रकृतीश्च पित्र्याः ॥ ५२ ॥

प्रका—स इति ॥ पूर्वजन्मान्तरदृष्टपारत्वमक्लेशग्रहणे हेतुः। स्मरन्निवेत्यक्लेशातिशयद्योतनार्थमुत्प्रेक्ष्यते। तिस्रो विद्या इति मनुमतेनोक्तम्। यथाह कामन्दकः—"त्रयी वार्ता दण्डनीतिरिति विद्या मनोर्मते, त्रय्या एव विशेषोऽयं येयमान्वीक्षिकी मता" इति। अत्र ग्रहणं ज्ञानम्। प्रकृतीः पुरुषप्रकृतीरमात्यसुहृद्बलाख्यास्तिस्रः। ग्रहणमत्रानुरञ्जनम्। अनेन लब्धप्रशमनानुष्ठाननिष्पत्तिर्दर्शिता ॥

पदा—स इति ॥ सः तिस्रो विद्या जग्राह। तिस्र इति मनुमतेनोक्तम्। अत्र कामन्दकः—"त्रयी वार्ता दण्डनीतिरिति विद्या मनोर्मते। त्रय्या एव विशेषोऽयं येयमान्वीक्षिकी मता" इति। अत्र ग्रहणं ज्ञानम्। पूर्वजन्मान्तरदृष्टपाराः स्मरन्निव। पूर्वस्मिन् जन्मान्तरे जन्मभेदे दृष्टः पारो यासान्ताः स्मरन्निव। गुरूणामक्लेशकरः। क्लेशं करोतीति क्लेशकरः। "कृञो हेत्वि" त्यादिना टः। क्लेशकरो न भवतीत्यक्लेशकरः। पूर्वजन्मान्तरे दृष्टपारत्वादक्लेशेन ग्रहणमत्र स्मरणोत्प्रेक्षायाः फलम्। त्रिवर्गाधिगमस्य धर्मार्थकामज्ञानस्य मूलं कारणम्। इदन्तु विद्याविशेषणम्। पित्र्याः प्रकृतीश्च तिस्र इति। जग्राहेति चात्राप्यनुषज्यते। पित्र्याः पितुरागताः। अमात्यसुहृद्बलभेदेन प्रकृतीनामपि त्रिविधत्वमस्ति। ग्रहणमत्रानुरञ्जनम्। अनेन लब्धप्रशमनमुक्तम् ॥

व्यूह्य स्थितः किञ्चिदिवोत्तरार्ध-
मुन्नद्धचूडोऽञ्चितसव्यजानुः।
आकर्णमाकृष्टसबाणधन्वा
व्यरोचतास्त्रे स विनीयमानः ॥ ५३ ॥

प्रका—व्यूह्येति ॥ व्यूह्य विस्तार्य। उत्तरार्धं पूर्वकायार्धम्। अञ्चितं सुन्दरम्। सुन्दरत्वञ्चाकुञ्चितत्वेन विवक्षितम्। अस्त्रे अर्थाद्धनुषि ॥

**पदा**—व्यूढेति ॥ अस्त्रे विनीयमानः स व्यरोचत । अस्त्रे अर्थाद्धनुषि । विनीयमानः शिष्यमाणः । गुरुभिरिति शेषः । व्यरोचत अशोभत । उत्तरार्धं किञ्चिदिव व्यूह्य स्थितः । उत्तरार्धं पूर्वकायार्धम् । व्यूह्य विस्तार्य । उन्नद्धा ऊर्ध्वं बद्धा चूडा शिखा यस्य । अञ्चितं सुन्दरं सव्यजानु वामजानु यस्य । सुन्दरत्वञ्चाकुञ्चितत्वेन विवक्षितम् । आकर्णमाकृष्टसबाणधन्वा आकर्णं कर्णान्तम् आकृष्टं सबाणं बाणसहितं धनुर्येन । अत्र स्वभावोक्तिः ॥

**अथ मधु वनितानां नेत्रनिर्वेशपेयं**
**मनसिजतरुपुष्पं रागबन्धप्रवाळम् ।**
**अकृतकविधि सर्वाङ्गीणमाकल्पजातं**
**विलसितपदमाद्यं यौवनं स प्रपेदे ॥ ५४ ॥**

**प्रका**—अथेति ॥ मधु मदकरत्वात् । नेत्रनिर्वेशपेयं नेत्रपात्रेण पातुं शक्यम् । निर्विश्यते अनेनेति निर्वेशः । पात्रनिर्वेशनीयमिति पाठे भोग्यम् । मनसिजतरोः शोभाहेतुत्वात्तत्कुसुमरूपणम् । रागबन्धः प्रवाळं किसलयं यस्येति कुसुमविशेणम् । अकृतकविधि अकृत्रिमरचनम् । आकल्पजातमाभरणसमूहः । इदन्तु सव्यतिरेकं रूपकम् । आद्यं विलसितपदं विलासानां प्रथमं स्थानम् ॥

**पदा**—अथेति ॥ अथ सः यौवनं प्रपेदे । अथ समस्तविद्याग्रहणानन्तरम् । "शैशवेऽभ्यस्तविद्यानाम्" इत्युक्तत्वादित्थमुक्तम् । यौवनं विशिनष्टि—वनितानामित्यादिना । वनितानां नेत्रनिर्वेशनीयमुपभोग्यम् । मधु मद्यम् । "मधु मद्ये च माक्षिके" इति भोजः । नेत्रनिर्वेशपेयमिति पाठे निर्विश्यतेऽनेनेति निर्वेशः पात्रं नेत्रपात्रपेयमित्यर्थः । उपभोगानन्तरमेव मदोत्पत्तिदर्शनान्मद्यत्वरूपणम् । "संमोहानन्दसम्भेदो मदिरादिकृतो मदः" इति भोजः । रमणीयपदार्थावलोकनादेर्मदकरत्वञ्च प्रसिद्धम् । उक्तं हि पूर्वमेव—"अभिनयान्परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवाः । अमदयन् सहकारलाता मनः" इत्यादि । मदानन्तरभाविनो मदनविकारस्यापि हेतुत्वमाह—रागबन्धप्रवाळं मनसिजतरुपुष्पमिति । रागस्य बन्धो रागबन्धः रागबन्ध एव प्रवाळं किसलयं यस्येति पुष्पविशेषणम् । रमणीयपदार्थाभिलाषरूपकिसलयानुमिळि । कामदेवतरुपुष्प-

। नी ।

मित्यर्थः । अकृतकविधि सर्वाङ्गीणमाकल्पजातम् । अकृतकविधि अकृत्रिमरचनम् । सर्वाङ्गीणं सर्वाङ्गव्याप्तम् । आकल्पजातमाभरणजालम् । आद्यं विलसितपदं विलासानां प्रथमं स्थानम् । आद्यमित्यनेनोपदेष्टृत्वमपि यौवनस्यैवेति द्योत्यते । यथाहुः — "उपदिशति हि कामिनीनां यौवनमद एव ललितानि" इति । विलासलक्षणन्तु रघुचरिते प्रतिपादितम् । अत्र सव्यतिरेकं रूपकम् ॥

प्रतिकृतिरचनाभ्यो दूतसन्दर्शिताभ्यः
समधिकतररूपाश्शुद्धसन्तानकामैः ।
अधिविविदुरमात्यैराहृतास्तस्य यूनः
प्रथमपरिगृहीते श्रीभुवौ राजकन्याः ॥ ५५ ॥

प्रका — प्रतिकृतीति ॥ दूतैरानीताः प्रतिकृतिरचनाः चित्रपटादौ यास्ताभ्योऽप्यधिकनरत्वेन रूपातिशय उक्तः । शुद्धमसङ्कीर्णम् । अधिविविधुरधिविन्ने चक्रुः । यतस्ते श्रीभुवौ प्रथमपरिगृहीते । "अध्यूढा चाधिविन्ना च कृता यस्यास्सपत्निका" इति यादवः । अधिवेदनन्नामान्यस्यां पूर्वं सत्यामेव तदुपरि भर्तृलाभः । अत्र परिणयनस्य पर्यायेण भणनात्पर्यायोक्तमिदम् । अत्र श्रीभुवोरप्यसाधारण्यं व्यज्यते । तस्य श्रीभुवावित्यन्वयः । यून इत्यमात्यकर्तृकस्य राजकन्याहरस्योचितकालभावित्वमुक्तम् ॥

इत्यरुणगिरिनाथविरचितायां रघुवंशप्रकाशिकायाम्
अष्टादशस्सर्गः ॥

पदा — प्रतिकृतीति ॥ अमात्यैराहृता राजकन्याः यूनस्तस्य प्रथमपरिगृहीते श्रीभुवौ अधिविविदुः अधिविन्ने चक्रुः । "कृतसापत्न्यकाऽध्यूढाऽधिविन्ना" इत्यमरः । राजपुत्र्यः श्रीभुवौ सापत्न्यके चक्रुरित्यर्थः । बाल्य एव श्रीभुवोः परिगृहीतत्वात्तयोरुपरि पूर्वमेव रूढानुरागमपि राजानं यौवनपरिगृहीतत्वात्कालान्तरभाविन्योऽपि राजकन्या लोकोत्तराभिस्सम्भोगभङ्गीभिरात्मसाधारणप्रेमाणञ्चक्रुरित्यर्थः । अनेन "यौवने विषयैषिणाम्" इत्यत्रोक्तो विषयानुभवोऽपि राज्ञा कृत इति व्यज्यते । राज्ञस्तथा वशीकरणे तासां कः प्रयास इत्याह — दूतेत्यादिना । दूतसन्दर्शिताभ्यः प्रतिकृतिरचनाभ्यः समधिकतररूपाः । रचनाशब्दोऽत्र द्रव्यपरः । चित्रपटादौ रचिताभ्यः प्रतिकृतिभ्य इत्यर्थः । सम्यगधिकं समधिकं, ततोऽप्य-

धिकं समधिकतरम्। दूतैश्चित्रपटादौ लिखित्वा समानीय दर्शिताभ्यः प्रतिकृतिभ्यः समधिकतरलावण्या इत्यर्थः। "चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम्। सम्प्रति शिथिलसमाधिम्मन्ये येनेयमालिखिता" इति माळविकाग्निमित्रोक्तः प्रकारोऽनेन दर्शितः। शुद्धमसङ्कीर्णमुभयकुलपरिशुद्धं सन्तानं कामयन्तीति तथा। अत्र पर्यायेण परिणयनस्य भणनात्पर्यायोक्तमलङ्कारः॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ
रघुवंशव्याख्यायां पदार्थदीपिकायाम्
अष्टादशः सर्गः॥

---

# एकोनविंशः सर्गः

अग्निवर्णमभिषिच्य राघवः
स्वे पदे तनयमग्नितेजसम् ।
शिश्रिये श्रुतवतामपश्चिमः
पश्चिमे वयसि नैमिशं वशी ॥ १ ॥

प्रका—अथ सुदर्शनचरितमुपसंहरति—अग्निवर्णमिति ॥ स्व इति । "पूर्वादिभ्यो नवभ्यो वा" इति स्मिन् विभाषितः । पदे राज्ये । अपश्चिमः आद्यः[2] । नैमिशं पुण्यारण्यविशेषम् । श्रुतवद्वशित्वयोरयमेव[3] परिणाम इति भावः । राघव इत्यनेन रघुवंशजानामयमेव धर्म इत्यर्थशक्त्युद्भवोऽर्थान्तरन्यासध्वनिः ॥

पदा—इत्थं परिरक्षितसमस्तभुवनतया स्वोचितनायिकालाभेन च परिभुक्तसमस्तभोग्यवस्तुनस्सञ्जातानुरूपपुत्रस्य सम्प्राप्तवार्धक्यस्य च सुदर्शनस्य वार्धकोचितां प्रवृत्तिमुक्त्वा चरितमुपसंहरति—अग्निवर्णमिति ॥ राघवः स्वे पदे अग्निवर्णं तनयमभिषिच्य नैमिशं शिश्रिये । स्वे आत्मीये । "पूर्वादिभ्यो नवभ्यो वा "इति स्मिन्विकल्पः । पदे राज्ये । नैमिशं पुण्यारण्यविशेषम् । अग्नितेजसमित्यनेन नाम्नोऽन्वर्थता दर्शिता । श्रुतवतामपश्चिमः श्रुतं शास्त्रं तद्वतां प्रथमः । वशी जितेन्द्रियः । अत्र श्रुतवत्त्वं जितेन्द्रियत्वे हेतुः, तच्च निवृत्तिमार्गप्राप्तौ इति मालारूपं काव्यलिङ्गमलङ्कारः । राघव इत्यनेन रघुकुलजातानामयं हि स्वभाव इत्यर्थान्तरन्यासध्वनिः ॥

तत्र तीर्थसलिलेन दीर्घिका-
स्तल्पमन्तरितभूमिभिः कुशैः ।
सौधवासमुटजेन विस्मृतः
सञ्चिकाय फलनिस्पृहस्तपः ॥ २ ॥

प्रका—तत्रास्य वृत्तमाह[4]—तत्रेति ॥ दीर्घिकाः क्रीडासरांसि । अन्तरितं छादितम् । अन्तरितभूमिभिः शयनीभूतैः । सञ्चिकाय सञ्चितं चकार ।

---

1 प । 2 प्रथमः । 3 वत्वशि । 4 युक्त ।

"विभाषा चेः" इति कुत्वम् । फलनिस्पृहः, फलाभिसन्धिरहितं हि तप[1] आनन्त्याय कल्पते । विस्मृत इति । "जीर्यतिभ्यश्च" इति चकारस्यानुक्तसमुच्चयार्थत्वात् कर्तरि क्तः । विस्मृतमस्यास्तीति मत्वर्थीयो वा, अन्तर्भावितण्यर्थो वा प्रयोगः । एभिरेषां विस्मरणमत्यन्तमनोनुकूलत्वात् । अननुकूले ह्यन्यस्मृतिर्भवति ॥

**पदा**—तत्रस्थस्य तस्य प्रवृत्तिमाह—तत्रेति ॥ सः तत्र फलनिस्पृहः तपः सञ्चिकाय । फले निस्पृहः निरभिलाषः । फलाभिसन्धिरहितं तपो मोक्षसाधनं भवति । सञ्चिकाय सञ्चितं चकार । "विभाषा चेः" इति कुत्वम् । तीर्थसलिलेन दीर्घिकाः, अन्तरितभूमिभिः कुशैः तल्पम् , उटजेन सौधवासञ्च विस्मृतः । दीर्घिकाः क्रीडासरांसि । अन्तरिता आच्छादिता भूमिःयैः । शयनीयतामुपगतैरित्यर्थः । विस्मृत,: "जीर्यतिभ्यश्च" इति चकारस्यानुक्तसमुच्चयार्थत्वात् कर्तरि क्तः । एभिरन्येषां विस्मरणेऽत्यन्तमनोनुकूलत्वं हेतुः । अननुकूलत्वे ह्यन्यस्मृतिर्भवति । अत्र भोगसाधनानां तपस्साधनानाञ्च विनिमयप्रतीतेः परिवृत्तिध्वनिः ॥

**लब्धपालनविधौ न तत्सुतः[2]**
**खेदमाप गुरुणा हि मेदिनी ।**
**भोक्तुमेव भुजनिर्जितद्विषा**
**न प्रसाधयितुमस्य कल्पिता ॥ ३ ॥**

**प्रका**—अथाग्निवर्णचरितं वर्णयति—लब्धपालनेति ॥ खेदं परिपन्थिनिरासोपायप्रयोगजनितम् । कुत इत्याह—गुरुणा हीति । कल्पिता सामर्थ्यं प्रापिता । भुजनिर्जिता द्विषः पालनविरोधिनो येन । भुजशब्देन पराक्रमप्राधान्यं प्रथयता तदानीमपि द्विषां तासानुपरमो द्योत्यते । प्रसाधयितुं प्रकर्षेण साधयितुम् । लाभवदेव पालनमप्ययत्नसम्पन्नमस्यासीदित्यर्थः । अत्र चातुष्षष्टिकप्रयोगवाचिना भोगशब्देन प्रतिकर्मवाचिना प्रसाधनशब्देन लिङ्गविशेषेण च नायिकाव्यवहारो ध्वन्यते ॥

**पदा**—अथाग्निवर्णचरितमेव वर्णयति—लब्धपालनेति ॥ तत्सुते लब्धपालनविधौ मेदिनी खेदं न आप । परिपन्थिनिरासप्रयोगजनितदुःखं न

1 पोऽमुत्रा[illegible]य । 2 रघुसुते ।

प्रपेदे। तत्र हेतुमाह—गुरुणेत्यादिना। गुरुणा अस्य भोक्तुमेव हि कल्पिता। मेदिनीत्यनुषज्यते। एवशब्दोक्तमर्थमभिद्योतयति—प्रसाधयितुं नेति। प्रकर्षेण साधयितुं वशीकर्तुं न। कल्पितेत्यनुषज्यते। लाभवत् पालनमप्ययत्नसम्पन्नमासीदित्यर्थः। तत्र हेतुर्भुजनिर्जितद्विषेति। स्वभुजमात्रेणैव निर्जिता द्विषः पालनपरिपन्थिनः शत्रवो येन। अनेन राज्ञाम्मनसि तद्बाहुवीर्यस्य पुनरप्यनुवर्तमानत्वं ध्वन्यते॥

सोऽधिकारमधिपः कुलोचितं
काश्चन स्वयमवर्तयत्समाः।
तन्निवेश्य[2] सचिवेष्वतः परं
स्त्रीविधेयनवयौवनोऽभवत् ॥ ४ ॥

प्रका—स इति॥ अधिपः स्वामी। अवर्तयत् अकरोत्। समाः वर्षाणि काश्चनशब्दस्याभिप्रायं विवृणोति—तमित्यादिना। निवेश्य, "इच्छामि विषयोपभोगेन यौवनं मानयितुम्। तद्भवद्भिः कञ्चित् कालमधिकारो वोढव्यः" इति विधेयशब्देन कामातिप्रसङ्गः सूचितः। तत्र च नवयौवनं सहकारीति नवयौवनशब्द उपात्तः। अनेनास्य धीरललितत्वं सूचितम्। स हि सचिवायत्तसिद्धिर्भोगप्रवणश्च॥

पद्मा—भोक्तुमित्युक्तं भोगप्रकारमेवाथ विस्तरतः प्रतिपादयितुं पालनप्रकारं संक्षिप्याह---स इति॥ सः अधिपः कुलोचितम् अधिकारं काश्चन समाः स्वयम् अवर्तयत्। अधिपः स्वामी। कुलोचितमधिकारं राज्यपरिपालनम्। समाः संवत्सरान्। अत्यन्तसंयोगे द्वितीया। अवर्तयत् कृतवान्। काश्चनशब्दस्याभिप्रायं विवृणोति—तमित्यादिना। अतः परं तं सचिवेषु निवेश्य स्त्रीविधेयनवयौवनः अभवत्। तम् अधिकारम्। निवेश्य, "कञ्चित्कालमहं भोगैर्भोग्यानां नवयौवनं मानयामि। भवद्भिस्तत् क्रियतां पालनं भुवः" इत्यादिवचनैस्सचिवेष्वर्पयित्वेत्यर्थः। स्त्रीणां विधेयं नवं यौवनं यस्य। अत्र विधेयशब्देन कामातिसक्तिस्सूचिता। तत्र सहकारि नवयौवनमिति नवयौवनशब्द उपात्तः। अनेनास्य नायकस्य धीरललितत्वं सूचितम्, सचिवायत्तसिद्धिर्भोगप्रवणश्च धीरललित इति लक्षणात्॥

कामिनीसहचरस्य कामिनस्तस्य वेश्मसु मृदङ्गनादिषु।
ऋद्धिमन्तमधिकर्धिरुत्तरः पूर्वमुत्सवमपोहदुत्सवः ॥ ५ ॥

---

1 भिकः। 2 स।

**प्रका**—अथास्मिन् सर्गे शृङ्गारसाम्राज्यं दर्शयन् कामसूत्रार्थं प्रपञ्चयितुमुपक्रमते—कामिनीति ॥ कामिनीसहचरस्य कामिन इति परस्परास्थाबन्धरूपो रतिः स्थायिभाव उन्मीलितः । मत्वर्थीयेन तु नित्ययोग उक्तः । वेश्मस्विति बहुवचनमवरोधबहुत्वात् । मृदङ्गनादिष्विति सङ्गीतकाविच्छेदद्योतकम् । सङ्गीतकं हि प्रधानमुद्दीपनम् । ऋद्धिमन्तं सम्पन्नोपकरणम् । उत्सवशब्देन महिम्नचो देश्याश्च क्रीडा उक्ताः । अपोहत् अपानुदत् । न्यग्भावयामासेत्यर्थः । "उपसर्गादस्यत्यूह्योर्वावचनम्" इति तङ् विभाषितः । "आटश्च" इति वृद्धिः । गणपाठस्तु न तथा युक्तियुक्तः ॥

**पदा**—अथ शृङ्गारस्यैव रसेषु प्राधान्यात्तमेव वर्णयिष्यंस्तत्सर्वस्वभूतं कामसूत्रार्थं विस्तरतः प्रतिपादयितुमुपक्रमते—कामिनीति ॥ तस्य वेश्मसु उत्तरः उत्सवः पूर्वमपोहत् । अत्रावरोधबहुत्वाद्वेश्मबहुत्वम् । उत्सवशब्देन मनोज्ञाः क्रीडा उक्ताः । अधश्चकार । "उपसर्गादस्यत्यूह्योः" इति तङ् विभाषितः । "आटश्च" इति वृद्धिः । कामिनीनां सहचरस्य सहायभूतस्य । तत्र हेतुः—कामिन इति । अनेन विशेषणद्वयेन परस्परास्थारूपा रतिरुन्मीलिता । मत्वर्थीयाभ्यान्तु नित्यसंयोग उक्तः । मृदङ्गनादोऽत्रास्तीति मृदङ्गनादि । एतच्च विशेषणं नृत्तगीतयोरप्युपलक्षणम् । अनेन सङ्गीताविच्छेद उक्तः । "नृत्तं गीतञ्च वाद्यञ्च त्रयं सङ्गीत उच्यते" इति । उद्दीपनेषु सङ्गीतं हि प्रधानम् । ऋद्धिमन्तं सम्पन्नसर्वोपकरणम् । पूर्वस्मादधिका ऋद्धिरुपकरणं यस्य । इदमधःकरणे हेतुः ॥

**इन्द्रियार्थपरिशून्यमक्षमः**
**सोढुमेकमपि स क्षणान्तरम् ।**
**अन्तरेव विहरन्दिवानिशं**
**न व्यपैक्षत समुत्सुकाः प्रजाः ॥ ६ ॥**

**प्रका**—तत्रातिप्रसङ्गं त्रिभिः श्लोकैर्वर्णयति—इन्द्रियेति ॥ इन्द्रियाणामर्थो विषयोपभोगः । सोढुम् अतिवाहयितुम् । क्षणान्तरं यं कञ्चित् क्षणम् । समुत्सुकाः स्वामिदर्शनसमुत्सुकाः ॥

**पदा**—अथ विधेयशब्देन सूचितां कामातिसक्तिमेव त्रिभिः श्लोकैराह—इन्द्रियेति ॥ सः दिवानिशम् अन्तः एव विहरन् समुत्सुकाः प्रजाः न व्यपैक्षत । दिवानिशं रात्रिन्दिवम् । समुत्सुकाः सम्यगुत्सुकाः सश्रद्धाः ।

स्वामिदर्शने इति शेषः । सर्वदान्तरेव विहरणे हेतुमाह—इन्द्रियेत्यादिना । इन्द्रियार्थपरिशून्यम् एकं क्षणान्तरमपि सोढुम् अक्षमः । इन्द्रियाणामर्थो विषयोपभोगः । तेन परिशून्यम् । एकं क्षणान्तरं क्षणभेदं जातु कञ्चित्कालमपि । सोढुम् अतिवाहयितुम् । अक्षमः अशक्तः ॥

गौरवाद्यदपि जातु मन्त्रिणां
दर्शनं प्रकृतिकाङ्क्षितं ददौ ।
तद्गवाक्षविवरावलम्बिना
केवलेन चरणेन कल्पितम् ॥ ७ ॥

प्रका—गौरवादिति ॥ सम्मानात् । मन्त्रिवचनानुरोधादित्यर्थः । "गौरवन्तु गुरुत्वे च कुङ्कुमे च नपुंसकम् । सम्माने च...." इति केशवः । जातु कदाचित् । यदपि दत्तं दर्शनम्, तदपि गवाक्षनिर्गतेन चरणमात्रेणासीदित्यर्थः ॥

पदा—गौरवादिति ॥ मन्त्रिणां गौरवात् जातु प्रकृतिकाङ्क्षितं यद्दर्शनं ददौ, तदपि गवाक्षविवरावलम्बिना केवलेन चरणेन कल्पितम् । गौरवात् सम्मानात् । मन्त्रिजनसम्मानार्थमित्यर्थः । "गौरवन्तु गुरुत्वे च कुङ्कुमे च नपुंसकम् । सम्मानने च" इति केशवः । कदाचिन्मन्त्रिवचनगौरवात् प्रकृतिभ्यो यद्दर्शनं दत्तम्, तदपि गवाक्षद्वारनिस्सारितेनैकेन चरणेनैव कल्पितमासीदित्यर्थः । अनेनावशिष्टानामङ्गानां तदानीमपि क्रीडोपयुक्तत्वं सूचितम् ॥

तत्कृतप्रणतयोऽनुजीविनः
कोमलात्मनखरागरूषितम् ।
भेजिरे नवदिवाकरातप-
स्पृष्टपङ्कजतुलाधिरोहिणम् ॥ ८ ॥

प्रका—तदिति ॥ चरणम् । तमिति वा पाठः, चरणस्य द्विलिङ्गत्वात् । तत् भेजिरे इत्यन्वयः । कोमलात्मा कोमलरूपः । केचित्तु नखशब्देन पूर्वमात्मशब्दं समस्यन्ति । पक्षद्वयेपि गतार्थ आत्मशब्दः । रूषितं लिप्तम् । रुषिरपठितो धातुः । "वर्धते धातुगण" इति शब्दविदामाम्नायात् । अधिरोहणमिति पाठे ल्युट्प्रत्ययः कर्तरि द्रष्टव्यः ॥

**पदा**—तमिति ॥ अनुजीविनः कृतप्रणतयः तं भेजिरे । तं चरणम् । तदिति पाठे चरणशब्दो नपुंसकम् । "चरणोऽस्त्रियाम्" इत्यमरः । कृतप्रणतय इत्यनेन, चरणमात्रेपि तेषां स्वामित्वबुद्धिरासीदित्युक्तम् । तेन च भक्त्यतिशयो द्योत्यते । कोमलात्मना कोमलस्वरूपेण नखरागेण नखारुणिम्ना । नखप्रभयेत्यर्थः । रूषितं लिप्तम् । अलक्तकादिसंसर्गव्यवच्छेदार्थमात्मशब्दः । "यस्य पादनखौ रक्तौ" इति सामुद्रिकः । नखरागरूषितत्वादेवाह—नवदिवाकरेति । नवस्य दिवाकरस्य आतपेन स्पृष्टं यत् पङ्कजं तेन तुलां सादृश्यं अधिरोढुं शीलमस्येति तथा । अधिरोहणमिति पाठे तु ल्युट्प्रत्ययः ॥

यौवनोन्नतविलासिनीस्तनक्षोभलोलकमलाश्च दीर्घिकाः ।
गूढमोहनगृहास्तमम्बुभिस्स व्यगाहत विगाढमन्मथः ॥ ९ ॥

**प्रका**—एवं सचिवन्यस्तलोकतन्त्रस्यास्यालम्बनोद्दीपनसौष्ठवं दर्शयन् नागरिकवृत्तप्रकरणार्थानुष्ठानमाह—यौवनेति ॥ अनेन विशेषणेन दीर्घिकाणां रामणीयकातिशय उक्तः । यौवनेनोन्नता दृप्ताः । गूढमन्तर्हितं मोहनगृहं सुरतगृहं यासु । विगाढमन्मथः । स हि भोगे प्रसज्यते ॥

**पदा**—इत्थं कामातिसक्तस्यास्यालम्बनोद्दीपनसौष्ठवं दर्शयितुं कामसूत्रे नागरिकप्रकरणोक्तार्थानुष्ठानमाह—यौवनेति ॥ सः दीर्घिकाः व्यगाहत च । दीर्घिकाः क्रीडासरांसि । यौवनेनोन्नताभ्यां विलासिनीस्तनाभ्यां हेतुभूताभ्यां यः क्षोभः । जलचलनमिति यावत् । तेन लोलानि कमलानि यासु । अनेन विशेषणेन दीर्घिकाणां रमणीयतातिशय उक्तः । तासां दीर्घिकाणामेवाम्बुभिः गूढा अन्तर्हिता मोहनगृहाः सुरतगृहा यासु । अनेन विशेषणेन जलक्रीडान्तराळे सुरतक्रीडाश्च सूचिताः । विगाढः प्रवृद्धो मन्मथो यस्य । अनेन सम्भोगलालसत्वमुक्तम् ॥

तत्र सेकहृतलोचनाञ्जनैर्धौतरागपरिपाटलाधरैः ।
अङ्गनास्तमधिकं व्यलोभयन्[1]र्घितप्रकृतिकान्तिभिर्मुखैः ॥ १० ॥

**प्रका**—जलक्रीडामुक्त्वा तस्यालम्बनोपयोगमाह—तत्रेति ॥ धौतरागा अपि परिपाटला अधरा येषाम् । रागोऽलक्तकः । व्यलोभयन् जह्रुः । तत्

1 न्नर्पित ।

कथमित्याह—अर्पिता मनोज्ञा प्रकृतिकान्तिः स्वाभाविकशोभा येषामिति वल्लभः। दक्षिणावर्तस्त्वर्पितप्रकृतीति पाठमादृत्य तत्र रीतिभेदं पौनरुक्त्यञ्चाशङ्क्य परिहरन् धौतो निरस्तो रागपरिपाटलोऽलक्तकारुणिमा यस्य तादृशोधरो येषामिति व्याख्यातवान् ॥

पदा—इत्थमुक्तायां क्रीडायामालम्बनोपयोगमाह—तत्रेति ॥ अङ्गनाः तत्र अर्पितप्रकृतिकान्तिभिः मुखैः तम् अधिकं व्यलोभयन्। तत्र जलक्रीडायाम्। अर्पिता न्यस्ता प्रकाशिता प्रकृतिकान्तिः-स्वाभाविकशोभा येषाम्। पूर्वस्मादधिकमस्य लोभमापादयामासुः। स्वाभाविकशोभासमर्पणे हेतुमाह—सेकेत्यादिना। सेकेन हृतं लोचनयोर्वर्तमानमञ्जनं येषाम्। अञ्जनविनिर्गमे हि व्यवधानविरहात्स्वाभाविको रमणीयो नेत्रनीलिमैव प्रादुर्भवति। धौतः क्षालितः रागोऽलक्तको येषां तथापि परिपाटलोऽधरो येषाम्। अञ्जनादीनां शोभातिरस्कार एव व्यापार इति तस्य बुद्धिमुत्पादयामासुरित्यर्थः ॥

घ्राणकान्तमधुगन्धकर्षिणीः
पानभूमिरचनाः प्रियावृतः।
अभ्यपद्यत स वाशितासखः
पुष्पिताः कमलिनीरिव द्विपः ॥ ११ ॥

प्रका—मधुपानमाह—घ्राणेति ॥ घ्राणकान्तेन मधुगन्धेन कर्षिणीः हारिणीः। पानभूमिरचनाः रचिताः पानभूमीः। रचनाशब्दस्सद्योनिर्माणद्योतकः। अभ्यपद्यत भेजे। वाशिताः करिण्यः ॥

पदा—मधुपानमाह—घ्राणेति ॥ सः प्रियावृतः पानभूमिरचनाः अभ्यपद्यत। पानार्था भूमयः पानभूमयः। रचनाशब्दोऽत्र द्रव्यपरः। अभिनवरचिताः पानभूमीरित्यर्थः। अभ्यपद्यत भेजे। द्विपः वाशितासखः पुष्पिताः कमलिनीः इव। वाशिताः करिण्यः तासां सखा। घ्राणेत्यादिः साधारणो धर्मः। घ्राणेन्द्रियस्य कान्तैरभीष्टैर्मधुगन्धैः कर्षिणीः हारिणीः। मनोहारिणीरित्यर्थः ॥

सातिरेकमदबन्धिनं[1] रहस्तेन दत्तमभिलेपुरङ्गनाः।
ताभिरप्युपहृतं मुखासवं सोऽपिबद्बकुलतुल्यदौहदः[2] ॥ १२ ॥

---

1 कारणं। 2 दोहदः।

**प्रका**—अस्यापि रतावुपयोगमाह—सातिरेकेति ॥ सातिरेकमदबन्धिनं सातिशयमदकरम्। अत्र हेतुः प्रियजनमुखसंसर्गः। मुखासवमिति सम्बध्यते। वल्लभस्तु, मदगन्धिनमिति पठित्वा सातिरेको मदस्येव मधुरो गन्धो विद्यते यस्य तं सातिरेकमदगन्धिनम्। कर्मधारयान्मत्वर्थीय इति व्याचष्ट। दक्षिणावर्तस्तु, मधुगन्धिनमिति पाठमादृत्य अतिशयितात्मीयगन्धवन्तम्, मुखगन्धवासितत्वादिति। तत्र पूर्वस्य मते मदगन्धसादृश्यमासवगन्धस्य नानुरूपम्। "कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात् प्रक्रमस्य" इति वचनाच्च दोषः। द्वितीयस्य तु मधुशब्दो व्यर्थः। बकुलतुल्यं दौहृदं मुखासवपानवाञ्छा यस्य ॥

**पदा**—पानस्य रतावुपयोगमाह—सातिरेकेति ॥ अङ्गनाः तेन दत्तं मुखासवम् अभिलेषुः। सः अपि ताभिः उपहृतम् अपिबत्। मुखासवमित्यनुषज्यते। उपहृतं स्वाभाविकीं लज्जां परित्यज्य स्वयमेव दत्तम्। अयं हि मदनस्य स्वभाव इति भावः। सातिरेकमदबन्धिनं सातिरेकं सातिशयं यथा भवति तथा मदं बन्धुं कर्तुं शीलमस्येति तथा। सातिरेकमिति मदविशेषणं वा। प्रियजनमुखसम्बन्धादत्यन्तमदकरमित्यर्थः। बकुळः केसरवृक्षः, तेन तुल्यं दौहृदम् इच्छा मुखासवपानवाञ्छा यस्य। बकुळस्य तु मुखासवपानवाञ्छा प्रसिद्धा। "आलिङ्गनात् कुरवको बकुळो मुखशीधुना। कामिनीनां पदाघातादशोकः पुष्प्यति द्रुमः" ॥ इति वचनात् ॥

**अङ्कमङ्कपरिवर्तनोचिते तस्य निन्यतुरशून्यतामुभे।**
**वल्लकी च हृदयङ्गमस्वना वल्गुवागपि च वामलोचना ॥ १३ ॥**

**प्रका**—गीतवाद्ययोरुपयोगमाह—अङ्कमिति ॥ अङ्कमशून्यतां निन्यतुः। अङ्के तस्य नित्यसन्निहिते बभूवतुः। अङ्कोपविष्टायां वीणायां वाद्यमानं गेयमङ्कोपविष्टया वामलोचनया गापयन्नित्यमासेत्यर्थः। अत्रार्थे लिङ्गमुत्तरार्धगते विशेषणे ॥

**पदा**—गीतवाद्ययोरपि रतावुपयोगप्रकारमाह—अङ्कमिति ॥ उभे तस्य अङ्कमशून्यतां निन्यतुः। उत्सङ्गे नित्यसन्निहिते बभूवतुरित्यर्थः। अङ्के यत् परिवर्तनम् अवस्थानं तत् उचितमभ्यस्तं ययोः। के पुनस्ते इत्यत्राह—वल्लकीत्यादिना। हृदयङ्गमस्वना वल्लकी च मञ्जुवाक् वामलोचना अपि च। हृदयङ्गमो मनोहरः स्वनः शब्दो यस्याः। "वीणा तु वल्लकी"

इत्यमरः। मञ्जुवाक् मनोहरवाणी। अङ्के निवेशितया वीणया नायको रागं वादयन् तमेवाङ्कोपविष्टया वल्लभया गापयन् सततमास्ते स्मेत्यर्थः॥

स स्वयं प्रहतपुष्करः कृती लोलमाल्यवलयोहरन्मनः।
नर्तकीरभिनयातिलङ्घिनीः पार्श्ववर्तिषु गुरुष्वलज्जयत् ॥ १४ ॥

प्रका—नृत्तस्याप्याह—स इति॥ स्वयमित्यादरद्योतकम्। कृती वादननिपुणः। नर्तकीः। "नृती गात्रविक्षेपे" इत्यस्माद्धातोः "शिल्पिनि ष्वुन्" इति ष्वुन्। "षिद्गौरादिभ्यश्च" इति ङीष्। कृतित्वात्स्वयं वादनम्, तेन लोलमाल्यवलयत्वम्, ततो मनोहरणम्, तस्मादभिनयलङ्घनम्, तेन च गुरुपार्श्ववर्तित्वसहितेन लज्जेति काव्यलिङ्गमालारूपम्॥

पदा—नृत्तस्याप्याह—स इति॥ सः स्वयं प्रहतपुष्करः मनः हरन् गुरुषु पार्श्ववर्तिषु अभिनयातिलङ्घिनीः नर्तकीः अलज्जयत्। पुष्करं वाद्यमुखम्। स्वयमेव मृदङ्गवादनमादरद्योतकम्। नर्तकीः। "नृती गात्रविक्षेपे" इत्यस्माद्धातोः "शिल्पिनि ष्वुन्" इति ष्वुन्। "षिद्गौरादिभ्यश्च" इति ङीष्। कृती वाद्यवादननिपुणः। लोलाश्चञ्चला माल्यानि मालाः वलयाश्च यस्य। अत्र स्वयमेव वाद्यवादने कृतित्वं हेतुः, वाद्यवादनाच्च लोलमाल्यवलयत्वम्, ततश्च मनोहरणम्, तस्मादभिनयान्यथात्वप्राप्तिः, ततश्च गुरुणा मे चित्तविकारो ज्ञात इति लज्जाधिक्यमतोऽत्र काव्यलिङ्गमालारूपम्॥

चारु नृत्तविगमे च तन्मुखं स्वेदभिन्नतिलकं परिश्रमात्।
प्रेमदत्तवदनानिलः पिबन्नत्यजीवदमरालकेश्वरौ ॥ १५ ॥

प्रका—एवं नागरिकवृत्तात्मकं जलक्रीडामधुपानगीतवाद्यनृत्तादिशृङ्गारोद्दीपनान्युपवर्ण्य तन्त्रावापौ वक्ष्यन्नृत्तप्रसङ्गागतनर्तक्यनुरागदर्शनजनितं नायकस्य च्छन्नमनुरागं सम्भोगश्चाह—चार्विति॥ नृत्तविगमे नृत्तावसाने। चशब्दो वाक्यार्थसमुच्चये। तन्मुखं नर्तकीमुखम्। अत्यजीवत्। अतेः कर्मप्रवचनीयत्वात् अमरालकेश्वराविति द्वितीया। तावतिक्रम्याजीवदित्यर्थः॥

पदा—अथ नृत्तप्रसङ्गागतेन नर्तक्यनुरागदर्शनेन जनितं नायकस्य तासु च्छन्नमनुरागं सम्भोगश्चाह—चार्वित्यादिना॥ सः नृत्तविगमे तन्मुखं पिबन् अमरालकेश्वरौ अत्यजीवच्च। नृत्तविगमे नृत्तावसाने। तन्मुखं नर्तकीनां मुखम्। अतेः कर्मप्रवचनीयत्वात् अमरालकेश्वराविति द्वितीया। अमरेश्वर-

मळकेश्वरश्चातिक्रम्य जीवितवान् । मत्तोऽत्यन्तन्यूनावेताविति सम्भावयामासेत्यर्थः । चकारः पूर्ववाक्यार्थसमुच्चयार्थः । तन्मुखस्य रमणीयतामाह—चार्वित्यादिना ॥ चारु सुन्दरम् । स्वत एव मनोहरमित्यर्थः । तादात्विकं चारुत्वातिशयमप्याह—परिश्रमात् स्वेदभिन्नतिलकमिति । भिन्नम् ईषत्प्रमुषितमित्यर्थः । अत एवाह—प्रेमदत्तवदनानिल इति ॥

**तस्य सावरणदृष्टसन्धयः काम्यवस्तुषु नवेषु सङ्गिनः ।**
**अङ्गनाभि[1]रुपसृत्य चक्रिरे सामिभुक्तविषयास्समागमाः ॥ १९ ॥**

**प्रका**—अथ शृङ्गारपरिपोषाय कैशिक्यङ्गभूतमकाण्ड एव सम्भोगभङ्गलक्षणं नर्मस्फोटमाह—तस्येति ॥ सावरणास्तथापि दृष्टाश्च सन्धयो येषाम् । सन्धिः सन्धानं दूत्यादिकर्तृकः समागमोपायप्रयोगः । काम्यवस्तुषु रमणीयपदार्थेषु । नवेषु अननुभूतचरेषु । सङ्गिनः सञ्जनशीलस्य । अतिरागित्वाद्भुक्तचरानर्थाननुपेक्ष्य नवनवाननुधावत इत्यर्थः । अङ्गनाभिः देवीभिः । उपसृत्य उपगम्य । सामिभुक्तविषयाश्चक्रिरे । मध्ये विघ्निता आसन् । देवीभयेन छन्नं निर्वर्त्यमानं नर्तकीसमागमं नवनवानुरागितामस्य विदित्वा दत्तावधाना देव्यः स्वचारवशेनोपलब्धवत्यः स्वयमुपेत्य विघ्नयामासुरित्यर्थः । मुखपानमात्रावधिरेव नर्तकीसम्भोगः संवृत्त इति भावः । तथाचास्यैव कवेः प्रयोगान्तरम्—"मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् । मुखमंसविवर्ति पक्ष्मळाक्ष्याः कथमप्युन्नमितं न चुम्बितन्तु ॥" इति । दक्षिणावर्तस्तु, सावरणाः प्रच्छन्नाः दृष्टाः प्रकाशाश्च सन्धयः सन्धानविषयो येषां तथा । गोनर्दीयमते सन्धिर्द्विविधः सावरणः प्रकाशश्च । सावरणो भिक्षुक्यादिना । प्रकाशश्च स्वयमुपसृतेनेति । काम्यवस्तुषु शब्दादिष्विन्द्रियार्थेषु । अपसृत्य अन्यत्र गत्वा । "इतः स्वयमुपसृत्य विशेषार्थी तत्र स्थितोऽनुपजापश्चेत्सन्धेयः" इति वात्स्यायनः । अपसृत्य नवेषु काम्यवस्तुषु सङ्गिनस्तस्य सावरणदृष्टसन्धयः समागमा वल्लभाभिः सामिभुक्तविषयाश्चक्रिरे इत्यन्वयः । नवविषयसक्तेन तेन सन्धाय यद्यस्मत्सङ्गमेषु विषयाः पर्याप्तमुक्तास्स्युः, तदानीमस्माननुपेक्ष्य नवसङ्गित्वादसावन्यत्र गमिष्यतीति मत्वा तस्य वल्लभाभिः स्वसमागमाः सामिभुक्तविषयाश्चक्रिर इत्यर्थ इति व्याचष्ट । अत्र तावदौचित्यं पूर्वोत्तरसम्बन्धश्च निरूप्यः ॥

---

1 वल्लभा ।

**पदा**—इत्थमुपलब्धस्य नर्तकीसमागमस्य शृङ्गारपरिपोषार्थं मध्ये विच्छेदमाह—तस्येति ॥ तस्य समागमाः वल्लभाभिः उपसृत्य सामिभुक्तविषयाः चक्रिरे। समागमाः सम्भोगाः। वल्लभाभिः देवीभिः। उपसृत्य स्वयमेवोपगम्य। सामिभुक्ताः अर्धभुक्ताः विषया भोग्यवस्तूनि यत्र। सामीत्यव्ययमर्धार्थे। "सामि त्वर्धे जुगुप्सने" इत्यमरः। नर्तकीसम्भोगास्तस्य मुखपानमात्र एव पर्यवसिता इत्यर्थः। मध्ये विच्छेदे ह्यभिलाषो वर्धते। अत एवोक्तम्—"मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्। मुखमंसविवर्ति पक्ष्मळाक्ष्याः कथमप्युन्नमितं न चुम्बितन्तु॥" इति। देवीभयेन सावरणा अपि दृष्टाः सन्धयः सन्धानानि येषाम्। भृत्यैस्सह क्रियमाणं सङ्केतस्थानमत्र सन्धिशब्देनोच्यते। नवेषु काम्यवस्तुषु सङ्गिनः अननुभूतचरेषु रमणीयपदार्थेषु सज्जनशीलस्य। इदं नर्तक्यनुरागहेतुः॥

अङ्गुलीकिसलयाग्रतर्जनं
भ्रूविभङ्गकुटिलञ्च वीक्षितम्।
मेखलाभिरसकृच्च बन्धनं
वञ्चयन् प्रणयिनीरवाप सः ॥ १७ ॥

**प्रका**—अथैवं प्रत्यक्षदृष्टव्यलीकासु देवीष्वीर्ष्याविप्रलम्भमाह---अङ्गुलीति॥ भ्रूविभङ्गो भ्रूभेदः। वञ्चयन् गूढं विप्रियमाचरन्। अवाप लेभे। अतोऽधिकः को लाभ इति भावः। अधीराश्चेमाः, "खेदयेद्दयितं कोपादधीरा परुषाक्षरम्" इत्युक्तेः॥

**पदा**—इत्थं प्रत्यक्षदृष्टव्यलीकासु देवीषु नायकस्य सम्भोगपरिपोषार्थमीर्ष्याविप्रलम्भमाह---अङ्गुलीति॥ सः प्रणयिनीः वञ्चयन् अङ्गुलीकिसलयाग्रतर्जनं भ्रूविभङ्गकुटिलं वीक्षितं च मेखलाभिः असकृत् बन्धनञ्च अवाप। वञ्चयन् विप्रियमाचरन्। भ्रूविभङ्गो भ्रूभेदः तेन कुटिलं वक्रम्। अवाप लेभे। अयं हि कामिनां परमो लाभः॥

तेन दूतिविदितं निषेदुषा
पृष्ठतः सुरतवाररात्रिषु।
शुश्रुवे प्रियजनस्य कातरं
विप्रलम्भपरिशङ्किनो वचः ॥ १८ ॥

**प्रका**—एवमवधूय यातानां जातानुशयानां देवीनां नायकस्य चान्योन्यविषयं वृत्तमाह—तेनेति ॥ दूतिविदितं नायिकाप्रहिताभिर्दूतीभिः परिज्ञातम्। निषदनविशेषणञ्चैतत्। पृष्ठत इत्यनुपलक्षणार्थम्। सुरतवाररात्रिषु अस्याः सुरतस्य वारोऽस्यां रात्राविति क्रमागतासु रात्रिषु। वारोऽवसरः। "वारः क्रियाभ्यावृत्तौ स्यात्समूहेऽवसरे" इति केशवः। कातरमधैर्यव्यञ्जकम्। विप्रलम्भो वियोगः, अनागमनेन वञ्चनं वा। वचः, मदीयावस्थां पश्येत्यादि ॥

**पद**—अथ कोपादवधूय गतानां जातानुशयानां देवीनां नायकस्य चान्योन्यविषयं वृत्तमाह—तेनेति ॥ सुरतवाररात्रिषु दूतिविदितं पृष्ठतः निषेदुषा तेन विप्रलम्भपरिशङ्किनः प्रियजनस्य कातरं वचः शुश्रुवे। सुरतस्य वारः सुरतवारः वारोऽवसरः। "वारः क्रियाभ्यावृत्तौ स्यात्समूहेऽवसरे" इति केशवः। सुरतवारस्य रात्रिः सुरतवाररात्रिः। अनया सह सुरतस्यास्यां रात्राववसर इति क्रमागतासु रात्रिष्वित्यर्थः। दूतिविदितमिति निषदनक्रियाविशेषणम्। नायिकाप्रहिताभिर्दूतीभिः परिज्ञातम्। एतादृशानुरागस्ते वल्लभः, खेदं मा कृथा इति देवीं प्रति निवेदनमस्य प्रयोजनम्। यथा शाकुन्तले सानुमतीवृत्तान्तः। देवीपरिज्ञानाभावार्थं पृष्ठत इत्युक्तम्। विप्रलम्भं वियोगम्, वञ्चनं वा। परिशङ्कितुं शीलमस्येति तथा। किमितः परं मया वियोग एवानुभवितव्यः, नासाविदानीमप्यागच्छतीत्यादयः शङ्काप्रकाराः। मदीयामिमां दशां पश्येत्यादयो वचनप्रकाराः। शुश्रुव इति कर्मणि लिट्। "आयासितानामशरीरबाणैर्नितम्बिनीनां परिदेवितानि। आत्मार्थमाकर्णयतां हि यूनां समागमो नाम सुखान्तरायः ॥" इत्यत्रोक्तः प्रकारोऽनेन दर्शितः ॥

**लौल्यमेत्य गृहिणीपरिग्रहान्नर्तकीष्वसुलभासु तद्वपुः।**
**वर्तते स्म स कथञ्चिदालिखन्नङ्गुलीक्षरणसन्नवर्तिकः ॥ १९ ॥**

**प्रका**—अथ देवीनियन्त्रितस्य दाक्षिण्याधीनस्य नेतुर्विप्रलम्भशृङ्गारमाह—लौल्यमिति ॥ लौल्यं सतृष्णत्वम्। नर्तकीसमागमस्यान्तरा विघ्नितत्वेनापूर्णमनोरथत्वात्। गृहिणीपरिग्रहात् राज्ञीभिः स्वयमेव गृहीतत्वात्। तद्वपुः नर्तकीनामाकृतिम्। वर्तते स्म विनोदयति स्मात्मानम्। अङ्गुल्याः क्षरणं स्वेदः तेन सन्ना पतिता वर्तिका तूलिका यस्य। अयन्तु लेखनस्य कृच्छ्रसाध्यत्वे हेतुः। राज्ञीभिरवष्टब्धत्वान्नर्तकीनां दुर्लभत्वम्, ततो राज्ञो लौल्यम्, तेन तद्वपुर्लेखनम्, तेन कालयापनमिति कारणपरम्परा ॥

पद्रा — अथ देवीनियन्त्रितस्य दाक्षिण्यपराधीनस्य नायकस्य नर्तकीविषयं विप्रलम्भशृङ्गारमाह — लौल्यमिति ॥ सः गृहिणीपरिग्रहात् नर्तकीषु असुलभासु लौल्यम् एत्य तद्वपुः आलिखन् कथञ्चिद्वर्तते स्म। गृहिणीभिः परिग्रहात् ग्रहणात्। राज्ञीभिः स्वयमेव गृहीतत्वेन दाक्षिण्यपराधीनतया गन्तुमशक्यत्वादित्यर्थः। लौल्यं सतृष्णत्वम्। मध्ये विच्छेदो हि तृष्णां वर्धयति। तद्वपुः नर्तकीनामाकृतिम्। आलिखन् चित्रफलकादाविति शेषः। वर्तते स्म आत्मानं विनोदयामासेत्यर्थः। आकृतिमात्रलाभात् कथञ्चिद्वर्तनम्। अङ्गुल्याः क्षरणेन सात्त्विकविकारभूतेन स्वेदेन सन्ना पतिता वर्तिका तूलिका यस्य। विनोदनमिव लेखनमपि तस्य कृच्छ्रसाध्यमासीदित्यर्थः। अत्र राज्ञीभिरवष्टब्धत्वान्नर्तकीनां दुर्लभत्वम्, ततो राज्ञो लौल्यम्, तेन तद्वपुर्लेखनम्, तेन च कालयापनमिति कारणपरम्परा ॥

प्रेमगर्वितविपक्षमत्सरादायताच्च मदनान्महीक्षितम्।
निन्युरुत्सवविधिच्छलेन तं देव्य उज्झितरुषः कृतार्थताम् ॥ २० ॥

प्रका — एवमनुबध्यमानर्नर्तक्यनुरागे नायके देवीनां वृत्तमाह — प्रेमेति ॥ आत्मविषयनायकप्रेमगर्वितनर्तकीलक्षणविपक्षविषयमात्सर्यात्, आयतात् दीर्घकालवर्तिनो मदनाच्चेति रुष उज्झने हेतू। उत्सवविधिच्छलेन कामोत्सवव्याजेन कृतार्थतां सम्पन्नमनोरथतां निन्युः। कथमेता विषमशीलाः सापराधोऽहमनुनयामीति दाक्षिण्यप्रेमभ्यामाकुले राजनि प्रतिपादितकारणत्यक्तरोषाभिस्ताभिरुत्सवव्याजेन स्वगृहमानीय तस्य सम्पन्नमनोरथता सम्पादितेत्यर्थः ॥

पद्रा — अथ कथञ्चिल्लब्धावसरतया कृतनर्तकीसम्भोगे देवीनामनुसरणोपायं चिन्तयमाने च सापराधे नायके खण्डितानां देवीनां वृत्तमाह — प्रेमेति ॥ देव्य उत्सवविधिच्छलेन तं महीक्षितं कृतार्थतां निन्युः। उत्सवः कामोत्सवः तस्य विधिर्विधानं तद्व्याजेन। देवीभिरिदानीं मदनोत्सवस्समारभ्यते। तस्मादत्रभवतापि तत्रागन्तव्यमिति वाचा दूतीभिः समानीय देवीनामनुसरणोपायमेव चिन्तयमानं राजानं कृतार्थतां प्रापयामासुः। प्रेमगर्वितविपक्षमत्सरात् आयतात् मदनाच्च उज्झितरुषः। आत्मविषयेण नायकप्रेम्णा गर्विते नर्तकीलक्षणे विपक्षे विषये यो मत्सरः मात्सर्यं तस्माद्धेतोश्च, आयतात् दीर्घकालवर्तिनो मदनात् कामाच्च हेतोः परित्यक्तकोपाः प्रणयकलहादस्माकं दूरावस्थानमेव तासां प्रेमगर्वे

हेतुः । अतः परित्याज्य एवायम् । मदनतापिताश्च वयम् । तस्मात् पत्युरनुसरणमेव तत्रोपाय इति समानीय सम्पूर्णमनोरथमेनं चक्रुरित्यर्थः ॥

प्रातरेत्य परिभोगशोभिना
दर्शनेन भृतखण्डनव्यथाः[1] ।
प्राञ्जलिः प्रणयिनीः[2] प्रसादयन्
सोऽदुनोद्ग्रहणमन्थरः पुनः ॥ २१ ॥

**प्रका**—एवं कासुचित्पूर्वनायिकासु नायकस्य, तासाञ्च तस्मिन् वृत्तमुक्त्वा अन्यासु वृत्तिमाह—प्रातरिति ॥ परिभोगशब्देन तच्चिह्नानि लक्ष्यन्ते । भृता सम्भृता खण्डनेनापराधेन व्यथा यासामेवम्भूतास्ताः प्रसादयन् । प्रसन्नासु कथञ्चित्तासु स्वयमन्यत्र जिगमिषया ग्रहणमन्थरः तत्स्वीकरणे मन्दोद्यमः पुनरपि तास्तापयति स्मेत्यर्थः ॥

**पदा**—इत्थं कासाञ्चित् पूर्वनायिकानां नायकस्य च परस्परं वृत्तमुक्त्वा नायकस्यान्यासु वृत्तमाह—प्रातरिति ॥ सः प्रातः एत्य परिभोगशोभिना दर्शनेन कृतखण्डनव्यथाः प्रणयिनीः प्राञ्जलिः प्रसादयन् ग्रहणमन्थरः पुनः अदुनोत् । परिभोगशब्देनात्र तच्चिह्नभूता नखदन्तव्रणादयो लक्ष्यन्ते । तत्कालोत्पन्नत्वप्रतीतिः फलम् । तेन च कोपाधिक्यं द्योत्यते । कृता खण्डनेन अपराधेन व्यथा यासाम् । प्राञ्जलिः कृताञ्जलिरित्यर्थः । ग्रहणे तासां स्वीकरणे । अनुसरण इति यावत् । मन्थरः मन्दोद्यमः सन् । पुनः पुनरपि । अदुनोत् तापयामास । अभिनवनायिकान्तरप्राप्तिकाङ्क्षा तासामनुसरणाभावे हेतुत्वेन कल्पनीया । निशाविहारलब्धानि सम्भोगचिह्नानि कालान्तरप्राप्त्या यावन्नाभिभूयन्ते, तावत् प्रातरेव नायको नायिकास्सम्प्राप्य नखदन्तव्रणादिशोभिना निजदर्शनेनैव तासां रोषमुत्पादयन् पुनः पादप्रणामादिभिः कथञ्चित्प्रसन्नासु तासु नवनवनायिकान्तरप्राप्तिवाञ्छया तासामनुसरणमकुर्वाणः पुनरपि तास्तापयामासेत्यर्थः ॥

स्वप्नकीर्तितविपक्षमङ्गनाः प्रत्यभैत्सुरवदन्त्य एव तम् ।
प्रच्छदान्तगलितास्र[3]बिन्दुभिः क्रोधभिन्नवलयैर्विवर्तनैः ॥ २२ ॥

---

1 कृत । 2 प्रणय । 3 श्रु ।

प्रका—अथ प्रकारान्तरेणाभिव्यक्तव्यळीके नायके तासां वृत्तमाह—स्वप्नेति ॥ प्रत्यभैत्सुः निर्भर्त्सयामासुः । प्रवुद्धमिति शेषः । प्रच्छदः शयनीयोत्तरच्छदः तस्यान्ते पर्यन्ते गळिताः पतिताः आस्रबिन्दवो येषु । क्रोधेन संरम्भेण भिन्नाः शयनीयास्फालनविशीर्णा वलया येषु । विवर्तनैः परिवृत्य शयितैः । अवदन्त्य इति । स्वप्नेपि तामेवायं पश्यति । तस्मादत्र मानप्रदर्शनमेव युक्तमित्यवचनेन सातिशयमन्युसम्भारो व्यङ्ग्यः । एतास्तु मध्याः, मध्या "साश्रुः कृतागसम्" इत्युक्तेः ॥

पद्—अथ प्रकारान्तरेणाप्यभिव्यक्तव्यळीके नायके तासां वृत्तमाह—स्वप्नेति ॥ अङ्गनाः स्वप्नकीर्तितविपक्षं तम् अवदन्त्य एव विवर्तनैः प्रत्यभैत्सुः । स्वप्ने कीर्तितः विपक्षः प्रतिपक्षनायिका येन । अवदन्त्य एव किमप्यनालपन्त्य एव । स्वप्ने तामेवासौ पश्यति । तस्मात्तस्यामतिसक्त एवायम् । नापि स्वप्नकीर्तनं वचनैः प्रतिषेद्धुं शक्यम् । तस्मान्मानप्रदर्शनमेवात्र युक्तमित्येवशब्दार्थः । अनेन च रोषस्य सातिशयत्वं व्यज्यते । तत्प्रतिपादकञ्च विवर्तनविशेषणद्वयम् । विवर्तनैः परिवृत्य शयनैः । प्रत्यभैत्सुः निर्भर्त्सयामासुः । प्रवुद्धमिति शेषः । प्रच्छदः शयनीयोत्तरच्छदः तस्यान्ते पर्यन्ते गळिताः पतिताः आस्रबिन्दवो येषु । क्रोधेन संरम्भेण भिन्नानि शयनीयास्फालनेन विशीर्णानि वलयानि येषु । एतास्तु मध्याः, "मध्या साश्रुः कृतागसम्" इति वचनात् । "न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते" इति न्यायादीर्ष्याविप्रलम्भसम्पादितस्वादिमा सम्भोगः पुनरर्थाद्द्रष्टव्यः ॥

क्लृप्तपुष्पशयनाँल्लतागृहा-
नेत्य दूतिकृतमार्गदर्शनः ।
अन्वभूत्परिजनाङ्गनारतं
सोऽवरोधभयवेपथूत्तरम् ॥ २३ ॥

प्रका—अथास्य विषयान्तरे नवमनुरागं सम्भोगञ्चाह—क्लृप्तेति ॥ दूतिकृतेति ॥ ह्रस्वश्छन्दोभङ्गपरिहाराय कृतः, "अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिराम्" इति वचनात् । परिजनाङ्गनाः परिजनपदे देवीभिः स्थापिताः । उन्नतकुलप्रसूताः समरादिलब्धाः कन्यकाः । यथा वासवदत्तया सागरिका । तासां रतम् । अवरोधेभ्यो देवीभ्यो भयेन वेपथूत्तरम् । अनेन भयशबलत्वेन

सम्भोगप्रकर्षो गम्यते । यथाह:--"मुहविज्झविअवइव्वणिरुन्धसास्ससस्सकिं-उव्ळावस्सवहसअरखिओट्ठचोरियरमियअस्सुहावे" इत्यत्र ॥

**पदा**—अथ विषयान्तरे नायकस्य नवमनुरागं सम्भोगञ्चाह--क्लृप्तेति ॥ सः दूतिकृतमार्गदर्शनः लतागृहान् एत्य परिजनाङ्गनारतम् अन्वभूत् । दूतिकृतेत्यत्र छन्दोभङ्गभयादेव दीर्घाभावः, "अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद्गिराम्" इति वचनात् । दूतीभिः कृतं मार्गदर्शनं यस्य । परिजनाङ्गनाः परिजनस्त्रियः तासां रतम् । नायकेन समरादिलब्धा महाकुलप्रसूता राजकुमार्यो हि देवीभिः परिजनपदे स्थाप्यन्ते । यथा वासवदत्तया सागरिका । ता एवात्र परिजनाङ्गनाशब्देनोच्यन्ते । क्लृप्तं कल्पितं पुष्पशयनं येषु । अवरोधेभ्यो भयेन वेपथूत्तरं वेपथुसहितम् । अत्र भयशबळत्वेन सम्भोगोत्कर्षो गम्यते । यथा—"मुहविज्झविअवइव्वणिरुन्धसास्ससस्सकिंउव्ळावस्सवहसअरखिओट्ठचोरिअ रमिअस्सुहावे" इत्यत्र ॥

**नाम वल्लभजनस्य ते मया**
**प्राप्य भाग्यमपि तस्य काङ्क्ष्यते ।**
**लोलुपं बत मनो ममेति तं**
**गोत्रविस्खलितमूचुरङ्गनाः** ॥ २४ ॥

**प्रका**—अथ जाग्रतो नायकस्य गोत्रस्खलने नायिकानामुपालम्भमाह--नामेति ॥ भाग्यम् एवम्भूतत्वत्प्रसादकारणभूतम् । तन्नामप्राप्त्या लब्धास्वादत्वात्तद्भाग्यमप्याकाङ्क्ष्यते । मे मनः यतो लोलुपम् अधीरम् । बतेति दुर्लभाभिलाषित्वात् खेदः । गोत्रं नाम तस्मिन् विस्खलितं विपर्यासेन प्रवृत्तम् । मया ममेत्येकवचनं प्रत्येकमभिधानात् । धीराश्चेमाः, "धीरा सोत्प्रासवक्रोक्त्या" इति वचनात् ॥

**पदा**—अथ जाग्रत एव नायकस्य गोत्रस्खलने देवीनामुपालम्भमाह--नामेति ॥ मया ते वल्लभजनस्य नाम प्राप्य तस्य भाग्यमपि काङ्क्ष्यते । अत्र अङ्गनानां बहुत्वेपि मयेति ममेति चैकवचनं प्रत्येकविवक्षया । रहसि तासां प्रत्येकं हि प्राप्तिः । वल्लभजनस्य इष्टजनस्य । यतस्त्वया सततमेवं चिन्त्यते ।

1. वत्सर ।

तस्मान्महाभाग्यैव स। अतस्तस्य नामलाभोपि दुर्लभः। तत्तु नाम भाग्य-वशादिदानीमनायासेन प्राप्तम्। अतो लब्धास्वादतया मया तस्य भाग्यमपि प्राप्तुमिष्यते। लब्धास्वादा हि जना दुर्लभमपि वस्तु वाञ्छन्तीति भावः। मम मनः लोलुपम् अधीरम्। बतेति खेदे। दुर्लभार्थाभिनिवेशात्तदलाभाच्च खेदः। अङ्गनाः गोत्रविस्खलितं तम् इति ऊचुः। गोत्रं नाम तस्मिन् विस्खलितं विप-र्यासेन प्रवृत्तम्। इति पूर्वोक्तप्रकारेण। धीराश्चेमाः, धीरा सोत्प्रासवक्रोक्त्या इति वचनात्॥

चूर्णबभ्रु लुलितस्रगाकुलं
छिन्नमेखलमलक्तकाङ्कितम्।
उत्थितस्य शयनं विलासिन-
स्तस्य विभ्रमरतान्यपावृणोत् ॥ २५ ॥

प्रका—अथ कुपितनायिकाप्रसादनानन्तरसम्भोगमाह—चूर्णेति॥ चूर्णेन अवाङ्मुखतया अळकच्युतेन बभ्रु कपिशम्। अनेन विशेषणेन व्यानताख्यं सुरतं सूचितम्। तस्य च रतिरहस्ये लक्षणम्—"व्यानतं रतमिदं यदि प्रिया स्यादधोमुखचतुष्पदाकृतिः। तत्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंहित-स्वरः॥" इति। गळितस्रगाकुलं मस्तकगोपनगळितकेशस्रग्व्याकीर्णम्। अनेन गजरतमुक्तम्। तथा तत्रैव—"गूहितस्तनभुजास्यमस्तकामुन्नतस्फिच-मधोमुखीं स्त्रियम्। क्रामति स्वकर[2]घृष्टमेहने वल्लभे करि[3]वदेभमुच्यते" इति। छिन्नमेखलम्। अनेन वि[4]ष्णुविक्रमाख्यं रतं विवक्षितम्। "योषिदेकचरणे समुद्धृते जायते च हरिविक्रमाह्वयम्" इति। अलक्तकेन पादादिगतेनाङ्कितम्। अनेन धैनुकं रतम्। "न्यस्तहस्तयुगळं निजे पदे योषिदेति कटिरूढवल्लभा। अग्रतो यदि शनैरधोमुखी धैनुकं वृषवदुन्नने प्रिये॥" इति। उत्थितस्य तिष्ठतः। स्थितरतानि चत्वार्येतानि। संविष्टोपविष्टस्थितत्वेन हि रतानां त्रिभेदत्वम्। विभ्रमरतानि चित्ररतानीत्यर्थः। अपावृणोत् प्रकाशितवत्॥

पदा—अथ कुपितनायिकाप्रसादनानन्तरसम्भवं सम्भोगमाह—चूर्णेति॥ विलासिनः तस्य शयनम् उत्थितस्य विभ्रमरतानि अपावृणोत्। विलासास्सन्त्य-स्येति विलासी। अनेन तादृशानां सुरतानामधिकारित्वमुक्तम्। शयनं

1. संस्थितस्थितिः 2 कृ। 3 पदमस्तु[illegible]। 4 त्रिविक्रमाख्यम्।

शयनीयम्। उत्थितस्य तिष्ठतः। शयितरतमुपविष्टरतमुत्थितरतञ्चेति त्रिविधानि रतानि वात्स्यायने प्रसिद्धानि। तत्रोत्थितरतानि चत्वार्यत्र श्लोके प्रतिपादितानि। विभ्रमरतानि चित्रसुरतानि। अपावृणोत् प्रकाशयामास। तस्य चित्रसुरतानि शयनीयमेव प्रकाशयामासेत्यर्थः। तत्रोत्थितसुरतानि शयनीयविशेषणैराह—चूर्णेत्यादिना। चूर्णेन अळकचूर्णेन बभ्रु कपिशम्। अधोमुखत्वादळकगळितैर्गन्धसंस्कारचूर्णैः कपिशम्। अनेन व्यानताख्यं रतं सूचितम्। तस्य लक्षणमेवं व्याख्यातं रतिरहस्ये—"व्यानतं रतमिदं यदि प्रिया स्यादधोमुखचतुष्पदाकृतिः। तत्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंहितस्वरः॥" इति। गळितस्रगाकुलं मस्तकगोपनेन केशाद्विगळिताभिः स्रग्भिराकुलं व्याकुलम्। अनेन गजरतमुक्तम्। तस्यापि लक्षणं तत्रैवोक्तम्—"गूहितस्तनभुजास्यमस्तकामुन्नतस्फिचमधोमुखीं स्त्रियम्। क्रामति स्वकरवृष्टमेहने वल्लभे करिवदैभमुच्यते॥" इति। छिन्ना मेखला यत्र। अनेन विष्णुविक्रमाख्यं रतं विवक्षितम्। यथा तत्रैव—"योषिदेकचरणे समुद्धृते जायते च हरिविक्रमाह्वयम्" इति। एकं चरणमुत्क्षिप्य शयितानां हि नारीणां सुरतकलहे मेखला छिन्ना भवति। अलक्तकेन करचरणादिगतेन यावकरसेनाङ्कितम्। अनेन धैनुकं रतं प्रकाशितम्। यथा—"न्यस्तहस्तयुगळं निजे पदे योषिदेति कटिरूढवल्लभा। अग्रतो यदि शनैरधोमुखी धैनुकं वृषवदुन्नते प्रिये॥" इति। एतच्च वात्स्यायनोक्तानामनुक्तानां करणान्तराणामप्युपलक्षणम्॥

स स्वयं चरणरागमादधे
योषितां न तु तथा समाहितः।
लोभ्यमाननयनः श्लथांशुकै-
र्मेखलागुणपदैर्नितम्बिभिः ॥ २६ ॥

प्रका—अथान्यानुवृत्तिमाह—स इति॥ स्वयं न तु सख्यादिभिः। आदरे सत्यपि विशेषमाह—नत्विति। तथेति। आदरानुरूपमित्यर्थः। समाहितोऽवहितः। अत्र हेतुर्लोभ्यमाननयनः ह्रियमाणनेत्रः। अत्र हेतुः—श्लथांशुकैरित्यादि। मेखलागुणपदैः कटिप्रदेशैः। नितम्बिभिः नितम्बाढ्यैः। "पश्चान्नितम्बः स्त्रीकट्याः" इति सिंहः॥

१ च।

पदा—अथ तस्यान्यास्वनुवृत्तिमाह—स इति॥ सः स्वयं योषितां चरणरागम् आदधे। स्वयं न तु सख्यादिभिः। अनेनादरातिशय उक्तः। आदरे सत्यपि विशेषमाह—न त्वित्यादिना। तथा तु न समाहितः। तथा यथादरस्तथेत्यर्थः। तुशब्दो विशेषं द्योतयति। समाहितः अवहितः। अवधानाभावे हेतुमाह—लोभ्यमाननयन इत्यादिना। मेखलागुणपदैः लोभ्यमाननयनः। मेखलागुणः काञ्चीदाम तस्य पदैः कटिप्रदेशैः। लोभ्यमाने ह्रियमाणे नयने यस्य। तत्र हेतुर्नितम्बिभिरिति। "पश्चान्नितम्बः स्त्रीकट्याः" इति सिंहः। तत्रापि तादात्विकं विशेषमाह—श्लथांशुकैरिति। सात्त्विकविकारेण विश्लथवसनैः। अत्रापि काव्यलिङ्गमाला॥

चुम्बने विपरिवर्तिताधरं
हस्तरोधि रशनाविघट्टने।
विघ्नितेच्छमपि तस्य सर्वतो
मन्मथेन्धनमभूद्वधूरतम् ॥ २७ ॥

प्रका—प्रौढासु वृत्तिमुक्त्वा नववधूसम्भोगमाह—चुम्बन इति॥ चुम्बन इत्यादि आलिङ्गने स्तनगूहनस्योपलक्षणम्। यदुक्तम्—"घटयति तथा कण्ठाश्लेषे रसान्न पयोधरौ" इति। रशनाविघट्टनेन नीवीविस्रंसननाभ्यूरुजघनस्पर्शावुपलक्ष्येते। अत एवाह—सर्वतो विघ्नितेच्छमिति। अत एव च मन्मथेन्धनम्। मन्मथो हि महानदीप्रवाह इव निरुद्धप्रसरो वर्धते॥

पदा—इत्थं प्रौढासु वृत्तिमुक्त्वा नवोढासु वृत्तिमाह—चुम्बन इति॥ वधूरतं तस्य सर्वतः विघ्नितेच्छम् अपि मन्मथेन्धनम् अभूत्। वधूनां नवोढानां रतम्। विघ्निता सञ्जातविघ्ना इच्छा यत्र। मन्मथेन्धनं मन्मथोद्दीपनम्। निरोधे हि मदनस्सुतरां वर्धते। सर्वत्र विघ्नितेच्छत्वमेव विशेषणाभ्यामाह—चुम्बन इति। चुम्बने विपरिवर्तिताधरं विरुद्धमननुकूलं यथा भवति तथा परिवर्तितोऽधरो यत्र। इदन्तु विशेषणमालिङ्गने स्तनगूहनस्याप्युपलक्षणम्। यथा—"घटयति तथा कण्ठाश्लेषे रसान्न पयोधरौ॥" इति। रशनाविघट्टने हस्तरोधि। रशनाविघट्टने नीवीविस्रंसने। इदन्तु नाभ्यूरुजघनस्पर्शानामप्युपलक्षणम्। अत एवोक्तम्—सर्वतो विघ्नितेच्छमिति। हस्तौ रोद्धुं शीलमस्येति तथा॥

दर्पणेषु परिभोगदर्शिनी-
नर्मपूर्वमनुपृष्ठसंश्रयः[1] ।
छायया स्मितमनोज्ञया वधू-
र्ह्रीनिमीलितमुखीश्चकार सः ॥ २८ ॥

प्रका -- तद्विषयमेव प्रातर्वृत्तमाह -- दर्पण इति ॥ परिभोगदर्शिनीः नखक्षतादिदर्शिनीः । नर्मपूर्वकं परिहासहेतुकम् । परिहासार्थमित्यर्थः । अनुपृष्ठसंश्रयः अनुगतपृष्ठसंश्रयः । छायया स्वप्रतिबिम्बेन ॥

पदा -- अथ तद्विषयमेव प्रभातवृत्तमाह -- दर्पणेष्विति ॥ सः दर्पणेषु परिभोगदर्शिनीः वधूः नर्मपूर्वम् अनुपृष्ठसंश्रयः स्मितमनोज्ञया छायया ह्रीनिमीलितमुखीः चकार । कण्ठोष्ठादिषु वर्तमाननखदन्तव्रणादिदर्शिनीः । अत्र ताच्छील्यवाचिना णिनिप्रत्ययेन कौतुकातिशयादन्यदर्शननिरपेक्षत्वं ध्वनितम् । नर्म परिहासः पूर्वं कारणं यस्य । परिहासार्थमित्यर्थः । अत एवोक्तं स्मितमनोज्ञयेति । अनुगतः प्राप्तः पृष्ठसंश्रयः पृष्ठभागाश्रयो येन । छायया प्रतिबिम्बेन ॥

कण्ठसक्तमृदुबाहुबन्धनं
न्यस्तपादतलमग्रपादयोः ।
प्रार्थयन्त शयनोत्थितं प्रिया-
स्तं निशात्ययवि[2]मोक्षचुम्बनम् ॥ २९ ॥

प्रका -- कण्ठेति ॥ मृदुत्वं योषिद्बाह्वोः प्रशंसापरम् । शयनोत्थितं शयनादुत्थाय स्थितम् । निशात्यये यो विमोक्षो गृहान्निष्क्रमणं तत्र यदूर्ध्वाङ्गेषु नयनादिषु कार्यं चुम्बनं तदित्यर्थः । "रतावसाने यदि चुम्बनादि प्रयुज्य यायान्मदनोऽस्य दासः" इति गोनर्दीयः । तत्र रतावसानशब्दस्य निशात्ययशब्देन भिन्नार्थत्वं न शङ्कनीयम्, यायादिति वचनात् ॥

पदा -- अथान्यासां प्राभातिकं वृत्तमाह -- कण्ठेति । प्रियाः शयनोत्थितं तं निशात्ययविमोक्षचुम्बनं प्रार्थयन्त । शयनादुत्थितम् उत्थायाधोभागे तिष्ठन्त-

1 संस्थितः । 2 विसर्ग ।

मित्यर्थः। निशाया अत्यये अवसाने यो विमोक्षः मोचनं वासगृहान्निष्क्रमणं तत्र यच्चुम्बनं नयनादिकेषूर्ध्वाङ्गेषु चुम्बनं तत् प्रार्थयन्त। अभ्यर्थयामासुः। गमनारम्भचुम्बने गोनर्दीयः—रतावसाने यदि चुम्बनादि प्रयुज्य यायान्मदनोऽस्य दासः" इति। अभ्यर्थनप्रकारमाह—कण्ठेत्यादिना विशेषणद्वयेन। क्रियाविशेषणञ्चेदम्। कण्ठे सक्तं मृदुभ्यां बाहुभ्यां बन्धनं यथा भवति तथेत्यर्थः। मृदुशब्दोऽत्र बाहुप्रशंसापरः। अग्रपादयोः न्यस्तपादतलम्। अग्रपादव्युत्पत्तिः पूर्वं दर्शिता। प्रियस्य पादाग्रे न्यस्तौ पादतलौ यथा भवति तथेत्यर्थः। अनेन अन्यथा मा याया इति गमनविरोधोऽपि ध्वन्यते। प्रार्थनमपि तादृशावस्थानमात्रेणैव, न तु वचसेति भावः॥

प्रेक्ष्य दर्पणतलस्थमात्मनो
राजवेषमतिशक्रशोभिनम्।
पिप्रिये न स तथा यथा युवा
व्यक्तलक्ष्म परिभोगमण्डनम् ॥ ३० ॥

**प्रका**—आत्मविषयमप्याह—प्रेक्ष्येति॥ पिप्रिये प्रीतोऽभवत्। अत्र हेतुर्युवेति॥

**पदा**—अथात्मविषयमपिप्रभातवृत्तमाह—प्रेक्ष्येति॥ सः दर्पणतलस्थम् आत्मनः राजवेषं प्रेक्ष्य तथा न पिप्रिये परिभोगमण्डनं प्रेक्ष्य यथा, पिप्रिये इत्यनुषज्यते। आत्मनो राजोचितं वेषमलङ्कारं प्रेक्ष्य तथा न पिप्रिये प्रीतोऽभवत्। परिभोगशब्देनात्रापि तच्चिह्नानि लक्ष्यन्ते। तस्य मण्डनत्वरूपणं कौतुकातिशयकृतम्। राजवेषस्य शोभाभावात् किन्तत्र प्रीत्यभावः, नेत्याह—अतिशक्रशोभिनमिति। शक्रमतिक्रम्य शोभितुं शीलमस्येति तथा। परिभोगमण्डनेषु प्रीत्यतिशये हेतुमाह—युवेति। "यस्य यस्मिन्नभिलाषः, स तस्मिन्नेव रमते" इति लोकस्वभावोऽनेन दर्शितः। युवा हि भोगमात्रं नित्यमाकाङ्क्षत इति भावः। परिभोगमण्डनेषु प्रीत्यतिशये हेत्वन्तरञ्चाह—व्यक्तलक्ष्मेति। व्यक्तानि लक्ष्माणि नखक्षतादिचिह्नानि यस्मिन्। कालान्तरप्राप्त्यभावात्तेषामभिव्यक्तत्वमेव तत्र हेतुरिति भावः। कालान्तरे हि न तानि द्रष्टुं शक्यन्त इति च लोभाधिक्यम्॥

मित्रकृत्यमपदिश्य पार्श्वतः
प्रस्थितं तमनवस्थितं प्रियाः।
विद्म [1]ते शठ पलायनच्छला-
न्यञ्जसेति रुरुधुः कचग्रहैः ॥ ३१ ॥

**प्रका**—अन्यासु शठवृत्तिमस्याह—मित्रकृत्यमिति ॥ मित्रकृत्यापदेशो विरक्तलक्षणम्। "प्रतिज्ञां वा विस्मरति। अन्यथा वा योजयति। स्वपक्ष्यैः सह संज्ञया सह भाषते। मित्रकृत्यं वापदिश्यान्यत्र शेते" इति वात्स्यायनः। स्ववारेपि योषिद्भिर्मित्रकार्यवादी प्रियो नोपरोध्य इत्यस्मिन्नर्थे गोनर्दीयः—"ऋतुस्नाताभिगमने मित्रकार्ये तथापदि। त्रिष्वेतेषु प्रियतमः क्षन्तव्यो वारगम्यया" इति। पार्श्वतः स्वसकाशात्। प्रस्थितम् अन्यासकाशं गन्तुमुपक्रान्तम्। अनवस्थितं तरळम्। पलायनार्थानि छलानि पलायनच्छलानि। अञ्जसा यथातत्त्वम् ॥

**पदा**—अथान्यासु शठवृत्तिमप्याह—मित्रेति ॥ प्रियाः मित्रकृत्यम् अपदिश्य पार्श्वतः प्रस्थितम् अनवस्थितं तं शठ वयं ते पलायनच्छलानि अञ्जसा विद्म इति कचग्रहैः रुरुधुः। मित्रकृत्यमपदिश्य व्याजीकृत्य। बन्धुकार्यव्यपदेशेनेत्यर्थः। "स्ववारेपि योषिद्भिर्मित्रकार्यार्थी प्रियो नोपरोध्यः" इति वात्स्यायनः। तस्मिन्नेवार्थे गोनर्दीयवचनञ्च—"ऋतुस्नाताभिगमने मित्रकार्ये तथापदि। त्रिष्वेतेषु प्रियतमः क्षन्तव्यो वारगम्यया" इति। पार्श्वतः स्वसकाशात्। प्रस्थितम्, आदिकर्मणि क्तः। गन्तुमुपक्रान्तमित्यर्थः। अनवस्थितं तरळम्। पलायनार्थानि छलानि पलायनच्छलानि। अञ्जसा परमार्थतः ॥

तस्य निर्दयरतिश्रमालसाः कण्ठसूत्रमपदिश्य योषितः।
अध्यशेरत बृहद्भुजान्तरं पीवरस्तनविलुप्तचन्दनम् ॥ ३२ ॥

**प्रका**—एवं विदितशठ्याभिरवगृहीतस्य यथासात्म्यं निर्व्याजरतेनाराधयितुं ताः प्रवृत्तस्य तस्य तासाञ्च वृत्तमाह—तस्येति ॥ कण्ठसूत्रमालिङ्गनविशेषः। "यत् कुर्वते वक्षसि वल्लभस्य स्तनाभिघातान्निबिडोपगूढम्। परिश्रमार्थं शनकैर्विदग्धास्तत् कण्ठसूत्रं प्रवदन्ति सन्तः॥" इत्याहुराचार्याः। इदन्तु स्तनालिङ्गनमित्युक्तं रतिरहस्ये। अपदिश्य निमित्तीकृत्य। व्याजीकृत्य वा।

---

[1] हे।

"अपदेशस्तु लक्ष्ये स्यान्निमित्तव्याजयोरपि" इति केशवः। पीवरस्तनविलुप्तचन्दनमिति क्रियाविशेषणम् ॥

पदा— इत्थं विदितशाठ्याभिर्देवीभिर्गृहीतस्य तास्सम्यगाराधयितुं प्रवृत्तस्य नायकस्य तासाञ्च प्रवृत्तिमाह–तस्येति ॥ योषितः निर्दयरतिश्रमालसाः कण्ठसूत्रम् अपदिश्य तस्य बृहद्भुजान्तरं पीवरस्तनविलुप्तचन्दनम् अध्यशेरत। निर्दयेन रतिश्रमेण सुरतपरिश्रमेण अलसाः खिन्नाः। सुरतेषु पुरुषाणां स्त्रीषु निर्दयत्वमाह माघः—"अन्यकालपरिहार्यमजस्रं तद्द्वयेन विदधे द्वयमेव। धृष्टता रहसि भर्तृषु ताभिर्निर्दयत्वमपरैरबलासु" इति। कण्ठसूत्रमालिङ्गनविशेषः। यथाहुः—"यत् कुर्वते वक्षसि वल्लभस्य स्तनाभिघातान्निबिडोपगूढम्। परिश्रमार्थं शनकैर्विदग्धास्तत् कण्ठसूत्रं प्रवदन्ति सन्तः॥" इति। अपदिश्य निमित्तीकृत्य, व्याजीकृत्य वा। "अपदेशस्तु लक्ष्ये स्यान्निमित्तव्याजयोरपि" इति केशवः। स्तनालिङ्गनविशेषोऽयमिति वात्स्यायनः। बृहत् विशालम्। अनेन शयनसौख्यमुक्तम्। "अधिशीङ्स्थासां कर्म" इति भुजान्तरस्य कर्मसंज्ञा। पीवराभ्यां स्तनाभ्यां हेतुभ्यां विलुप्तं नष्टं चन्दनं यथा भवति तथा ॥

सङ्गमाय निशि गूढचारिणं चारदूतिकथितं पुरोगताः।
वञ्चयिष्यसि कुतस्तमोवृतः कामुकेति चकृषुस्तमङ्गनाः ॥ ३२ ॥

प्रका—अन्यमपि नेतुश्छन्नप्रतीचारभङ्गमाह— सङ्गमायेति ॥ चारदूतीभिः। कथितम्, अनेन पथायं गूढमपसरतीति। पुरोगताः प्रागेव तन्मार्गमुपगताः। तमोवृतः तमसा निचुलितः। कामुकेति रोषोपहासगर्भमभिधानम्। चकृषुः स्वगृहमनयन् ॥

पदा—अथान्यासु नायकस्य छन्नवृत्तिभङ्गमाह—सङ्गमायेति ॥ अङ्गनाः निशि सङ्गमाय गूढचारिणं चारदूतिकथितं तं पुरोगताः कामुक त्वं तमोवृतः कुतः वञ्चयिष्यसि इति चकृषुः। सङ्गमाय अभिनववनितान्तरसम्भोगाय। चारज्ञाननियुक्ताभिर्दूतीभिः कथितम्। राज्ञो गूढसञ्चारज्ञानार्थं नियुक्ताभिर्निवेदितमित्यर्थः। पुरोगताः प्रागेव तन्मार्गमुपगताः। कामुकेति रोषपरिहासगर्भमभिधानम्। तमसा अन्धकारेण वृतः निचुलितः। अन्धकारमेव प्रच्छदपटं कृत्वेत्यर्थः। अद्यायमनेन पथा गच्छतीति दूतीवचनमाकर्ण्य प्रागेव तन्मार्गं प्राप्य तदागमनं प्रतिपालयन्त्यो देव्यः "त्वमस्मानतिसन्धाय क यासि" इति वदन्त्यस्तमाकृष्य निजगृहं प्रापयामासुरित्यर्थः।

योषितामुडुपतेरिवार्चिषां
स्पर्शनिर्वृतिमसाववाप्नुवन् ।
आरुरोह कुमुदाकरोपमां
रात्रिजागरपरो दिवाशयः ॥ ३४ ॥

**प्रका** – अत्रापि पूर्ववद्वृत्तमाह—योषितामिति ॥ अर्चिषां किरणानाम् । स्पर्शनिर्वृतिमालिङ्गनादौ ॥

**पदा**—ईर्ष्याविप्रलम्भानन्तरसम्भवं सम्भोगमाह – योषितामिति ॥ असौ कुमुदाकरोपमाम् आरुरोह प्राप्तवान् । कथमित्यत्राह— योषितामित्यादिना । उडुपतेः अर्चिषामिव स्पर्शनिर्वृतिम् अवाप्नुवन् । अर्चिषां किरणानाम् । प्रकृते स्पर्शनिर्वृतिरालिङ्गनादौ । रात्रौ जागरपरः परित्यक्तनिद्रः । दिवा अहनि शेत इति दिवाशयः । कुमुदाकरपक्षे कुड्मलीभावोऽर्थः ॥

वेणुना दशनपीडिताधरा
वीणया नखपदाङ्कितोरवः ।
शिल्पकार्य उभयेन वेजिता-
स्तं विजिह्मनयना व्यलोकयन् ॥ ३५ ॥

**प्रका**—वेणुनेति ॥ शिल्पं वेणुवादनादि कुर्वत्यः शिल्पकार्यः । कर्मण्यण् । वेजिताः भयं प्रापिताः । विजिह्मनयनेक्षितेन तु स्वयं नखदशनक्षतं विधायासाविदानीमाचार्यसन्निधौ वेणुं वीणाञ्च वादयन् कदर्थयत्यस्मानिति द्योत्यते ॥

**पदा**—वेणुनेति ॥ शिल्पकार्यः विजिह्मनयनाः तं व्यलोकयन् । शिल्पं वेणुवादनादिकं कुर्वन्तीति शिल्पकार्यः । कर्मण्यणि ङीप् । विजिह्मं कुटिलं नयनं यासाम् । तत्कालविशेषणञ्चेदम् । विजिह्मनयनावलोकने हेतुं विशेषणाभ्यामाह—वेणुनेत्यादिना । दशनपीडिताधराः वेणुना नखपदाङ्कितोरवः वीणया उभयेन वेजिताः । दन्तपीडिताधरास्सत्यो वेणुना नखपदाङ्कितोरुप्रदेशास्सत्यो वीणया च करणेन वेजिताः भयं प्रापिताः । तेनेत्यर्थात्सिध्यति । शठोऽयं स्वयमेव दन्तक्षतादिकमुत्पाद्य सम्प्रति गुरुसन्निधौ वेणुं वीणाञ्च वादयन्नस्मान् पीडयतीति तथाविधवीक्षणस्याभिप्रायः ॥

---

I. भ ।

अङ्गसत्त्ववचनाश्रयं मिथः स्त्रीषु नृत्तमुपधाय दर्शयन्।
स प्रयोगनिपुणैः प्रयोक्तृभिस्सञ्जघर्ष सह मित्रसन्निधौ ॥ ३६ ॥

प्रका—एवं कामप्रवणस्यास्य तदुपयोगिकलावर्गसार्वभौमे सङ्गीतकेऽभिनिवेशमाह––अङ्गेति ॥ अङ्गाश्रयं सत्त्वाश्रयं वचनाश्रयमिति त्रिविधं नृत्तम्। अत्र सामान्याभिनयस्य विवक्षितत्वान्नाट्यैकाश्रयस्याहार्याभिनयस्यानुपादानम्। यदाह भरतः––"सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः" इति। सत्त्वलक्षणेपि "अव्यक्तरूपं विज्ञेयं सत्त्वं भावरसाश्रयम्" इति। ननु महेन्द्रस्य प्रमोदाय नाट्यं समुपदिष्टवान्। तद्वाचिकाङ्गिकाहार्यसात्त्विकत्वाच्चतुर्विधमिति वचनान्नाट्यस्यैव सत्त्वाद्याश्रयत्वमस्तीति गम्यते। नृत्तस्य तु कथं त्रैविध्यमिति। उच्यते––नृतिधातोर्गात्रविक्षेपार्थत्वान्नृत्तस्याङ्गाश्रयत्वमस्त्येव। सत्त्वाश्रयत्वन्तु पुनरालोकितादिदर्शनानां सत्त्वमूलत्वात्। तानि तु नृत्तेपि सन्ति। यथाहुः–– "आलोकितं समं साचि प्रलोकितविलोकिते। उल्लोकितानुवृत्ते च तथा चैवावलोकितम् ॥ इत्यष्टै दर्शने भेदा नृत्तनाट्यसमाश्रयाः" इति ॥ वचनाश्रयत्वञ्च गेयोपहितत्वादिति। मिथ इति प्रयोक्तृव्यामोहनाय। स्त्रीष्विति लास्यात्मतां द्योतयति। उपधाय समर्प्य। प्रयोक्तृभिः नृत्ताचार्यैः। सञ्जघर्ष संघर्षं कृतवान्। स्वयमुत्पादितं कमप्यपूर्वं नृत्तमार्गं नर्तकीषु मिथ उपधाय मित्रगोष्ठ्यां दर्शयन् नृत्ताचार्यैस्सह स्पर्धाञ्चकारेत्यर्थः ॥

पदा—एवं कामानुभवप्रवृत्तस्य नायकस्य तदुपयोगिषु कलावर्गेषु प्रधानभूते सङ्गीतके विशेषेणाभिनिवेशमाह––अङ्गेति ॥ सः अङ्गसत्त्ववचनाश्रयं नृत्तं मिथः स्त्रीषु उपधाय दर्शयन् प्रयोगनिपुणैः प्रयोक्तृभिः सह सञ्जघर्ष। अङ्गाश्रयं सत्त्वाश्रयं वचनाश्रयञ्चेति त्रिविधं नृत्तम्। अत्र भरतः—"सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः" इति। तथा सत्त्वलक्षणेपि, "अव्यक्तरूपं विज्ञेयं सत्त्वं भावरसाश्रयम्" इति। वाचिकाङ्गिकयोस्तु प्रसिद्धत्वाल्लक्षणं न प्रतिपाद्यते। मिथः रहसि। नृत्ताचार्यव्यामोहार्थमिदमुक्तम्। स्त्रीष्वित्यनेन नृत्तस्य लास्यात्मकता द्योत्यते। उपधाय समर्प्य। प्रयोक्तृभिः नृत्ताचार्यैः। सञ्जघर्ष संघर्षं कृतवान्। संघर्षः स्पर्धा। अयमभिप्रायः––स्वयं कमप्यपूर्वं नृत्तमार्गमुत्पाद्य रहसि नर्तकीः पाठयित्वा मित्रगोष्ठ्यां प्रदर्शयन् नृत्ताचार्याणाम्मनसि स्पर्धामुत्पादयन्नेतेषां प्रयोगनिपुणत्वाभिमानं निराचक्र इति ॥

1. त्य।

अंसलम्बिकुटजार्जुनस्रज-
स्तस्य नीपरजसाङ्गरागिणः ।
प्रावृषि प्रमदबर्हिणेष्वभूत्
कृत्रिमाद्रिषु विहारविभ्रमः ॥ ३७ ॥

**प्रका**—अथ यथाभिलषितविषयनिरन्तरोपभोगेनास्य मदनः कुण्ठधारो माभूदिति तन्नवीकरणाय यथर्तुसम्भोगं दशभिः श्लोकैर्दर्शयति —अंसेति ॥ कुटजादीनामृतुलिङ्गत्वात्तत्कालाकल्पसाधनत्वम् । कृत्रिमाद्रिषु क्रीडार्थं निर्मितेषु शैलेषु । विहारविभ्रमः क्रीडाविलासः ॥

**पदा**—अथ सम्भोगानामुद्दीपनप्रधानत्वा"दुद्दीपनानि माल्यर्तुचन्दनेन्दूदयादय" इत्यादावृतूनामप्युद्दीपनत्वप्रसिद्धेस्तेषाञ्च पूर्वमनुक्तत्वात्तस्य मदनोद्दीपनमृतुगुणानुगुणं विहारमाह—अंसेति ॥ तस्य प्रावृषि कृत्रिमाद्रिषु विहारविभ्रमः अभूत् । कृत्रिमाद्रिषु क्रीडार्थं निर्मितेषु शैलेषु । विहारविभ्रमः क्रीडाविलासः । अंसलम्बनशीलाः कुटजार्जुनस्रजो यस्य । नीपरजसा नीपपुष्परजसा अङ्गरागिणः अङ्गरागवतः । कुटजादीनामृतुलिङ्गत्वात्तत्कालालङ्कारसाधनत्वमनेन द्योत्यते । प्रमदाः प्रभूतमदाः बर्हिणाः मयूरा येषु । "मयूरो बर्हिणो बर्ही" इत्यमरः ॥

विग्रहाच्च शयने पराङ्मुखी-
र्नानुनेतुमबलास्स तत्वरे ।
आचकाङ्क्ष घनशब्दविक्लवा-
स्ता विवृत्य विशतीर्भुजान्तरम् ॥ ३८ ॥

**प्रका**—विग्रहादिति ॥ अत्वरायां हेतुमाह—आचकाङ्क्षेति । विवृत्य परिवृत्य ॥

**पदा**—विग्रहादिति ॥ सः विग्रहात् शयने पराङ्मुखीः अबलाः अनुनेतुं न तत्वरे । विग्रहात् कलहात् । त्वराभावे हेतुमाह—आचकाङ्क्षेति । ताः घनशब्दविक्लवाः निवृत्य भुजान्तरं विशतीः आचकाङ्क्ष । घनशब्देन मेघध्वनिना विक्लवा भीताः । विवृत्य परिवृत्य । स्वयंगृहाश्लेषानुभवाकाङ्क्षया तदानीमेव नानुनीतवानित्यर्थः । घनशब्दो हि तदानीं सुलभ इति भावः ॥

कार्तिकीषु सवितानहर्म्यभा-
ग्यामिनीषु ललिताङ्गनासखः ।
अन्वभुङ्क्त सुरतक्लमापहां[1]
मेघमुक्तविशदां स चन्द्रिकाम् ॥ ३९ ॥

प्रका—प्रावृषि भोगमुक्त्वा शरद्याह—कार्तिकीष्विति ॥ कृत्तिका-युक्तपौर्णमासीषु । शरन्निशानामुपलक्षणञ्चैतत् । सवितानत्वं हिमनिवारणार्थम् ॥

पदा—अथ शरदि सम्भोगमाह—कार्तिकीष्विति ॥ सः कार्तिकीषु यामिनीषु ललिताङ्गनासखः सवितानहर्म्यभाक् मेघमुक्तविशदां चन्द्रिकामन्वभुङ्क्त । कार्तिकासु कृत्तिकायुक्तपौर्णमासीषु रात्रिषु । शरन्निशानामुपलक्षणञ्चैतत् । ललितानां सुन्दरीणामङ्गनानां सखा । हर्म्याणां सवितानत्वं हिमनिवारणार्थम् । सुरतक्लममपहन्तीति तथा ॥

सैकतञ्च सरयूं विवृण्वतीं
श्रोणिबिम्बमिव हंसमेखलम् ।
स प्रियाविलसितानुकारिणीं
सौधजालविवरैर्व्यलोकयत् ॥ ४० ॥

प्रका—सैकतमिति ॥ श्रोणिबिम्बं श्रोणिमण्डलम् । जालो गवाक्षः ॥

पदा—सैकतमिति ॥ सः सौधजालविवरैः सरयूं व्यलोकयच्च । सौधेषु ये जाला गवाक्षास्तेषां विवरैः द्वारैः । प्रियाणां विलसितं विलासमनुकर्तुं शीलमस्या इति तथा । अनुकरणप्रकारमाह—सैकतमित्यादिना । श्रोणिबिम्बमिव सैकतं विवृण्वतीं शनैश्शनैः प्रकाशयन्तीम् । साधारणं धर्ममाह—हंसमेखलमिति । हंसा एव मेखला यत्र ॥

मर्मरैरगरुधूपगन्धिभिर्व्यक्तहेमरशनैस्तमेकतः ।
जह्रुरग्रथनमोक्षलोलुपं हैमनैर्निवसनैस्सुमध्यमाः[2] ॥ ४१ ॥

प्रका—हेमन्त आह—मर्मरैरिति ॥ मर्मरैर्मर्मरशब्दवद्भिः । हिमकाले वस्त्राणामुपश्लेषरसो हि भूयान् । अतो मर्मरत्वम् । व्यक्तहेमरशनत्वं वसनानां

1 श्र । 2 स्वा ।

शैथिल्यात्। एकतः नितम्बैकदेश इत्यर्थः। आग्रथनं नीविः। "नीविराग्रथनम्" इति नैघण्डुकाः। हैमनैः हेमन्तकालभवैः। हेमन्तशब्दात् सर्वत्राण् च तलोपश्च" इति। स्वयं विगलनस्वभावैरेवम्भूतैर्वसनैस्तास्तस्य नीवीविस्रंसनलोलुपं मनो जहुरित्यर्थः॥

**पदा**—हेमन्तमाह—मर्मरैरिति॥ सुमध्यमाः हैमनैः निवसनैः आग्रथनमोक्षलोलुपं तं जहुः। हैमनैः हेमन्तकालभवैः। "हेमन्तशब्दात्सर्वत्राण् च तलोपश्च" इत्यण्प्रत्ययस्तलोपश्च। आग्रथनं नीविः। "नीविराग्रथनम्" इति निघण्डुः। तं जहुः तस्य मनो जहुरित्यर्थः। वसनानां हेमन्ते विशेषमाह—मर्मरैरित्यादिना। मर्मरध्वनियुक्तैः। हेमन्ते वसनानामुपश्लेषरसस्य भूयस्त्वान्मर्मरशब्दवत्त्वम्। अगरुधूपस्य गन्धोऽस्त्येषामिति तथा। एकतः व्यक्तहेमरशनैः। नितम्बैकदेशे व्यक्ता हेमरशना यत्र। व्यक्तत्वञ्च वसनानां शैथिल्यात्। शैथिल्यञ्च तेषामुपश्लेषरसभूयिष्ठत्वकृतम्॥

**अर्पितस्तिमितदीपदृष्टयो गर्भवेश्मसु निवातकुक्षिषु।**
**तस्य सर्वसुरतान्तरक्षमाः साक्षितां शिशिररात्रयो ययुः॥**

**प्रका**—शिशिर आह—अर्पितेति। निवातत्वाद्दीपानां स्तिमितत्वम्। कुक्षिशब्दो लाक्षणिकोऽभ्यन्तरार्थः। सर्वसुरतान्तरक्षमाः समस्तसुरतभेदप्रयोगयोग्याः। शिशिरे तापस्वेदाद्यभावात्समानि विषमाणि च रतानि प्रयोक्तुं शक्यानीति भावः। उक्तञ्च वाहटेन—"सेवेत कामतः कामं तृप्तो वाजीकृतो हिमे" इति। परिजनमप्युत्सार्य प्रियाभिः सह गर्भवेश्मसु यथाकामं विहरतस्तस्य शिशिररात्रयस्साक्षित्वं प्रापुरिवेत्युत्प्रेक्षा। अर्पितस्तिमितदीपदृष्टय इति च तदङ्गम्। तया च साक्ष्यन्तरराहित्यं द्योत्यते। तेन च सुरतप्रबन्धः॥

**पदा**—शैशिरं वृत्तमाह—अर्पितेति॥ सर्वसुरतान्तरक्षमाः शिशिररात्रयः गर्भवेश्मसु तस्य साक्षितां ययुः। सर्वेषां सुरतान्तराणां सुरतभेदानां क्षमाः योग्याः। शिशिरकाले हि नायकयोः स्वेदाद्यभावाद्वात्स्यायनोक्तानि समानि विषमाणि च सुरतानि प्रयोक्तुं शक्यन्ते। वाहटेनापि तथैवोक्तम्—"सेवेत कामतः कामं तृप्तो वाजीकृतो हिमे" इति। गर्भवेश्मसु वेश्मनां गर्भेषु अभ्यन्तरेष्वित्यर्थः। तस्य साक्षितां ययुः सुरतसाक्षितां ययुः। द्योतकशून्येयमुत्प्रेक्षा। उत्प्रेक्षया च साक्ष्यन्तराभावो द्योत्यते। तेन च सुरतप्रबन्धः।

अर्पितः न्यस्तः स्तिमितः निश्चलः दीप एव दृष्टिर्याभिः। साक्षिणा हि साव-धानेन भवितव्यम्। दीपानां निश्चलत्वे हेतुमाह--निवातकुक्षिष्विति। निवाता वातरहिताः कुक्षयोऽन्तर्भागा येषाम्। परिजनमपि निस्सार्य वल्लभाभिस्सह गृहाभ्यन्तरे विहरतस्तस्य रात्रय एव साक्षितां प्रापुरित्यर्थः ॥

दक्षिणेन पवनेन सम्भृतं
प्रेक्ष्य चूतकुसुमं सपल्लवम्।
अन्वनैषुरवकीर्णविग्रहा-[1]
स्तं दुरुत्सहवियोगमङ्गनाः ॥ ४३ ॥

प्रका—वसन्त आह---दक्षिणेनेति॥ अवकीर्णविग्रहाः त्यक्तविरोधाः। चूतकुसुमदर्शनेन तासां तद्वियोगासहत्वम्, तेन विग्रहत्यागः, ततश्च स्वयमनुनय इति कार्यक्रमः। अत्र दक्षिणस्य पवनस्य विदग्धसुहृद्व्यवहारप्रतीतिः॥

पदा—वसन्तसम्भोगमाह – दक्षिणेनेति॥ अङ्गनाः दक्षिणेन पवनेन सम्भृतं सपल्लवं चूतकुसुमं प्रेक्ष्य अवकीर्णविग्रहाः तम् अन्वनैषुः। सम्भृतं सम्पादितम्। अवकीर्णः परित्यक्तो विग्रहो विरोधो याभिः। अन्वनैषुः अनुनीतवत्यः। दुरुत्सहः दुस्सहः वियोगो यस्य। अत्र वसन्तागमनस्य कार्यं दक्षिणपवनागमः, तत्कार्यं चूतकुसुमाद्युत्पत्तिः, तद्दर्शनस्य कार्यं तासां तद्वियोगासहत्वम्, तत्कार्यं स्वयमेवानुसरणमिति कार्यक्रमः। प्रतीयते दक्षिणपवने विदग्धसुहृद्-व्यवहारश्च॥

ताः स्वमङ्कमधिरोप्य डोळया
प्रेङ्खयन् परिजनापविद्धया।
मुक्तरज्जु निबिडं भयच्छलात्
कण्ठबन्धनमवाप बाहुभिः ॥ ४४ ॥

प्रका—ता इति॥ प्रेङ्खयन् डोळयन्। परिजनेनापविद्धया प्रेरितया। मुक्तरज्जु बन्धनक्रियाविशेषणम्। भयच्छलात् पतनभयं व्याजीकृत्य॥

पदा – इत्थं वल्लभाभिः स्वयमेवानुनीतस्य वल्लभस्य तासाञ्च वृत्तमाह—ता इति॥ ताः स्वयम् अङ्कम् अधिरोप्य परिजनापविद्धया डोळया प्रेङ्खयन् सः।

---

1 धूल।

भयच्छलात् मुक्तरज्जु बाहुभिः निबिडं कण्ठबन्धनम् अवाप। परिजनेन अपविद्धया प्रेरितया प्रेङ्खयन् डोळयन् भयच्छलात् पतनभयं व्याजीकृत्य। मुक्तरज्जु बन्धनक्रियाविशेषणमिदम्। बाहुभिः कण्ठबन्धनम् आलिङ्गनम्। निबिड मालिङ्गनमवाप। अयं हि परमो लाभ इति भावः॥

तं पयोधरनिषिक्तचन्दनै-
मौक्तिकग्रथितचारुभूषणैः।
ग्रीष्मवेषविधिभिस्सिषेविरे
श्रोणिलम्बिमणिमेखलैः प्रियाः ॥ ४५ ॥

**प्रका**—ग्रीष्म आह—तमिति॥ वेषविधिभिः आकल्परचनाभिरुप-लक्षिताः। मौक्तिकैर्ग्रथितानि रचितानि चारूणि च भूषणानि वलयाङ्गदादीनि यत्र। श्रोण्यां लम्बिन्यो न तु निबिडबद्धा मेखलाः स्वेदभयाद्यत्र॥

**पदा**—ग्रीष्मसम्भोगमाह—तमिति॥ प्रियाः ग्रीष्मवेषविधिभिः तं सिषेविरे। ग्रीष्मोचितैर्वेषविधिभिः आकल्परचनाभिरुपलक्षितास्सत्यः। तानेव वेषविधीनाह—पयोधरेत्यादिना। पयोधरयोर्निषिक्तं चर्चितं चन्दनं यत्र। अत्र निषिक्तमित्यनेन हिमाम्बुभिरार्द्रीकृतत्वं ध्वनितम्। मौक्तिकः ग्रथितानि चारूणि च भूषणानि वलयाङ्गदादीनि यत्र। श्रोण्यां लम्बिन्यः स्वेदभयेन विश्लथबन्धत्वाल्लम्बनशीला मणिमेखला यत्र। मौक्तिकानां शीतळत्वं प्रसिद्धं "मुक्ताहारं प्रियतममुं चित्ततापोपशान्त्यै मुग्धे धेहि स्तनकलशयोः" इत्यादिषु॥

यत्स भग्नसहकारमासवं रक्तपाटलसमागतं पपौ।
तेन तस्य मधुनिर्गमात् कृशश्चित्तयोनिरभवत् पुनर्नवः॥ ४६ ॥

**प्रका**---यदिति॥ मधुनिर्गमात् वसन्तात्ययात् कृशः जीर्णः॥

**पदा**—यदिति॥ सः भग्नसहकारं रक्तपाटलसमागतम् आसवं पपौ। यत् तेन तस्य मधुनिर्गमात् कृशः चित्तयोनिः पुनः नवः अभवत्। भग्नः सहकारो यस्मिन्। सभग्नसहकारमिति वा पाठः। भग्नेन छिन्नेन सहकारेण चूतकुसुमेन

1. ल। 2 म।

सहितमित्यर्थः। रक्तेन पाटलेन पाटलकुसुमेन समागतं संयुक्तम्। वसन्ते हि चूतकुसुमसहितमेव मद्यं कामिनीजनेन पीयते। निदाघे तु पाटलकुसुमचूत-कुसुमाभ्यां सहितमिति निदाघस्य विशेषः। तदुक्तं कुशसर्गे—"मनोज्ञगन्धं सहकारभङ्गं पुराणशीधुं नवपाटलञ्च" इति। मधुनिर्गमात् वसन्तात्ययात्। कृशः हीनबलः। नवः उद्यद्बलः॥

एवमिन्द्रियसुखानि निर्विशन्नन्यकार्यविमुखस्स पार्थिवः।
आत्मलक्षणनिवेदितानृतूनत्यवाहयदनङ्गवाहितः ॥ ४७ ॥

प्रका—उपसंहरति—एवमिति॥ इन्द्रियसुखानि शब्दादिसुखानि। आत्मलक्षणनिवेदितान् कुटजधारणादिभिः प्रकाशितान्। अनङ्गेन वाहितः प्रेरितः। ऋतून्, प्रतिसंवत्सरमिति शेषः॥

पदा—क्रीडामुपसंहरति—एवमिति॥ इन्द्रियसुखानि निर्विशन् अन्य-कार्यविमुखः सः पार्थिवः ऋतून् अत्यवाहयत्। इन्द्रियसुखानि शब्दादिसुखानि। अन्येभ्यः प्रजापालनादिभ्योऽपि विमुखः परावृत्तः। ऋतून्, प्रतिसंवत्सरं जायमाना-निति शेषः। एवमेव बहवः संवत्सरा गता इति भावः। यथाह कुमारसम्भवे—"शतमगमदृतूनां साधमेका निशेव" इति। चक्रनेमिक्रमेण प्रवर्तमाना ऋत-वोऽपि न तेन स्वरूपतो विज्ञाता इत्याह—आत्मलक्षणनिवेदितानिति। आत्मना-मृतुस्वरूपाणां लक्षणेन स्त्रीजनकृतेन कुटजधारणादिना चिह्नेन निवेदितान् ज्ञापि-तान्। कालानवगमे हेतुमाह—अनङ्गवाहित इति॥ अनङ्गेन वाहितः प्रेरितः॥

तं प्रमत्तमपि न प्रभावतः शेकुराक्रमितुमन्यपार्थिवाः।
आमयस्तु रतिरागसम्भवो दक्षशाप इव चन्द्रमक्षिणोत् ॥ ४८ ॥

प्रका—एवं प्रमत्ते राजन्यनर्थो नासीदित्याह—तमिति॥ प्रभावतः प्रभुशक्तेर्हेतोः। किं सर्वथा नानर्थ इत्यत्राह—आमयस्त्विति। रतिरागात् सम्भवो यस्य। राजयक्ष्मेत्यर्थः। दक्षशाप इति। पुरा किल रोहिणीसक्तया अन्यासु भार्यासु विमुखं चन्द्रं तासां पिता दक्षश्शशाप क्षयीभूया इति। अक्षिणोत् अक्षपयत्॥

**पदा**—इत्थं प्रमत्तस्य भोगमात्रसक्तस्य राज्ञः पराभिभवो नासीदित्याह—तमिति ॥ अन्यपार्थिवाः प्रमत्तमपि तं प्रभावतः आक्रमितुं न शेकुः। प्रभावतः प्रभुशक्तेरेव हेतोः। आक्रमितुं अभिभवितुम्। पराभिभव एव केवलं नाभूदित्याह—आमयस्त्वित्यादिना। रतिरागसम्भवः आमयः तु अक्षिणोत्। तमित्यनुषज्यते। रतिरागसम्भवः आमयो राजयक्ष्मा। अत्र वाहटः—"अनेकरोगानुगतो बहुरोगपुरोगमः। राजयक्ष्मा क्षयश्शोषो रोगराडिति च स्मृतः॥ साहसं वेगसंरोधश्शुक्रौजः स्नेहसंक्षयः। अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः॥" इति। अक्षिणोत् क्षपयामास। दक्षशापः चन्द्रमिव। "बभुवुः किल दक्षस्य बह्व्यश्चारुतरास्सुताः। अष्टाविंशत्सुतास्तासु दत्ताः कुमुदबन्धवे॥ अश्विन्याद्यास्ततोऽसौ तु रोहिणीसक्तमानसः। अन्यासु विमुखो जातो दक्षस्तासां पिता ततः॥ शशाप त्वं क्षयीभूया इति चन्द्रं रुषा ज्वलन्। ततस्स परिभूतोऽभूदोषधीनां पतिः क्षयैः॥" इति श्रीमहाभारतप्रसिद्धायाः कथायास्संक्षेपः॥

दृष्टदोषमपि तन्न[1] चात्यजत्
सङ्गवस्तु भिषजामनाश्रवः।
स्वादुभिस्तु विषयैर्हृतस्ततो
दुःखमिन्द्रियगणो हि[2] वार्यते ॥ ४९ ॥

**प्रका**—दृष्टेति॥ दोषो व्याधिः। सङ्गवस्तु स्त्रीमद्यादि। अनाश्रवः अविधेयः। "वचने स्थित आश्रवः" इति सिंहः। भिषग्भिर्वारितोपीत्यर्थः। ततः विषयेभ्यः। दुःखं दुःखेन। वार्यते। प्रत्याहर्तुं दुष्कर इत्यर्थः॥

**पदा**—दृष्टेति॥ सः दृष्टदोषम् अपि तत् सङ्गवस्तु न अत्यजच्च। अत्र स इति कर्तृपदमध्याहार्यम्। तन्न सोऽत्यजदिति वा पाठः। दृष्टो व्याधिरूपो दोषो यत्र। सङ्गवस्तु स्त्रीमद्यादि। भिषजाम् अनाश्रवः अविधेयः। "वचने स्थित आश्रवः" इति सिंहः। भिषग्भिः स्मारितो वारितोऽपि नात्यजदित्यर्थः। अत्र हेतुमाह—इन्द्रियगणः स्वादुभिः विषयैः हृतः तु दुःखं, हि ततः वार्यते। विषयाणां स्वादुत्वं प्रत्याहरणस्य दुष्करत्वे हेतुः। दुःखं, दुःखेनेत्यर्थः। ततः विषयेभ्यः। "प्रसरं न लभन्ते हि यावत् क्वचन कर्कटाः। तावदेव निराकार्याः पिशाचा वा स्वगोपुरे" इति न्यायोऽनेन दर्शितः॥

---

1 सो। 2 नि।

तस्य पाण्डुवदनाल्पभूषणा सावलम्बगमना मृदुस्वना।
राजयक्ष्मपरिहाणिराययौ कामयानसमवस्थया तुलाम् ॥ ५० ॥

प्रका—तस्येति ॥ अल्पभूषणत्वं निस्सहत्वात्। राजयक्ष्मकृता परिहाणिर्देहबलक्षयः। कामयानस्य समवस्थया तुलां ययावित्यन्वयः। कामयानोऽत्र वियोगी विवक्षितः। तदवस्थाप्येतद्धर्मयोगिनी भवति। "अनित्यमागमशासनम्" इति मुमागमाभावः। "कामयानशब्दस्सिद्धोऽनादिश्च" इति वामनः। उपमया च मीलितालङ्कारो ध्वन्यते। "समेन वस्तुना वस्त्वन्तरतिरस्कारो मीलितम्"। समवस्थया परिहाणेस्तिरस्कारः॥

पदा—तस्येति ॥ तस्य राजयक्ष्मपरिहाणिः कामयानसमवस्थया तुलाम् आययौ। राजयक्ष्मकृता परिहाणिः देहबलहानिः। कामयानपदेनात्र वियोगी विवक्षितः। तस्यावस्थया सादृश्यं जगाम। "अनित्यमागमशासनम्" इति न्यायेनागमशासनस्यानित्यत्वात् कामयानपदे मुमागमाभावः। "कामयानशब्दस्सिद्धोऽनादिश्च" इति वामनः। तुलाशब्दयोगे तृतीयाप्रयोगोपपत्तिः "तुलां यदा रोहति दन्तवाससा" इत्यत्र द्रष्टव्या। साधारणं धर्ममाह—पाण्डुवदनेत्यादिना। शरीरसादेन धर्तुमशक्यत्वादल्पभूषणत्वम्। सावलम्बम् अवलम्बनसहितं गमनं यस्याः। स्वनस्य मृदुत्वं शरीरसादादेव। उपमय मीलितालङ्कारश्च ध्वन्यते, कामयानावस्थया परिहाणेस्तिरस्कारात्। "समेन वस्तुना वस्त्वन्तरतिरस्कारो हि मीलितम्" ॥

व्योम पश्चिमकलास्थितेन्दुवत्पङ्कशेषमिव घर्मपल्वलम्।
राज्ञि तत्कुलमभूत् क्षयातुरे वामनार्चिरिव दीपभाजनम् ॥ ५१ ॥

प्रका—व्योमेति ॥ पश्चिमकलास्थितेन्दु कृष्णचतुर्दशीकलास्थितः इन्दुः यस्मिन्। वत् इव। "वद्वा[2] यथा तथैवैवं साम्ये" इति सिंहः। दण्डिनाप्युक्तम्—"इववद्वा" इत्यादि। कुलं गृहम्। निर्वास्यदर्चिर्वामनं भवति। तथाभूतराजकं तद्राजकुलं तथाभूतेन्द्वादिकं तत्तदिवासीदित्यर्थः। अत्र प्रथमेनोपमानेन शून्यप्रायताप्रतिभानं ध्वन्यते। द्वितीयेनानभिगम्यत्वम्। तृतीयेन हतशोभत्वमपि ॥

---

1 वा। 2 व वा इत्यपि कोशपाठः। अत एव 'मणीवोष्ट्रस्य लम्बेते' इत्यत्र वशब्दो वाशब्दो वा बोध्यः इति कौमुदी[?]।

**पदा**—व्योमेति॥ राज्ञि क्षयातुरे तत्कुलं पश्चिमकलास्थितेन्दु व्योम वत् पङ्कशेषं घर्मपल्वलम् इव वामनार्चिः दीपभाजनम् इव अभूत्। चकारोऽर्थाद्द्रष्टव्यः। क्षयेण राजयक्ष्मणा आतुरे पीडिते सति। तत्कुलं राजकुलम्। वदिति साम्यवाचकमव्ययम्। "वद्वा यथा तथैवैवं साम्ये" इति सिंहः। दण्डिनाप्युक्तम् —"इववद्वा" इत्यादि। पश्चिमकलायां कृष्णपक्षचतुर्दशीकलायां स्थितो वर्तमानः इन्दुर्यस्मिन् तथाविधमाकाशमिवाभूत्। अनेनोपमानेन शून्यप्रायताप्रतीतिर्ध्वन्यते। पङ्कशेषघर्मपल्वलोपमया अभिगम्यत्वाभावो ध्वन्यते। आसन्ननिर्वाणत्वाद्वामनमर्चिर्यस्य तथाविधदीपपात्रोपमानेन शोभाराहित्यं ध्वन्यते॥

गूढमेषु[1] दिवसेषु पार्थिवः
कर्म साधयति पुत्रजन्मने।
इत्यदर्शितरुजोऽस्य मन्त्रिण-
श्शश्वदूचुरघशङ्किनीः प्रजाः ॥ ५२ ॥

**प्रका**—एवमवस्थे राजन्यमात्यानुष्ठेयं राज्यप्रतिसन्धानाख्यप्रकरणार्थानुष्ठानमाह—गूढमिति॥ एष्विति यक्ष्माभिसन्नराजका दिवसा निर्दिश्यन्ते। दिवसेषु, न तु मासेषु। अनेनाचिरकालभाविपारम्पर्यापगमहेतुकं राज्ञो दर्शनमिति द्योत्यते। इति एवम्भूतया व्याजोक्त्या। अदर्शितरुजः गूहितामयाः। शश्वत् मुहुः। अघशङ्किनीः राजव्यसनं शङ्कमानाः। प्रजाः बाह्यं जनम्। अत्र कौटल्यः—"राजव्यसनमेवममात्यः प्रतिकुर्वीत। प्रागेव मरणबाधभयाद्राज्ञः प्रियहितोपग्रहेण मासद्विमासान्तरं दर्शनं स्थापयेत्। देशपीडापगमममित्रापगममायुष्यं पुत्रीयं वा कर्म राजा साधयतीत्यपदेशेनेत्यादि॥

**पदा**—एवम्भूते राजनि कौटल्येन राज्यप्रतिसन्धानप्रकरणे प्रतिपादितममात्यादिभिरनुष्ठेयमर्थमाह—गूढमिति॥ पार्थिवः एषु दिवसेषु पुत्रजन्मने गूढं कर्म साधयति। अस्य मन्त्रिणः इति अदर्शितरुजः अघशङ्किनीः प्रजाः शश्वत् ऊचुः। एषु दिवसेषु राजयक्ष्माभिभूतराजकेषु दिवसेष्वित्यर्थः। गूढमिति साधनक्रियाविशेषणम्। तपश्चरणस्य निर्जनप्रदेशेषु कर्तव्यत्वाद्गूढमित्युक्तम्। इत्यदर्शितरुजः एवम्भूतया व्याजोक्त्या अदर्शिता गूहिता रुक् आमयो यैः।

1 बाढमेष इति मल्लिनाथसम्मतः पाठः। बाढमित्यस्य सत्यमिति तद्व्याख्या।

अघशङ्किनीः अपायशङ्किनीः। "अपायदर्शी स्नेहः" इति हि न्यायः। प्रजाः वाह्यजनानित्यर्थः। शश्वत् मुहुः। अत्र प्रजानां बहुत्वात् मुहुर्मुहुः कथनम्। अत्र कौटल्यः, "राजव्यसनमेवममात्यः प्रतिकुर्वीत" इत्यारभ्य "राजा सम्प्रति मित्रपीडापगममित्रापगममायुष्यं पुत्रीयं वा कर्म साधयतीत्यादिव्यपदेशेन" इति।

स त्वनेकवनितासखोपि सन्
पावनीमनवलोक्य सन्ततिम्।
वैद्ययत्नपरिभाविनं गदं
न प्रदीप इव वायुमत्यगात् ॥ ५३ ॥

**प्रका**—स त्विति॥ पावनीम् ऋणमोचिनीम्। वैद्ययत्नपरिभाविनम्, तदसाध्यमित्यर्थः। न अत्यगात् अतिक्रमितुं नाशकत्। मृतवानित्यर्थः॥

**पदा**—स त्विति॥ सः तु अनेकवनितासखः सन् अपि पावनीं सन्ततिम् अनवलोक्य वैद्ययत्नपरिभाविनं गदं न अत्यगात्। पावनीम् उभयकुलपरिशुद्धाम्। ऋणमोचनक्षमामित्यर्थः। वैद्यानां यत्नं परिभावितुमधःकर्तुं शीलमस्येति तथा। न अत्यगात् नातिक्रम्य गतवान्। मृतवानेवेत्यर्थः। अत्रोपमामाह—प्रदीपो वायुमिवेति। न हि प्रदीपो महावातमतिक्रम्य ज्वलति॥

तं गृहोपवन एव सङ्गताः
पश्चिमक्रतुविदा पुरोधसा।
रोगशान्तिमपदिश्य मन्त्रिणः
सम्भृते शिखिनि गूढमादधुः ॥ ५४ ॥

**प्रका**—तमिति॥ पश्चिमक्रतुः अन्तिमसंस्कारः। पुरोधसा सङ्गताः मन्त्रिणः तं गृहोपवन एव रोगशान्तिमपदिश्य सम्भृते शिखिनि गूढम् आदधुरित्यन्वयः। गूढमिति। "कुमारमभिषिक्तमेव दर्शयेत्" इति वचनात्॥

**पदा**—तमिति॥ मन्त्रिणः पुरोधसा सङ्गताः तं पुरोपवने एव रोगशान्तिम् अपदिश्य सम्भृते शिखिनि गूढम् आदधुः। पुरोधसा वसिष्ठेन। स्वाश्रमादेव तद्वृत्तान्तमवधार्य शिष्यैस्सहागतेनेति शेषः। सम्भृते सम्पादिते। रन्ध्रान्वेषणदक्षाणां द्विषामवगमाभावाय गूढमित्युक्तम्। अत्र कौटल्यः, "कुमारमभिषिक्तमेव दर्शयेत्" इति। पश्चिमक्रतुः अन्तिमसंस्कारः

तं वेत्तीति तथा। राजायमिदानीं रोगी, ततस्तच्छान्त्यर्थं महान् होमः कर्तव्य इति व्याजोक्त्या सन्धुक्षिते वह्नौ तं निदधुरित्यर्थः ॥

तैः कृतप्रकृतिमुख्यसंग्रहै-
राशु तस्य सहधर्मचारिणी ।
साधुदृष्टशुभगर्भलक्षणा
प्रत्यपद्यत नराधिपश्रियम् ॥ ५५ ॥

**प्रका**—एकैश्वर्यप्रकरणार्थमाह—तैरिति ॥ कृतः प्रकृतिषु मुख्यानां संग्रहः स्वीकारो यैः। आशु, परेषामवकाशलाभाभावाय। साधु सम्यक् दृष्टानि शुभानि गुणवत्पुमपत्यसूचकानि गर्भलक्षणानि यस्याः। तैः साधुदृष्टशुभगर्भलक्षणा तस्य सहधर्मचारिणी नराधिपश्रियम् आशु प्रत्यपद्यत इत्यन्वयः। प्रतिपत्तिः प्राप्तिः। अत्र राज्ञी यद्यपि प्रयोज्यकर्त्री, मन्त्रिणस्तु प्रयोजकाः, तथापि प्रयोज्यत्वं न विवक्षितं पालनशक्तिद्योतनाय। अत्र कौटल्यः, "राजपुत्रमात्मसम्पन्नं राज्ये स्थापयेत्। सम्पन्नाभावे व्यसनिनं कुमारं राजकन्यां गर्भिणीं देवीं वा पुरस्कृत्य महामात्रान् सन्निपात्य ब्रूयात्—अयं वो निक्षेपः। पितरमस्यावेक्षध्वम्। स त्वाभिजनमात्मानश्च। ध्वजमात्रोऽयम्। भवन्त एव स्वामिनः" इत्युपक्रम्य "कुमारं राजकन्यां गर्भिणीं देवीं वाधिकुर्वीत" इति ॥

**पदा**—अथैकैश्वर्यप्रकरणोक्तमनुष्ठानमाह—तैरिति ॥ अथ तस्य सहधर्मचारिणी आशु नराधिपश्रियं प्रत्यपद्यत। सहधर्मचारिणी भार्या। नराधिपश्रियं राजलक्ष्मीम्। प्रत्यपद्यत प्राप्ताभूत्। परेषामवकाशलाभाभावार्थमाश्वित्युक्तम्। कृतप्रकृतिमुख्यसंग्रहैः। तैः साधुदृष्टशुभगर्भलक्षणा। कृतः प्रकृतिषु मुख्यानां प्रधानभूतानां संग्रहः स्वीकारो यैः। "राजकन्यां गर्भिणीं देवीं वा पुरस्कृत्य महामात्रान् सन्निपात्य ब्रूयात्" इत्यारभ्य "कुमारं राजकन्यां गर्भिणीं देवीं वाधिकुर्वीत" इति कौटल्योक्तः प्रकारोऽनेन दर्शितः। साधु सम्यक् दृष्टानि शुभानि गुणवत्पुमपत्यसूचकानि गर्भलक्षणानि यस्याः। अत्र राज्ञी यद्यपि प्रयोज्यकर्त्री राज्यप्राप्तौ, प्रयोज्यत्वं न विवक्षितम्। पालने स्वातन्त्र्यसूचनञ्चास्य प्रयोजनम्॥

तस्यास्तथाविधनरेन्द्रविपत्तिशोका-
दुष्णैर्विलोचनजलैः प्रथमाभितप्तः।
निर्वापितः कनककुम्भमुखोज्झितेन
वंशाभिषेकविधिना शिशिरेण गर्भः ॥ ५६ ॥

**प्रका**—तत्प्रकारमाह—तस्या इति ॥ निर्वापितः शीतलीकृतः । वंशाभिषेकविधिना वंशक्रमागताभिषेकजलेनेत्यर्थः । अथवा जलधर्मावभिषेकविधावारोपितौ ॥

**पदा**—राज्ञ्या राजलक्ष्मीप्राप्तिप्रकारमेव भङ्ग्यन्तरेणाह—तस्या इति ॥ तथाविधनरेन्द्रविपत्तिशोकात् उष्णैः विलोचनजलैः प्रथमाभितप्तः तस्याः गर्भः कनककुम्भमुखोज्झितेन शिशिरेण वंशाभिषेकविधिना निर्वापितः । तथाविधस्य लोकोत्तरानुरागशालिन इत्यर्थः । विपत् विनाशः तया यः शोकः तस्माद्धेतोः उष्णैः । शोकजं हि विलोचनजलमुष्णं भवति । कनकमयस्य कुम्भस्य मुखादुज्झितेन गलितेन शिशिरेण शीतलेन । वंशक्रमागतोऽभिषेकविधिर्वंशाभिषेकविधिः । निर्वापितः शीतलीकृतः । अत्र कनककुम्भमुखोज्झितत्वं शिशिरत्वञ्च जलधर्मौ वंशाभिषेकविधावारोपितौ । निर्वापणसामर्थ्यन्तु जलद्वारेणाभिषेकविधावप्युपपद्यते ॥

तं भावाय प्रसवसमयाकाङ्क्षिणीनां प्रजाना-
मन्तर्गूढं क्षितिरिव नभोबीजमुष्टिं दधाना ।
मौलैस्सार्धं स्थविरसचिवैर्हेमसिंहासनस्था
राज्ञी राज्यं विधिवदशिषद्भर्तुरव्याहताज्ञा ॥ ५७ ॥

**प्रका**—तमिति ॥ भावाय भूतये ॥ प्रसवो गर्भमोचनम् । बीजमुष्टिपक्षे फलम् । "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इति सिंहः । नभः अमावास्युप्ता बीजमुष्टिः । जलादिसम्पत्त्या न मोघो भवतीति नभश्शब्द उपात्तः । मौलैः क्रमागतैः । स्थविरसचिवैरिति, "आशीतिकाः पुरुषाः पञ्चाशत्कास्त्रियश्च" इति निशान्तप्रणिधावुक्तत्वात् । प्रसवसमयाकाङ्क्षिणीनां प्रजानां भावाय अन्तर्गूढं नभोबीजमुष्टिं क्षितिरिव तं गर्भं दधाना हेमसिंहासनस्था अव्याहताज्ञा च राज्ञी मौलैः स्थविरसचिवैः सार्धं भर्तू राज्यं विधिवदशिषदित्यन्वयः । राज्यमशिषदित्यनेनात्राङ्गिभूतवीररसस्य प्रबन्धस्य जगत्परिपालनोत्साहात्मके वीर एवोपसंहारः कृतः । तस्य च ये विभावभूताः प्रतापादयस्तेषु अव्याहताज्ञेति प्रताप उक्तः । हेमसिंहासनस्थेत्यध्यवसायो विषयादौ, स्थविरसचिवैस्सार्धमिति वितर्कयौ, भर्तृराज्यमिति यावत्कुमारोदयं न्यासबुद्ध्या राज्य-

स्वीकार इति द्योतयति । शुभं गर्भं दधाना राज्ञी राज्यमशिषदित्यद्भुतः । स च निर्वहणे कार्यः, "कुर्यान्निर्वहणेऽद्भुतम्" इति वचनात् ॥

इत्थं विचित्रसरसेऽत्र मया प्रबन्धे सन्दर्शितं विविधकाव्यनयप्रपञ्चम् ।
आलोच्य साधु परिबृंहितशेमुषीकाः सर्वत्र काव्यविषये विहरन्तु सन्तः ॥

एतत्प्रबन्धविवृतिव्यपदेशतो यच्छब्दार्थतत्त्वविततप्रविवेचनं नः ।
तत्सर्वमस्तु पदपङ्कजयोस्सपर्या सर्वात्मनस्सकललोकगुरोश्शिवस्य ॥

**इति श्रीकण्ठपादपवित्रीकृतस्यारुणगिरिनाथस्य कृतौ रघुवंशप्रकाशिकायामेकोनविंशः सर्गः ॥**

**पदा**—तमिति ॥ राज्ञी हेमसिंहासनस्था मौलैः स्थविरसचिवैः सार्धं भर्तुः राज्यं विधिवत् अशिषत् । अत्र हेमसिंहासनस्थेत्यनेन विषादराहित्यं सावधानत्वञ्च दर्शितम् । मौलैः कुलक्रमागतैः स्थविरैः वयोवृद्धैश्च सचिवैः सार्धम् । "आशीतिकाः पुरुषाः पञ्चाशत्काः स्त्रियश्च" इति निशान्तप्रणिधौ कौटल्येनोक्तत्वादित्थमुक्तम् । अनेन कृतकः स्वाभाविकश्च विनयोऽस्या दर्शितः । भर्तू राज्यमित्यनेन कुमारोदयपर्यन्तं न्यासबुद्ध्यैव राज्यस्वीकारः, न भोग्यबुद्ध्या इति द्योत्यते । राज्यमशिषदित्यनेन प्रबन्धाङ्गिभूतस्य वीररसस्य जगत्परिपालनोत्साहात्मके वीर एवोपसंहारो दर्शित इत्यवगन्तव्यम् । इत्थं लोकोपकारपराया राज्ञ्याः प्रकारान्तरेणापि लोकोपकारपरत्वमाह— नभोबीजमुष्टिं क्षितिः इव तं दधानेति । मुष्टिपरिमितं बीजं बीजमुष्टिः । मुष्टिभिः परिगृहीतं हि बीजं क्षितौ क्षिप्यत इति तत्प्रकारद्योतनार्थं मुष्टिपदोपादानम् । तमिति । तच्छब्देन पूर्वश्लोकप्रकृतो गर्भः परामृश्यते । नभोमास्युप्तं हि बीजं जलादिसम्पत्त्या महाफलं भवेदिति नभश्शब्दो-पादानम् । तदुपमया गर्भस्यापि महाफलत्वं लोकोपकारपरत्वमित्यादयो ध्वन्यन्ते । तथाविधक्षित्युपमया राज्ञ्या लोकोपकारपरत्वमुक्तं भवति । अत एवोक्तं प्रसवसमयाकाङ्क्षिणीनां प्रजानां भावायेति । प्रसवसमयो गर्भमोचनसमयः । बीजमुष्टिपक्षे फलसमयः । "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इति सिंहः । भावाय भूतये । गर्भं बीजमुष्टिञ्च विशिनष्टि—अन्तर्गूढमिति । जठरान्तर्भागे मृत्तिकान्तर्भागे च गूढम् । अनेन विशेषणेन गर्भस्संसाध्यभावो

द्योत्यते । बीजस्य तु सुरक्षितत्वम् । अव्याहता अप्रतिहता आज्ञा यस्याः । अनेन प्रतापादय उक्ताः । एवम्भूता राज्ञी दुर्भरं गर्भं दधाना राज्यं विधिवदशिषत् । चतुस्समुद्रपर्यन्तमव्याहताज्ञा च जाता इत्यनेनाद्भुतरसः प्रतिपादितः । स च निर्वहणे कार्यः, "कुर्यान्निर्वहणेऽद्भुतम्" इति वचनात् ॥

इति श्रीकृष्णप्रियशिष्यस्य नारायणस्य कृतौ
रघुवंशव्याख्यायां पदार्थदीपिकायाम्
एकोनविंशः सर्गः ॥

---

धीधृक्सत्काव्यस्रष्टाविति कलिदिवसे सोमतत्पुत्रसर्पै-
स्सार्धं षष्ठे तुलास्थे सति दिवसकरे वृश्चिकस्थे तु भौमे ।
देवाचार्येपि लग्ने वृषजुषि दनुजानाङ्गुरौ सिंहलीने
मीने लीनेऽर्कपुत्रे सति च विवरणस्यास्य जातः प्रणेता ॥

---